॥ श्रीः ॥

# ॥ षेक्स्पयर्नाटककथावळी ॥

श्रीविजयनगरमहाराज संस्थापितांग्लेय कलाशाला-

गीर्वाणभाषाध्यापकेन

मेडेपल्लि वेङ्कटरमणाचार्येण विरचिता



चेन्नपुर्यां

वाविळ्ळ रामस्वामिशास्त्रुलु अण्ड् सन्स्

इत्येतैः प्रकटिता.

## ॥ कृतिसमर्पणश्लोकाः ॥

वांवेळ्ळान्वयदुग्धवार्धिशशिनं श्रीवेङ्कटेशाह्वयं
लोकस्तुत्यविनिर्मलोरुयशसं सत्पाण्डितीराजितम् ।
विद्वद्वर्यचयैकभोग्यविभवं दीनार्थिकल्पद्रुमं
श्रीशः पातु दिशंश्चिरायुरधिकां भूतिं तनोस्स्वस्थताम् ॥ १

पूर्वं षेक्स्पियराख्ययांग्लभुवि यो जातः कवीनां वृषा
तस्याशेषमनोऽनुरञ्जनपराण्युद्दीपनान्यात्मनः ।
नानाभावरसोज्ज्वलानि बहुधाह्यालोड्य सन्नाटका-
न्येका ल्याम्बभिधा लिलेख सुकथास्तेषां सुगद्यात्मना ॥ २

ल्याम्बाख्यशस्यविदुषीकृतसत्कथौघो
गीर्वाणगीर्षु च मया परिवर्तितोऽद्य ।
अस्त्यत्र चेत् स्खलितमादरभावयुक्ता-
स्संशोधयन्तु विबुधा इति मत्प्रतीक्षा ॥ ३

श्रीवेङ्कटेश्वर! बुधोत्तम! दुर्गतोऽहं
कां निष्कृतिं तव दिशामि महोपकर्तुः ।
एतत्कथावलिमुपायनमर्पयेयं
कार्पासतन्तुमिव चन्द्रमसे प्रमोदात् ॥ ४

## AN APPRECIATION



Messrs V. Ramaswamy Sastrulu & Sons are about to publish a version in Sanskrit of Lamb's "Tales from Shakespeare," written by a Pandit of the famous Vizianagaram College, named M. Venkata-ramana Acharya. At their request, I have read some pages in advance, and done so with pleasure and profit. The author has wisely avoided the ornate and difficult style of the classical models and adopted a simple narrative style, somewhat in keeping with that of the original. If I may venture an opinion, the standard of grammatical forms and compound words employed in the book makes it fit for study in college classes.

Mylapore,
*27th March, 1933.*

V. S. SRINIVASA SASTRI.

# FOREWORD.

I am asked to write an English Preface to this book, and I do so with pleasure Mr. V. Venkateswara Sastrulu of Messrs Vavilla Ramaswami Sastrulu & Sons, Madras, the well known publishers, deserves the thanks of lovers of Oriental literature for his great patronage of all Andhra scholars and enterprising ventures in the publication of Oriental books, not the least important of which being the present little work. And the author of this little work, M. R Ry, Medepalli Venkataramana Charyulu Garu, is, I think, best fitted to do such a rendering of the plots of Shakespeare's plays, largely based on " Lamb's Tales from Shakespeare " He has been the Chief Professor of Sanskrit in the Maharajah's College, Vijianagaram, for about forty-five years and has thus intimate knowledge of the needs and capacities of students taking up Sanskrit for critical studies in University Classes He has all along been also in close contact with Professors of Shakespearian Drama in the same college and has absorbed their ideas of critical appreciation That he should have done the rendering of Shakespeare's plots into Sanskrit prose in the evening of his life and the plenitude of his critical scholarship is a great advantage to Sanskrit studies, and he has now done this after publishing Andhra works in prose and verse characterised by highly learned and Sanscritised diction. Yet, open any page at random in this book and the prose reads quite smooth, urbane and yet lucid

This little book does another service, quite unwittingly It introduces our non-English-knowing Pandits to the plots of admittedly the greatest dramatist of the world, and, as " Lamb's Tales " is the original, in almost the language of Shakespeare, so far as it can be rendered into Sanskrit Our Pandits are thus introduced to the Shakespearian way of looking at men, manners and events If to this, the publishers encourage our revered author to add a companion volume on Shakespeare's characters, say based on Hudson and Mrs Jameson, they will have done a service to Sanskrit studies in modern times, which will last as long as "sun, moon and stars" do

I observe that no consistent method is here followed in the rendering of proper names. The same want of method is observable in Andhra renderings of Shakespeare's tales or works Possibly no such method is feasible. My own view in the matter is that all proper names should be merely transliterated but such mere transliterations may not fit into the euphonic structure of Sanskrit or classical Telugu prose

In conclusion, I offer my heartiest congratulations to both the author and the publishers on this little venture and trust that Indian Universities pursuing Sanskrit studies will erelong take advantage of it to introduce a little bit of modernism into their Oriental courses

VIZIANAGARAM 14—12—32 } B. SESHAGIRI RAO, M A., PH D, *Andhra Bharati Thirtha Pradhani*

## ॥ पीठिका ॥

विलियम् षेक्स्पियर् (William Shakespeare) नामवन्नामवाङ्मयप्रपंचे यत्र कुत्रापि न विद्यते। प्राचीनकालांधकार निरस्यन् होमर् (Homer) कविभास्कर उदियाय। स तत्कालिकमहाशूरापदानानि लोकोत्तरवर्णनानिपुणैः काव्यवचोगुंभैर्जगौ। तदनु कालक्रमेण परिक्षीणे होमर्कवियशसि विषादगंभीरभावनाभिः प्रभावोचितप्रीत्या तीक्ष्णविद्वेषेण, विविक्तरत्याचोपलक्षितो डेंटी (Dante) कविचंद्र उदहास्त। तस्मिन्नपि कियता कालेन कृतांतराहुणा कबळिते स्वर्गमृत्युनिरयद्वाराण्यपाघृणोन्मिल्टन् (Milton) महाशयः। तेन दृष्टास्स्वप्रालोके भूते भाविनि च न केनापि दृष्टाः। अपितु होमर्डांटीमिल्टन्कविपुंगवास्त्रयोप्यस्मद्धृदयगुहा चिरं नाध्यवात्सुः। षेक्स्पियर्कविरिव नासीद्व्यन्नस्मद्धावान्। मनस्तृप्तिं वा कर्तुं न शेकुः। षेक्स्पियर्कवेः कृतिषु तत्र तत्रातिप्रागल्भ्यजुष्टानि, अत्युत्कृष्टानि, विश्रुतपांडित्यावेदकानि, बुद्ध्यनारूढविषयाविविक्तभावगर्भाणि वाक्यानि दृश्यन्ते। समनुष्यस्वभावविवरणेऽद्वितीयः। वर्णनीयपात्राणा समदुःखसुखस्थितिः। सूक्ष्मदर्शी। मनुष्यजातिज्ञाने निस्तुलः। फिडियस् नाम्नोपि (Phidias) निपुणतरः प्रतिमाकारकः। रेफलाख्यादपि (Raphæl) सत्यतरश्चित्रकारः। सोयं कविप्रकांडो मनोहरे यावन्नदीतटास्थितस्ट्राट्फर्ड्ग्रामे (Strafford-on-Avon) 1564 वत्सरे एप्रिल्मासि जानिमलभत। 1616 संवत्सरे

एप्रिल्मासि संस्थितः । द्विपंचाशद्वत्सरकालं जिजीव । अयं महाकविस्सप्तविंशन्नाटकान्यन्यानि कानिचित्काव्यानि व्यरचयत् । सजन्मस्थानएव निधनमयासीत् । तस्य निरुपमानयशसा सर्वधरावलयं व्याप्तम् । तद्विरचितग्रन्थपठनं विदुषां महाभोगः । तत्कृतनाटकेषु अनुह्लादचरितम् (Hamlet) सुपर्वचरित्रम् (Macbeth) धर्मवर्मचरितम् (King Lear) उत्तालचरितम् (Othello) अत्यंतकुतूहलेनापठितवंतः पुरुषा लोके स्युरिति मंतुमपि न शक्नुमः । अस्य कवेस्सृष्टिभिर्यदि रिक्तीकृतस्तर्हि भावनाप्रपंचश्शून्यमिवाभाति । इदं भूवलयं सकृत्तेनालंकृतमिति तदप्यस्माभिरध्युष्यत इत्ययं नस्सजातीय इति मनुष्यैर्गर्वितैर्भवितव्यम् । कालरिड्जिकविवृषभः (Coleridge) षेक्स्पियर्कविं "अयुतमनस्क" इत्यभिदधौ । यतस्तेनाक्षुण्णामानसिकभावनाप्रकारानासन् । तस्योत्तमधैर्यं संपूर्णपराक्रमः, अनुरंजकसौजन्यात्परममृदुत्वात्सहजतया न न्यूनानि । तस्य शिल्पविज्ञानसमृद्धिस्तस्य करुणारससदृशी । इतरेषां सर्वेषा कवीनामयमेव धर्मोपदेष्टृत्वेऽग्रेसरः । अस्य नाटकेषु वर्णनीयपात्राणां कोपोद्रेकवर्णने यथा घोरपापमपि न विद्वेषणीयं महापातकमपि न गर्हणीयं भवति तथा वर्णितवान् । अमायिकं साधुवृत्तं परोपकारप्रयत्नश्च तस्य कृतिषु सर्वत्र प्रकाशतां गमितौ ।

तत्कृतानि नाटकानि त्रिधा विभक्तानि । सुखांतानि (Comedies) दुःखांतानि (Tragedies) चरित्राणिचेति (Histories) तेषु विंशतिनाटकानामेव कथा बालानां सुखबोधाय सुलभशैलीमनुसृत्य १८०६ संवत्सरे मेरील्यांबाख्यया

(Mary Lamb) ग्रंथकर्त्र्या वचनरूपेण रचिताः । मनोविनोदनकरीः एताः कथा आंग्लेयभाषानभिज्ञाः केवल गीर्वाणभाषाविशारदाः पंडिता अपि पठित्वा नंदंत्विति मनीषया अहं १८९९–१९०० वत्सरयोर्यथावकाशं गीर्वाणभाषायां यथाज्ञानमनुवादमकरवम् । तदारभ्य यावत्परुन्मया लिखितं तत्पुस्तकं पेटिकायाः कस्मिंश्चित्कोणे निदद्रौ ।

वेदशास्त्रपुराणेतिहासस्मृतिकाव्यनाटकालंकारादिबहुसंस्कृतग्रंथांस्तथाचांध्रप्रबंधांश्चामुद्रितान्नानादेशेभ्यस्संपाद्य पंडितैश्शोधयित्वा मुद्राप्य पामरजनानां दुर्बोधानां महाभारतरामायणादीनामांध्रवचनरूपेण प्रतिपदटीकारूपेण च विवरणानि पंडितैर्लेखयित्वा धनदानेन तान्परितोष्य विद्यार्थिनां धनसहायेन बहुळमुपकृतीर्विरचयन् धनसंपादनाद् ज्ञानसंवर्धनमेव गुरुतरप्रयोजनमिति निश्चिन्वन्नांध्रद्राविडदेशयोः प्रतिग्रामं प्रतिनगरं पंडितैः पामरैश्च "नास्ति तत्सदृशोऽन्यः पुमानिति" बहुधा तोष्टूयमानो महतीं कीर्तिं संचिन्वानोऽस्मन्मित्रं वाविळ्लान्वयवंशमुक्तामणिर्वेंकटेश्वरशास्त्रिसुधीमणिरस्य ग्रंथस्य मुद्रणे "ममावश्यं सहायं करिष्यति, कथं स मया नाभ्यर्थनीय" इत्युद्देशो ममादृष्टवशेन एकस्मिन् दिने मम मनसि पुस्फोर । तदुपरि तेभ्यो मत्प्रार्थनापत्रिकां प्राहिणवम् । विद्वदभिमानिनस्ते मत्पत्रिकाप्राप्तिसमनंतरमेव मत्प्रार्थनामंगीकृत्य "प्रेष्यतामकृतकालहरणं युष्मद्ग्रंथ" इति मामादिक्षन् । एकेन वत्सरेण ग्रंथमुद्रणं पूर्तिमगमत् ।

अस्मिन्ग्रन्थे आङ्ग्लेयसंज्ञापदानां केषांचिदक्षरसादृश्येन स्वरमैत्र्या सिद्धानि सांस्कृतिकरूपाणि दत्तानि । यथा ।

Caliban=कालभानुः । Antonio=अंतनयः । Venice= विनिशा । Desdemona=दोषदमना । Cymbeline=सिंह-बलः । Iago=अयागः इत्यादि । यत्र तादृशसादृश्यं न विद्यते तत्र पृथङ्नामानि कल्पितानि । यथा । King Lear=धर्म-वर्मा । Malcolm=सुमित्रः । Diana=नितंबवती । Bianca=कांतिमती । अन्यत्र तत्संज्ञाभिहितपात्रगुणदोषानु-सारतो नामानि विहितानि । यथा Goneril=गुणरिक्ता । Cordelia=सरळा । Lucentio=सुमित्रः ।

अज्ञातार्थानां केषांचिद्वाक्यानां ममार्थविवरणं कृतवंतो मत्सुहृदः उ. सुब्बरायभट्ट-बुर्रा शेषगिरिराय-लिंगं सुब्बराय-प्रभृतिभ्यो धारयामि कृतज्ञतासूचकवंदनानि । अस्य ग्रंथस्या-ङ्गेयभाषयोपोद्घातं लिखितवान् शेषगिरिरायो विशेषतो मत्त-स्संमानमर्हति । अत्र मया अज्ञानात्कृतानि स्खलितानि कृपया विद्वांसश्शोधयंत्विति मे प्रार्थना ।

एवं विद्वज्जनविधेयो मेडेपल्युपनामकवेंकटरमणाचार्यः.

*Senior Sanskrit Pandit, Maharaja's College, Viziyanagaram*

## ॥ विषयानुक्रमणिका ॥

# 1 Tempest—जंझावातः.



Dramatis Personæ

1. King of Naples = नेपाळदेशाधिपतिः.
2. Prospero = प्रस्फुरः—मिलान्पट्टणाधीशः.
3. Ferdinand = कपर्दनः—मरंदायाःपतिः.
4. Miranda = मरंदा—प्रस्फुरस्य पुत्री.
5. Gonzalo = गंजालः.
6. Caliban = कालभानुः.
7. Ariel = आर्यलः—भूतविशेषः.

॥ श्रीरस्तु ॥

# ॥ जंझावातः ॥

## (TEMPEST)

आसीत्पुरा चित्रमृगो नाम कश्चिद्द्वीपो महोदधौ। द्वावेव तद्वास्तव्यावास्ताम्। एकः प्रस्फुरो नाम कश्चित् स्थविरः अपरा तस्यैव दुहिता मरंदाह्वया नवमोहनाङ्गी काचित्प्रमदा। अतिशैशवएवामुं द्वीपमानीता सा पितृमुखवर्जमितरमनुष्यमुखदर्शनस्मृतिमपि न लेभे। तौ दृषन्मयं गिरिगह्वरमध्यूषतुः। तदनेककोष्टरूपेण विभक्तम्। तेषामेकतमे प्रस्फुरोऽध्ययनशालाबुद्धिं बबन्ध। तत्र मंत्रशास्त्रभूयिष्ठान्बहून् ग्रन्थान्सम्पाद्य निदधे। तस्मिन्काले सर्वे विद्वांसो मन्त्रशास्त्राध्ययनाभिरता बभूवुः। एतच्छास्त्रज्ञानं प्रस्फुरस्य भृशमुपकारकमभूत्। स हि पुरा शिखराख्यया कयाचिड्डाकिन्या वशीकृतेऽस्मिन् द्वीपे दैववशाद्विक्षिप्त आसीत्। सा डाकिनी निजाज्ञानिर्वर्तने विमुखान्कांश्चित्पिशाचान् वृक्षकोटरेषु निक्षिप्य निगडैर्बबन्ध। प्रस्फुरस्तु स्वमन्त्रसिद्धिमहिम्ना बन्दीकृतांस्तानमोचयत्। एषा मायाविनी शिखरा प्रस्फुरस्यागमनानन्तरं कालधर्ममवाप। तदारभ्यैतत्पिशाचास्तस्मिन् जातविस्रम्भास्तदाज्ञानुवर्तिनो बभूवुः। तेषामार्यलनामा कश्चित्प्रधान आसीत्।

अयमार्यलो निसर्गतश्शांतचित्तोऽहिंसारुचिश्च किंतु प्राक्तनशात्रवं मनसि निधाय शिखरायाः पुत्रं कालभानु-नामानं विकृतवेषं कंचिद्यक्षं भृश पीडयन्नात्मानं विनोदयति स्म । अथैकदावानराकृतिरसौ कालभानुररण्यानीमाटाट्यमानः प्रस्फुरेण यदृच्छया ददृशे । अथ तं स्वानिलयमानीय स मनुष्य-वाचश्शिक्षितवान । प्रस्फुरस्तास्मिन्नत्यंतं दयालुरभूत् । तथापि कालभानोरासुरप्रकृतित्वेन विफलप्रयत्नस्संजातः।तस्मात्तं राक्षसी-पुत्रं प्रस्फुरः करीषकाष्ठादिकमानेतुं प्रातीनकर्म कर्तुं विष्टि-करपदे निवेशितवान् । तेन रक्षसा विष्टिकर्म कारयितुमार्यल आदिष्टः । यदा यदा कालभानुस्तंद्रालुतया वा अनाश्रवतया वा नित्यानुष्ठेयकर्मणि उपेक्षां चक्रे तदा तदायमार्यलः प्रस्फुरवर्ज-मितरेषामदृश्यो भूत्वा शनैस्तन्निकटमागत्य तं खरतरनखाग्रैर्मर्मसु परिक्षिण्वन् अगाधपंकिलश्वभ्रे पातयन् विकृतवानररूपमास्थाय मुखाद्यवयवविकारैरुपहसन् ततः क्षिप्रमेव तिरोहितनिजस्वरूपः श्वाविद्रूपं धृत्वा तत्सूचिव्यथाभीतस्य मार्गमुपरुन्धन्नेवंविधैर्बहु-भिर्बाधककूटोपायैस्तं प्रतिकलमार्दत् । एवं वशीकृतैर्बलिष्ठैर-नेकैर्भूतैः प्रस्फुर आकाशे मातरिश्वनस्समुद्रे तरंगाणां च गतिं निरोद्धुं शशाक ।

अथ कदाचित्तेन समादिष्टा एते पिशाचास्सर्वप्राणि-भयङ्करं सवृष्टिप्रचंडानिलं ससृजुः । अभ्रंलिहमहोर्मिमाला-

कराले सलिलनिधौ पोप्लूयमानामात्मसदृशदेहभृत्पूर्णां नौकामेकामङ्गुल्या प्रदर्श्य प्रस्फुरः कुमारीमिदमूचे। "जाते पयोधिजले वायुवेगसमुद्भूतामाराद्वर्तमानामिमा नौकां पश्य-एषा ह्यस्मादृशैर्मनुजैः पूर्णा" मरंदा ता नावं वीक्ष्य पितरमवोचन्। "तात यदि भवत्प्रभावेनैवायं जञ्झामरुत्समुत्थापितस्तर्हि चण्डप्रभञ्जनवेगदोधूयमाननौकाभंगभयभीतेषु नावि स्थितेष्वनुकम्पा दर्शयितुमर्हसि। वातेरितं प्रवहणं शकलीक्रियमाणमिव संलक्ष्यते तपस्विनस्तवत्यास्सर्वे विनंक्ष्यन्ति यद्यहमेवैतान्प्राणिनः परित्रातुं प्रभवामि तदा सलिलनिधि पाताले क्षिपामि। प्रस्फुरः—मुग्धे मा भैषीः एतेषा न काचिदपि क्षतिस्स्यात्। यथा नौकास्थितानां न कोप्यपायस्सम्भवति तथा मया समीरणस्समादिष्टः। वत्से! न जानास्यात्मानं मा च। अहं तव पितास्मि। अस्यां गिरिदर्यां वसामि। किं तवात्रागमनात्पूर्वकालस्य स्मरसि। मन्ये त्वं हि तदा त्रिवर्षदेशीयापि नासीः।

मरंदा—तात! नूनं तत्कालोद्यापि मम स्मृतिमारूढः प्रस्फुरः—पुत्रि! वद कथं स्मरसि? मरंदा—सर्वं मम स्वप्नवत्प्रति भाति। तात! किन्नाहं कदाचिदन्वासिता पञ्चषैस्सखीजनैः?

प्रस्फुरः—आम्—वत्से—आम्। ततोऽप्यधिकतरसंख्याकैः। कथमद्यापीदं ते स्मरणपथान्न च्यवते। अपि जानासि कथममुं द्वीपमानीतासि?।

मरंदा—नेतः परं क्रमते मे स्मृतिशक्तिः ।

प्रस्फुरः—द्वादशवर्षेभ्यः प्रागहं मीलनपुरीपालक आसम् । त्वं तावद्भर्तृदारिका । मद्राज्यस्योत्तराधिकारिणी च । आसीन्मे कनीयान्भ्राता अन्तनयो नाम। अहं तावन्निवृत्त-विषयतर्ष अध्यात्मज्ञानरतिर्विविक्तदेशसेवी तत्त्वशास्त्राध्ययने-नायुश्शेषं यापयितुं विनिश्चित्य मद्भ्रातुरन्तनयस्य बाहुपीठे राज्य-धुरं समाससञ्जम् । सोपि दुरात्मा वशीकृतमद्राज्यप्रधानपुरुषो मत्प्राणानभिद्रुह्य मद्राज्यापहरणाय गाढं स्पृहयाञ्चकार । बलिना वरिष्ठं मच्छत्रुं नेपाळदेशाधीश्वरं सहायं लब्ध्वा स्वमनोरथसिद्धि-मवाप ।

मरंदा—तात कुतस्ते तदा नास्मान्व्यापादयामासुः ।

प्रस्फुरः—वत्से ! प्रकृतीनां मय्यनुरक्तत्वान्मा हन्तुं न शेकुः । तदा अन्तनयोस्मान्नावि निधायास्मन्मरणमाशंसमानो मध्येसमुद्रं विसृज्य गतः । तदा तादृशविपद्दशायां वर्तमाने मयि दयावान्पूर्वं मद्राजसभासद् चिरन्तनप्रियसुहृत्कश्चन गञ्जा-ळनामा सुगूढमभ्यवहारसामग्रीं पानीयं वासांसि राज्यादपि स्पृहणीयतरान् कांश्चिन्मोक्षशास्त्रग्रन्थांश्च पोते निदधे ।

मरन्दा—धिङ्मां यत्कृते महद्वैशसमनुभावितस्तातः ।
प्रस्फुरः—पुत्रि ! मामैवं । मम सञ्जीवयित्री काचिद्दिव्येवासी-

स्तदानीं त्वम् । तव स्मेरमुग्धमुखपुण्डरीकं पश्यन्नहमिमं दुर्जातं विस्मारितोस्मि । यावदावामस्मिन्मरुधन्वप्राये निर्जने द्वीपेऽवतीर्णौ तावत्पाथेयसम्भारोऽवातिष्ठत । इहास्मत्प्रवेशादारभ्य तव शिक्षणे मे महती प्रीतिः आसीन्न ममोपदेशेनायुष्मती परमुपकृता ।

मरन्दा—तात युष्मच्छिक्षया कृतार्थीकृतास्मि । वन्दे भवत्पादकमलयुगलम् । केन कारणेनायं प्रचण्ड वातस्समुद्रे सृष्टस्त्वया ? तन्ममाख्यातुमर्हसि ।

प्रस्फुरः—वत्से ! अवहिता शृणु कथयामि ते भूतार्थम् । अनेन चण्डानिलेन मम द्विषौ नेपाळदेशाधीश्वरो नृशंसो म मानुजश्चेत्युभावेतद्द्वीपस्य तीरदेशे निरस्तौ । इत्युक्त्वा प्रस्फुर इंद्रजालपिञ्छिकया पुत्रीमीषत्पस्पर्श । द्रुतं सा निद्रामुपगता । अथासौ यक्ष आर्यलः जंझामरुद्विद्रावितशत्रुनौकाया वृत्तान्तं स्वामिने निवेदयितुं पुरत आविरास । सर्वदैतेषु भूतेषु मरन्दाया दृक्पथात्तिरोहितस्वरूपेषु सत्स्वपि तस्याः पुरतोऽदृश्येन तेन सम्भाषितुं प्रस्फुरो नैच्छत् ।

प्रस्फुरः—आर्यलं वीक्ष्य । साधु रे यक्ष साधु धीरोऽसि । शूरोऽसि । आदितः प्रभृति कथय । कथमनुष्ठितो मदादेशः ।

आर्यलः—स्वामिन् अवधार्यताम् । अकाण्डप्रलयघस्रसमुद्भूतप्रचण्डवातावलीशङ्काभयभ्रान्तनरनारीकः चटुलविक्षेपसमुद्रिक्तजलधिकल्लोलमालाखचितनभोङ्गणः कल्पान्तनिर्घातशतसंकुलमहारावभरितदशदिगन्तरः महाप्रभंजनः समुद्रस्य प्रलयजलनिधिदशामापादयन्सर्वतोदिक्कं प्रवातुमारेभे । ततो रिपुनौस्थजना नाविकजनाश्च कल्पापायमुत्प्रेक्षमाणा भयकम्पिताङ्गा भवितव्यतामात्रशरणाः प्राणभीतिपरिगता बभूवुः । ततोभवद्रिपुनृपतेस्सूनुः कपर्दनः प्रथमं जलनिधौ पतितः । अथ तज्जनको महातरङ्गमालाभिः कबलितो नष्टो मे पुत्रक इति सोरस्ताडं विललाप । किंतु स सुरक्षितस्तिष्ठति । अस्मिन्नेव द्वीपे कस्मिंश्चिद्विविक्त प्रदेशे निषण्णस्तस्य पिता पुत्रस्समुद्रे निमग्न इति निश्चित्य शोकाग्निदह्यमानहृदयः पादागुष्ठेन भुवं विलिखन्नास्ते । तथाप्यहं जाने । तस्य पुत्रस्य केशपाशविन्यस्तकुसुमान्यपि न म्लानिमुपगतानि । राजार्हाणि तद्वासांसि च समुद्रसलिलक्लिन्नान्यपि पूर्वादभ्यधिकतर राजन्ते ।

प्रस्फुरः—आर्यल ! शोभनं मन्त्रयसे । तं राजपुत्रमिहानय । ममेयं पुत्री तन्मुखकमलावलोकन सुखमनुभवतु । कुत्रास्ते स राजा मे भ्राता च ? ।

आर्यलः—स्वामिन् ! मृत इति निश्चितं पुत्रं कपर्दनमन्विष्यन्तौ तौ मयोपेक्षितौ । मदितरास्सर्वेपि मृता अह-

मेकएव जीवामीति मन्वानोऽपि नौस्थेष्वेकोऽपि न मृतः। नौका नेषामगोचरापि नौकाश्रयेऽपरिक्षता तिष्ठति।

प्रस्फुरः—आर्येल! मदाज्ञा त्वया सुष्ठ्वनुष्ठिता अस्त्यपरं कर्तव्यम्।

आर्येलः—देव! किमितोऽप्यधिकतरमस्ति विधातव्यम्? आज्ञापयतु देवः। भवता मम विमोक्षः प्रतिश्रुतः। भवत्कृपामुद्बोधयामि। चिरात्प्रभृति भवन्तं किंकुर्वाणोस्मि। नोदितानि मृषोद्यानि। न कुत्रापि कर्मणि स्खलितम्। असन्तुष्टिं विहायासूयां दूरीकृत्य भवंतं सेवितवानस्मि।

प्रस्फुरः—किमापतितमिदानीम्। कियतीभ्यो दारुणयातनाभ्योऽहं त्वां मोचितवान्। किं न स्मरसि। किं विस्मृतवानसि क्रूरराक्षसीं शिखरां। या जराभारेणावनमिता। कथय सा कुत्र जाता।

आर्येलः—निर्जरद्वीपे।

प्रस्फुरः—कथमेतत् त्वया विस्मृतं तद्वृत्तान्तं पुनः कथयामि ते। इय दारुणव्यापारा राक्षसी मनुष्यश्रवोदुःश्रवैर्घोरकर्मभिर्दुस्सहा निर्जरद्वीपादानीय नाविकैरत्र परित्यक्ता। राक्षसाना मध्ये बलहीनस्त्वं तया वशीकृतस्तत्किङ्करस्संवृत्तः। सा त्वां वृक्षकोटरे निधाय निगलैर्बबन्ध।

तत्समये आक्रन्दन्मया दृष्टोऽसि एतादृग्वेदनाया मया मोचितोऽसि ।

आर्यलः—देव ! क्षम्यतामयं दासः । बहूपकृतं भवता मे । कृतं विस्मृत्य कृतघ्नताप्रदर्शनेन । स्वयं जह्लेमि । भवदाज्ञामनुवर्तिष्ये ।

प्रस्फुरः—तथा क्रियताम् इतःपरं भवन्तं स्वेच्छाचारिणं करोमि । इत्युक्त्वा तस्य न केवलं स्वाच्छन्द्यं अपितु यद्यत्तेन वाञ्छितं तत्सर्वं फलत्विति वरं च ददौ । एवं भर्तुः प्रसादाद्बन्धमोक्षमवाप्यार्यलः प्रभुमामन्त्र्य यत्र कपर्दनोऽवस्थितस्तमुद्देशं जगाम । ददर्श च तं तत्र तृण्याव्यवधानवत्या वसुन्धरायां निषण्णं विषण्णं च । अभाणीच्च तं दृष्ट्वा । भो युवराज ! अपसारयामि भवन्तमस्मात् स्थानात् । अस्मद्भर्तृदारिका मरन्दा त्वन्मुखचन्द्रचन्द्रिकास्वादाय चकोरायितचित्ता वर्तते ततोऽहं तन्निकटं त्वां नेष्यामि उत्तिष्ठ अनुयाहि माम् ततो गायति ।

श्लो मग्नस्ते जनकः पयोधिसलिलेऽगाधे गतः पञ्चता
तस्यास्थीन्यभवन्प्रवाललतिका नेत्रद्वयं मौक्तिकाः ।
नोव्यत्येति तदीयमण्वपि परं त्वब्धेर्गतो विक्रिया
श्रूयन्ते जलमानुषीकिररणन्निर्याणघण्टारवाः ॥

अथ कपर्दनः पितृमरणवार्ताश्रवणाद्विदीर्णहृदयो मूर्च्छामवाप। कथंचिल्लब्धसंज्ञः भयसम्भ्रमाकुलचित्तः "पश्यामः किं वा भविष्यती" त्यार्यलकंठरवानुसारेण तद्दिशाभिमुखं कञ्चिदध्वानमतिक्रम्य तं प्रदेशमाययौ यत्र मरन्दाप्रस्फुरौ प्रच्छायशीतलस्य कस्यचिद्रोहिणतरोरधस्तात्समुपविष्टौ दृष्टौ। पितृमुखादृते मरन्दा न कदाचिदन्य मनुष्यमुखमवलोकितवती।

प्रस्फुरः—कपर्दनं वीक्ष्य पुत्रि! ब्रूहि-किमिदमाराद्दृश्यते।

मरन्दा—(आश्चर्यं नाटयन्ती) तात केनचिद्यक्षेण दिव्यरूपिणा भवितव्यम्।

प्रस्फुरः—मुग्धे! सोऽप्यस्मादृशएव करचरणाद्यवयवविशिष्टदेहवानेतस्यापि बुद्धिरिंद्रियवर्गस्सुखं दुःखं च सन्ति असौ युवा नौस्थितेष्वेकतमः पितृमरणशोकेन रूपव्यत्यासं प्रापितोपि शोभते परिक्षीणश्चंद्र इव। नष्टस्तस्यानुयात्रिकगणः यस्य गवेषणेऽयं व्यापृतः।

अथ सा मरन्दा स्वपितृवत्सर्वे जनास्सौम्यमुखाधवलकूर्चा भवंतीति मन्वाना मनोभवसदृशं एनं भृशं मुमुदे तस्यानन्यसामान्यां रूपसम्पदं निर्निमेषवृत्ति पश्यन्ती प्रहर्षविस्मयाभ्या परवती बभूव। स कपर्दनोऽप्येतादृश-

विजनस्थलेऽतिलोकसौन्दर्येण रतिमपि ह्रेपयन्तीं मञ्जुवाङ्-मरन्दां मरन्दामवलोक्य "श्रुतापूर्वध्वनिभिरेतत् स्थान सर्वाद्भुतनिदानमि" ति मेने । आत्मानमिन्द्रजालिप्रपञ्च-मध्यपतितं निश्चिकाय । रूपिणीं श्रियमिव स्थितां तांतद्वीपाधि-ष्ठानदेवतां मत्वा तस्यां देवताप्रतिपत्ति दर्शयितुमारेभे । विस्पष्ट-मानुषीभावा सा स्वात्मनि तदारोपितं देवतात्वं सविनयं प्रत्या-चक्षाणा स्वचरितमादितो वर्णयितुमुपचक्रमे । अत्रान्तरेपि तामामन्त्रयाञ्चक्रे । परस्परं समुत्पन्नचक्षूरागौ तौ ज्ञात्वा प्रस्फुरो मनसि महान्तं हर्षं लेभे । किन्तु तस्या कपर्दनस्यानुरागं परीक्षितुकामः काश्चन प्रतिबन्धकोक्तीराबभाषे । भोः कुमार ! ममेदमन्तरीपमाक्रमितुमपसर्प तया किमागतोसि ? इत एहि त्वां संयमितहस्तपादं कृत्वा चारके निक्षिपामि समुद्रोदकं पीत्वा शंबूकमत्स्यमासमरठकन्दान्यारण्यकबीजानि च खादन्नत्र वस ।

कपर्दनः—अरे जरठ ! वाचाट ! का ते शक्तिर्मां तादृशमातिथ्यं ग्राहयितुम् । इति खड्गमाकर्षति ।

तदा प्रस्फुरः पिञ्छिका भ्रामयित्वा यथा स पदात्पद-मपि चलितुं न शक्नोति तथा तमस्तम्भीत् । अथ मरन्दापि-तुः पादयोर्निपत्य तात ! किमेवं निर्घृणोसि । मामपि विचिन्त्य तस्मिन दयालुर्भव । मया दृष्टो द्वितीयोयं मनुष्यः । स च सुन्दरः ।

प्रस्फुरः—वत्से जोषमास्व। यदि पुनरेवं जल्पसि तदा भवतीमपि दन्डयामि। किमर्थमयं दाम्भिकश्श्लाघ्यते। कालभानुमिमं च दृष्ट्वा नैतादृशरूपसम्पन्नौ जगति स्त इति मन्यसे। अज्ञे! शृणु वदामि। यथासौ रूपे कालभानोरीषदधिकतरस्तथाऽस्मादप्यधिकतररूपसम्पन्ना बह्वस्सन्ति।

एतत्सर्वं प्रस्फुरो दुहितुर्मनःपरीक्षार्थमवदत्।

मरन्दा—निर्निबन्धनमेव तस्मिन्नासक्त मे मनः। ततस्सुन्दरतरोपि न मे रोचते।

प्रस्फुरः—एहि राजपुत्र! एहि। नास्ति ते शक्तिर्मदाज्ञामुल्लङ्घितुं।

अथ प्रस्फुरस्येन्द्रजालमहिम्ना कपर्दनो विस्मयाकुलः प्रस्फुरमनुगच्छन्नीषद्वलितकन्धरो मरंदामुखपद्मे दृष्टिभृङ्गान व्यापारयन्मनस्येवमचिन्तयत्। स्वप्नइव मे बुद्धिर्मोहमुपागता। कारागृहस्थोऽप्यहं ता राकाचन्द्रमुखं दिने सकृदपि वीक्षितुं यदि लभेय तदा मनोभवसन्तप्तमात्मानं निर्वापयितुं शक्नुयाम्। प्रस्फुरस्येमां बिभीषिकामिदमङ्गदौर्बल्यं च किञ्चिदपि न गणयामि।

प्रस्फुरोदर्यां न चिरं बबन्ध कपर्दनम्। एनं शीघ्रं गुहाया बहिरानीय गुरुकाणि दारुशकलानि सञ्चेतुमादिदेश।

दारुवहनक्लेशावसन्नं प्रियं कपर्दनमवलोक्य मरन्दा किं प्रतिपत्स्यत इति ज्ञातुं प्रस्फुरोऽध्ययनाय गच्छामीति व्यपदिश्य ताभ्यामदृष्टः कस्मिंश्चित् स्थले निगूढं तस्थौ । प्रायेण राजपुत्रा गर्भेश्वरतया शरीरक्लेशस्य नोचिताः । काष्ठवहनकर्मणा परिक्लिष्टं हृदयदयितं दृष्ट्वा मरन्दा सानुतापमवादीत् । "हन्त श्रान्तोसि । साम्प्रतं मे पिता ग्रन्थाध्ययनतत्परस्सन्गुहाभ्यन्तरं प्रविवेश । चिरं तत्रैव तिष्ठति न बहिरायाति मुहूर्तं तावद्विश्रान्तो भव" ।

कपर्दनः—प्रिये ! तूष्णीं स्थातुं न शक्नोमि । कर्तव्यं कर्मापरिसमाप्य विश्रान्ति लब्धुं न मे रोचते ।

मरन्दा—"नाथ ! तर्हि मुहूर्तमास्व । अहं काष्ठखण्डानि वहामि" एवं प्रिययोक्तोपि कपर्दनो नाङ्गीचकार । तत्कर्मणस्तं निवारयन्ती सा उपकारस्थाने उपरोधमेवाकरोत् । एतदर्थं तयोर्महान्विवाद आसीत् । ततः काष्ठाहरणकर्म मन्दीकृतम् । अनुरागपरीक्षणार्थमेतत्कर्माणि कपर्दनं नियुक्तवानसौ प्रस्फुरो यथा मरन्दया सम्भावितं तथा ग्रन्थावलोकनाय न गतः किन्तु तयोस्संलापं श्रोतुकामस्ताभ्यामदृष्टः कचिन्निलीय स्थितः । कपर्दनो मरन्दा अभिधा पप्रच्छ । सा च "पित्रा निषिद्धास्मि तथापि कथयामी"ति वादिनी निजाख्या तस्मायाचख्यौ । प्रस्फुरो दुहितुः प्रथमेनानेनाविनयेन स्मितमकरोत् यतस्स एव प्रथम-

मनुपजातविभ्रमाया मदनव्यापारानभ्यन्तरायास्तस्या मनसी-न्द्रजाल विद्यामहिम्ना तस्मिन् यून्यनुरागमुत्पादितवान्। अत एव निजाज्ञामतिक्रम्य तस्मिन्ननुरक्तायै तस्यै न चुकोप।

"प्रिये! मया दृष्टासु सर्वासु वरवर्णिनीषु न कापि त्वत्सदृशी। त्वं मे प्राणवल्लभा भवितुमर्हसि। त्वयि दृढं लग्नं मे मनः" इति मरन्दाया स्वानुरागं प्रकटयतः कपर्दनस्य द्राघिष्ठं संलापमाकर्ण्य प्रस्फुरो जहर्ष। मरन्दापि स्वलावण्य-सम्पदमुपवर्णयतः कपर्दनस्यानुरागपिशुनानि वचासि निशम्य प्रत्युवाच—दयित! मत्पितरं त्वां च वर्जयित्वा! नान्यो मनुजो मया दृष्टचरः। श्रद्धत्स्व मम वचनं। लोके त्वामृते नान्यं का-मये। मत्पित्राज्ञाविरुद्धं त्वया संलपामीति बिभेमि। विस्मृत मे पितुश्शासनं।

अथ प्रस्फुरः पुत्रिकायास्संभाषणं सर्वं श्रुत्वा विस्मय-मानो यथासंकल्पितमेवेदं सम्भविष्यति। नूनं मत्पुत्री नेपाल-देशाधीश्वरस्य पट्टमहिषी भविष्यतीति सशिरः कम्पं मनस्या-ह्लादमभजत्। ततः कपर्दनोऽन्येद्युश्चिरं मरंदया मृदुमधुरं भाष-माणो तामवोचत। प्रिये! अहं नेपालदेशाधीश्वरस्य पुत्रः तद्वि-षयस्य राजा भवितास्मि पट्टमहिषीपदमलंकरोतु भवती।

मरन्दा—भो जीवितेश! अन्वेष्टव्या लता दैववशा-द्यदि पादलग्ना भवेत्कोनाम प्रत्याख्याति।

अथ कपर्दने "अनुगृहीतोऽस्मि भवत्या" इति कृतवेदित्वं प्रचिकाशिषमाणे प्रस्फुरो हठात्तयोरग्रत आत्मानं दर्शयामास यं वीक्ष्य तावुभौ प्राणौ तूष्णीमास्ताम् ।

प्रस्फुरः—वत्से ! माभैषीः त्वयोक्तं सर्वं मयाऽलक्षितेन श्रुतम् अभिनन्दितं च । कपर्दन ! भवन्तं चारे निक्षिप्य अपराद्धं मया । तत् क्षमस्व । कठोरहृदयतया त्वद्विषये क्रूर-चेष्टितवानस्मि तदपराधजातं प्रमार्ष्टुं मद्दुहितरं भवते प्रतिपाद-यामि । प्रतीच्छैनाम् । एतस्या तवानुरागं परीक्षितुकाम इमान् क्लेशास्त्वय्यपातयम् । तथापि मत्कृतपरीक्षायामप्रकम्प्योसि अतो भवदनुरागक्रीता मया प्राभृतकीकृतामेना मत्पुत्रिकामनुगृहाण । कार्यान्तरनिर्वर्तनाय स्थलान्तरं गमिष्यामि । यावदहं परा-पतिष्ये तावदायुष्मन्तावत्रैव समुपविश्य परस्परालापसुखमनु-भवन्तौ तिष्ठत । मरंदाप्येतं पितुरादेशं अनुष्ठातुं नानिच्छन्ती-वादृश्यत । प्रस्फुरस्तौ विहायार्यळमाजुहाव । सोपि मौळिविनि-वेशिताञ्जलिश्शत्रोर्नेपाल्वदेशाधीश्वरस्य विषयेऽन्तनयस्य विषये च स्वकृतं कर्म तद्वृत्तान्तं चाचिख्यासुः क्षिप्रं। निजभर्तुः पुरतस्तस्थौ ।

आर्यळः—(शिरस्यंजलिं बद्ध्वा) देव! देवपादानामाज्ञया तयोस्सविधं गत्वा त्रासजनकानश्रुतचरान्घोरनिनादान् श्राव-यित्वा अदृष्टपूर्वाणि भीजनकानि रूपाणि दर्शयित्वा तौ

भयविह्वलतया विसंज्ञावकार्षम् । यदा तावितस्ततः परिभ्रमणा-यासखिन्नौ क्षुत्क्षामकण्ठौ सञ्जातौ तदाऽहमास्वादवन्ति विविधान्यन्नानि तदग्रे न्यधाम्। तदन्न जिघत्सतोस्सतोर्विकृताकारस्य घस्मरस्य कस्यचित् यादसस्तनुं धृत्वा तावभाययम् ततो भक्षणाद्विरतौ ततस्तौ यथाऽश्चर्यविद्धौ तथा मनुष्यवाचाऽवादिषम् "रे जाल्मौ शृणुतं—पुरा युवामुभौ मत्स्वामिनं प्रस्फुरं राज्यपदभ्रष्टं कृत्वा स्तनन्धयप्रजया तद्दुहित्रा साकं मध्येसमुद्रं निरास्थताम् । इदानीमनुभवत स्वदुर्व्यवसायस्य फलम्"। इत्येवं पूर्ववृत्तातं तावस्मारयम् ततस्तौ जातपश्चात्तापाविव दृहशाते। अतिमात्रं मया हिम्मितौ तौ दृष्ट्वा ममाप्यासुरप्रकृतेर्मनः करुणार्द्रमभूत् । तद्विज्ञापयामि । कर्तव्येष्वितः परं देव एव प्रमाणम् ।

प्रस्फुरः—तथाचेत्तवापि नाम पिशाचजातिसम्भूतस्य सानुक्रोशं मनः किंपुनर्मम तत्सजातीयस्य मनुष्यस्य । ततस्सौम्य आर्यल ! अकालहीनमिहागमयस्व तौ । एवं प्रस्फुरेण समाज्ञप्तस्स आर्यलआकाशे मधुराणि गीतानि गायन् गीतिश्रवणसमाकृष्टचित्तांस्तान् राजान्तनयगञ्जालान् शनैस्स्वामिपादमूलमानिनाय । सएवायं राजवल्लभो गञ्जालः यः पुरा प्रस्फुरे दुष्टेन तदनुजेन जिघांसया पयोधिमध्ये एकाकिनि परित्यक्ते नौकायां भोजनपदार्थान्पुस्तकानि वासांसि च निधायोपकृतवान् । अथ भयशोकाभ्या परीता जडीकृतास्ते त्रयः प्रस्फुरस्यान्तिकं

समायाता अपि तं प्रत्यभिज्ञातुं न शेकुः। प्रस्फुरस्तु प्रथमं गंजालं प्रत्यभिज्ञाय "मत्प्राणपरिरक्षणमहोपकारिन्नेह्येही"ति वदन् गाढं तं परिषस्वजे।

यः पूर्वमावाभ्यां परिपीडितस्स एवासौ प्रस्फुर इति तद्भ्रातान्तनयो नेपाळभूवल्लभश्च प्रस्फुरं प्रजज्ञाते। अथान्तनयो ज्येष्ठभ्रातरि स्वकृत द्रोहकर्म स्मरन्पश्चात्तप्तहृदयोऽश्रूणि मुञ्चन् "आर्य क्षमस्व मे दुर्नय" मिति भ्रातुश्चरणयोर्निपपात। राजापि प्रस्फुरस्य राज्यापहरणे तद्भ्रातुरन्तनयाय आत्मना कृतेन साहाय्येन लज्जितस्सन् समुत्पन्नाकृत्रिमानुशयः क्षन्तुं प्रार्थितवान्। प्रस्फुरस्तावुभौ चक्षमे। तद्राज्यं तस्मै पुनः प्रत्यर्पितं। अथ प्रस्फुरो नेपाळक्षितिपालाभिमुखो भूत्वा राजन्! त्वमप्येतत्पारितोषिकं मया दीयमानं परिगृह्णीष्वे"त्युक्त्वा दरीकवाटमपावृत्य मरन्दया सहाक्षैर्दीव्यन्तं कुमारं कपर्दनं दर्शयामास। अथैवमकांडे मिलितयोः पिता पुत्रयो राजकपर्दयोः परस्परसन्दर्शनजनितानंदौ वाङ्मनसमत्यशेत। यतस्ताचन्योन्यं जंझानिलेन समुद्रे नष्टाविति मेनाते। मरन्दात्वेतानवलोकयन्ती मनस्येवमचिन्तयत्। अहो! महात्मानः खल्वेते प्राणिनः। एतादृशैः प्राणिविशेषसङ्घैरध्युषितोऽयं लोकोधन्यः इति। नेपाळमहीपालोऽपि मरन्दाया लोकोत्तरलावण्येन विस्मितो भूत्वा सा निजनन्दनस्यानुरूपा पत्नी भविष्यतीति हृष्यन्

"कस्येयं दिव्याकृतिः कन्यकारत्नं प्रथममस्मान् निर्दयं वियोज्य पश्चात्संयोजितवती साक्षाल्लक्ष्मीरिव प्रतिभाति ।

कपर्दनः—हन्त मज्जनकोऽप्यहमिव प्रथमदर्शन एनाममानुषीं मन्यते इति विस्मयमानः "तात नेयममर्त्य-तरुणी । किंतु देवदेवेन जगदीश्वरेणास्माकं दत्ता भवताऽननु मतस्तामहं परिणेतुमनिच्छन्नपि भवन्तं महोदधिकल्लोलपरम्परा-कबलितं निश्चित्य तामह वृतवान् । इयं तावत्प्रथितयशसो मल्लिनगराधिपतेः प्रस्फुरस्यात्मसम्भवा । यस्य दिगन्तविश्रा न्तया कीर्त्या अहं परिचितः । तत्संबन्धेन नवीकृतं मम जीवन-चरित्रम् । प्रेयसीमेना मह्यं प्रतिपादयन्नयं द्वितीयो मे धर्म-तातः ।

राजा—ततो ममापीयं धर्मदुहितैव । पुत्रि क्षम्यतां भवत्पितरिमत्कृतमपराधजातं ।

प्रस्फुरः—राजन्नलमेभिः पुनरुक्तैः प्राक्तनकथोद्गारैः । न बुद्धिमानेतव्या अतीताः क्लेशाः ये सुखपर्यवसानभूमयस्सं-वृत्ताः ॥

प्रस्फुरः लज्जावनतोत्तमांगंभ्रातरमाश्लिष्य "हे भ्रातः मनसिचिन्तां मा कृथाः । नायं तवापराधः बलवती भवितव्य तैवात्रकारणम् । ययाहं राज्याद्भ्रंशितोऽमुं द्वीपमानीतः । यथा मे पुत्री नेपालदेशस्य महाराज्ञी भवेत् तथा तयैवाहमीदृशी-

मवस्थां गमिनः अस्मिन्विजने द्वीपे परस्परसंमेलनेनैव स राजकुमारो मरन्दायामनुरक्तो बभूव" । आत्मनस्समाश्वासनाय प्रस्फुरेणोदीरितानि सात्त्ववचनानि श्रुत्वान्तनयश्शोकलज्जाभ्यां पूरितहृदयो मुक्तकंठ रुरोद । धार्मिको दयालुस्सगंजालश्चिरात्परस्परं द्वेषिणोः पुनर्मैत्रीमुपगतयोर्भ्रात्रोस्सम्मेलनं दृष्ट्वा भृशननन्द । आयुरारोग्यैश्वर्याभिवृद्ध्या तौ दम्पती अनुगृहीतुमीश्वरं तुष्टाव । "नौकाश्रयस्थाने युष्माकम् नौर्नाविकैस्सुरक्षिता तिष्ठति । श्वः प्रभाते दारिकामादायाहमपि युष्माभिस्सह स्वदेशमागमिष्यामि । मयाद्य दीयमानमातिथ्यं परिगृह्णीत । सायन्तनभोजनसमयेऽस्मिन् द्वीपे मदवतरणादारभ्य कृत्स्नं मदीयवृत्तान्तं कथयामि व" इति तत्र स्थितान्सर्वान् प्रस्फुरोऽवदत् । ततस्सकालभानुमाहूय रसवन्त्यन्नानि कल्पयितुं गुहाभ्यन्तरमलं कर्तुं चादिदेश । ततः प्रस्फुरानुचरं विकृतवेषं राक्षसंमेनं दृष्ट्वा सर्वे ते विस्मिता बभूवुः । उत्साहशीलस्य क्षोदीयसोऽप्यस्य भूतस्यानन्दसन्धायकः प्रस्फुरः कालभानुं दास्यवृत्तेः मोचयित्वा यथेष्टं गन्तुमनुजज्ञे । असावपि स्वामिनि दृढानुरक्तो विधेयेषु श्रद्धालुः कृत्यावित् ऋजुशीलश्चिरदास्यं परित्यज्य स्वैरवृत्या संचरितुमियेष । अरण्यखगवदाकाशे विशृंखलं भ्रमितुं विकचकुसुमामोदभरितानि परिणतफलभारावनम्रशाखाकदम्बकानि प्रच्छायशीतलानि वनान्यासेवितुं च चकमे ।

प्रस्फुर आर्यलमप्यवलोक्य आर्यल ! दुस्सहोपि मे त्वद्विरहो मोक्ष्यसे ।

आर्यलः—महाराज ! वन्दे भवत्पादकमलम् । अनुकूलवातेन स्वस्थानं नीयमानां युष्मन्नौकामनुगन्तुमनुजानीहि माम् यदाहं स्वेच्छाचारी तदा निरवधिकानन्देन जीवामीति गायति ।

श्लो॥ भृङ्गा यत्र मरन्दपूर्णकुसुमान्यास्वादयेयुर्दिवा
तत्राहं च पिबन्मधुप्रतिकलं स्वाप्यां सुमौघे निशि ।
रात्रौ क्रन्दति वायसारिनिकरे सुप्तः परोष्ण्यासुखं
यामि ग्रीष्मऋतौ प्रहृष्टहृदयः पुष्पद्रुमाणा ततिम् ॥

ततः प्रस्फुर इन्द्रजालतन्त्रग्रन्थान्मयूरपिंछिका च भूमौ निचखान । यतस्सनेतःपरं कदाचिदिन्द्रजालविद्यां प्रयोक्ष्यामीति प्रतिजज्ञे । एवं स दुर्जयान् रिपून्पराजित्य स्वभ्रात्रा नेपाळदेशाध्यक्षेण च कृतसख्यस्स्य फलितास्तस्य सर्वे मनोरथाः । तदभ्युदये न कापिान्यूनता । किन्तु चिरविमुक्तं जन्मदेशं पुनर्द्रष्टुं राज्यासनं पुनरलं कर्तुं मरन्दाकपर्दनयोः पाणिग्रहणमहोत्सवदर्शनेनात्मानमानंदयितुमेवावशिष्यते तन्मनोरथपूरणाय । नेपाळदेशाधीश्वरस्स्वनगर्यामेव वत्सयोर्विवाहमहोत्सवः कर्तव्य इति प्रस्फुरं प्रार्थितवान् । सोपि तत्प्रार्थनामुररीचकार । अथानुचरस्यार्यलस्य साहाय्येन ते सर्वे कतिपयदिनसमुद्रयानानन्तरं सुरक्षिताः नेपाळ-

राजधान्यामवतीर्णाः । तत्र मरन्दाकपर्दनयोर्विवाहोऽमितविभवेन संवधृते ।

श्लो॥ भ्राता वैरमपास्य मित्रमभवन्नेपालदेशाधिपो ।
प्यानम्रः पदयोरियायदुहिताप्यात्मानुरूपं वरम् ॥
राज्यं प्राज्यमवापि निर्जित रिपु श्रीशप्रसादात्परं ।
सर्वे चास्यहृदि स्थितास्सुफलिताः कामायथावाञ्छितम्॥

जंझावातस्समाप्तः ॥

---

## 2. Hamlet—(अनुह्लादचरितम्).



Old Hamlet = आह्लादः—धर्मार्कदेशाधीशः

Young Hamlet = अनुह्लादः—आह्लादकस्यपुत्रः

Claudius = क्लांतः—राजानुजः

Gertrude = जरित्री—राजमहिषी

Aoratio = होराशयः—अनुह्लादस्यानुचरः

Marcellus = मारशीलः—रक्षिपुरुषेष्वेकः

Polonius = फलनयः—राज्ञः प्रधानामात्यः

Ophilia = फलिनी—फलनयस्यसुता

# ॥ अनुह्लादचरितम् ॥

## (HAMLET)



आसीदाह्लादको नाम राजा धर्मार्कदेशे। यथार्थनामा स महीपतिः पितेव चिरं प्रजाः परिपाल्य दिगङ्गनावतंसितनिजकीर्तिकुसुमो हठाद्देवभूय गतः अजीर्यद्यौवना जरन्तीनाम्नी तन्महिषी मृतस्य भर्तुर्मासद्वयेऽप्यनतीत एव क्लान्ताभिधं तत्कनिष्ठभ्रातरमुपयेमे। ततस्सर्वे जनाः "धिगिमां वराकीमनार्यां भर्तृगुणपराङ्मुखीमविमृश्यकारिणीम्। या खल्वचिरोपनतं भर्तृव्यापत्तिशोकमपि मनसो दूरीकृत्य वैषयिकसुखैकलालसा भर्तुरनुजं सर्वथा तद्विसदृशं गुणहीनं नीचमतिमेन क्लान्तंपतित्वेन जग्राहेति" भृशं निनिन्दुः। मृतभूरमणस्यौरसं सुतं बालमनुह्लादनामानं विना शशङ्किरे केचित् "अयं नृशस एव धर्मार्कराज्यापजिहीर्षया तत्पत्नीरिरंसया च तस्योपांशुवधमरीरचदिति" अपितु देव्या अनेनाविनयेन सर्वेभ्योऽधिकतरं वैमनस्यमनुह्लादस्य मनस्युत्पादितम्। यतः किल पितरि दृढभक्तिरसौ तमर्चाविग्रहमिवापूपुजद्भक्त्या। पितृसम्मानबुद्ध्या आत्मन उचितज्ञतया च मातुर्जरन्त्या इमा दुष्प्रवृत्तिमालोच्य गाढविक्षिप्तचेता बभूव। पितुरकाण्डनिधनेन विधवाया

मातुरनुचितपुनरुद्वाहजनितया लज्जया च दुस्सहदुःखभारा-क्रान्तोऽसौ युवराजो मुषितधनो लुब्ध इव नष्टहर्षश्शून्य-हृदयश्चिन्ताजडदर्शनश्च संवृत्तः पूर्वमिव निरवद्यविद्यागोष्ठीष्वा-दरं न बबन्ध । ग्रन्थावलोकनमपि शत्रुमुखावलोकनमिवाविष ह्यममंस्त नृपकुमारोचिता खुरलीपरिश्रमरतिमपि दूरीचकार । बाल्योचिता आक्रीडविहारमृगयादिविनोदाश्च नास्य मनोविनो-दनहेतवस्सञ्जाताः । संसारनिर्वेदोऽस्य हृदये गाढतरं पदं न्यधत्त सन्निरुद्धमनोज्ञकुसुमतरुस्फीतेः तृणस्तम्बैः कविवृद्धिबहुलशाञ्जी-र्णोद्यानादनूनमदृश्यत निखिलं जगदस्य । तादृगुदाराशयोऽयं युवराजोऽनुह्लादः पितृक्रमागते राज्ये स्वस्य न्याय्ये स्वाम्ये सत्यपि तत्प्राप्त्याशाभङ्गोपि तथा मनस्सन्तापकरमत्यन्तावमा-ननिमित्तं न पर्यजीगणत् यथा तस्य मातायमनुव्रता यस्मिन् दृढमनुरक्तायं छायेव सर्वदाऽनुगता तमेव गुणरत्नरोहणं साधु-सेविनमविस्मरणीयचरित्रं भर्तारमल्पीयसैव कालेन जन्मान्त-रकथामिव विस्मृत्य धर्मव्यवस्थामतिक्रम्य विवाहसम्बन्धा-नौचित्यमप्यनाकलय्य कामपरायणादेवरमुपायंस्तेत्यखिद्यत् । दशगुणितराज्यनाशादपि प्रबलतरेणानेन चित्तावसादेन खण्डि-तधैर्यावष्टम्भो घनतमोमलीमस बुध्युन्मेष उन्मत्तीभूतश्चचार ।

तं प्रकृतिमानेतुं तस्य मनो विनोदयितुं मात्रा जरन्त्या पितृव्येन क्लान्तेन च प्रयुक्तास्सर्वोपाया अलसारम्भा इव निष्फ-

ला बभूवुः । मृतस्य पितुर्गतेऽपि बहुतिथे कालेपि पितृशोक-चिह्नं गाढनीलीरागरञ्जितमेव वासस्सर्वदा परिदधानो राजसंसदि समदृश्यत । मातृमनः प्रीणनाय वा तत्परिणयदिवसेपि न जहौ तन्नीलकर्पटपरिधानम् । आत्मनो लज्जावहे तस्मिन् मातृपुनर्विवाहदिनप्रवृत्त उत्सवे वा पानगोष्ठ्यां वा नान्वेतुमैच्छत् ।

पितृमरणकारणाधिगमायैव तस्य मनोऽजस्रं बद्धश्रद्धमासीत् । पितृनिधनप्रकारे तस्य संशय उदियाय । कृष्णसर्पेण दष्टो राजा पञ्चत्वतामयासीदिति क्लान्तस्सर्वतः प्राख्यापयत् । यो राज्यलोभेनाग्रजं व्यापाद्येदानीं तत्सिंहासनमध्युवास स एवायं कालसर्पः पितृविनाशहेतुरित्यनुह्लादस्सूक्ष्म धिया अभ्यौहिष्ट ।

..स्वाभ्यूहनं कियदुपपन्नं । मातृविषये किं चिन्तनीयम् ? तद्वधेऽस्या अन्वयोऽस्ति वा नवा अस्ति चेत्कथम् । किमस्या उपजापेन कृतः । आहोस्विदस्या अनिवेद्य कृत इत्युत्तरोत्तरसंतन्यमानचिन्तातन्तुसन्तानसंदानितमनाः कामप्यनिर्वृतिं लेभे ।

अथ पितृतुल्याकृतिः कश्चन पिशाचो हर्म्याङ्गणं समया पर्यटन् त्रिरात्रं क्रमेण राजमन्दिररक्षिभिर्यामिकपुरुषैरध्यक्षीकृत इति जनश्रुतिरनुह्लादस्य कर्णपथे पतिता । स राजा

जीवितकाले येन वर्मितो दृष्टस्तेनैवाप्रपदीनेन कवचेनावृत शरीर इदानीं सेवकैरदृश्यत। तत्साक्षिणः केचित् होराशयप्रभृतयोऽनुह्लादस्यान्तरङ्गसुहृदस्तस्य यक्षस्यागमनवेलायां तद्दर्शनविधौ च प्रमाणीकृताः। "निशीथे दीर्घविषादविवर्णं करालमासुरीकं-मुखमुद्वहन् जीवितकाल इव श्यामलदेहप्रभयोपलक्षितोऽस्माभिर्दृष्टः पृष्टो नोत्तरं ददौ। मुखमुन्नम्याभाषमाण इवा बभौ॥ अत्रान्तरे ताररवेण कृकवाकुकूजितेन संसूचितप्रभाता-सत्तिर्जनसंचाराक्षमतया जातसङ्कोचोऽस्मदृक्पथाच्छनैस्तिरो-दधे" इति ते न्यवेदयन्।

प्रत्येतुमुपपन्नतरं स्वानुमानादविसंवादिन वर्ण्यमान-मेनं वृत्तान्तं श्रुत्वासौ युवराजो विस्मयविस्फारितेक्षणस्तैर्दृष्टो यक्षस्स्वजनक एवेति निश्चित्य तद्दर्शनघटनाकुतूहलाक्षिप्तहृदयो यामिकधुरं वहद्भीराजभटैस्सह तद्रात्रिं जागरितुं निश्चिकाय। यतस्सहीत्थं मनस्यचिन्तयत्। तादृगाकृतिर्नेनिष्प्रयोजनमायाति। तस्यास्ति कश्चिदर्थो विवक्षितः। एतावन्तं कालं मौनमवलं-ब्यापि नूनमिदानीं मया सह संभाषते इति महतौत्सुक्येन निशागमनं प्रतिपालयन् कथं कथमपि दिवसशेषमत्यवाहयत्।

निशि समुपस्थितायां प्रियसुहृदाहोराशये न रक्षिपुरुषे-ष्वन्यतमेन मारशीलाख्येन केनचिद्भटेन चानुगतस्तत्रैव हर्म्याङ्गणे कृतावस्थितिरासीद्यत्रायं यक्षो विचरितुमभ्यस्तः।

हिमोत्किरायाः क्षपाया दुस्सहशीतबाधयादन्तवीणाव्यापार-मभ्यस्यन्तस्ते त्रयोपि यत्किंचिद्भापमाणाः काल यापयंति स्म । अथायाति स वेताळ इति व्याहरति होराशये अनुह्लादमार-शीलौ विरतभाषणौ परितो व्यलोकयताम् ॥

पितुः पिशाचाकृति वीक्ष्य भयविषादसंभ्रमैराकुलित-हृदयोऽनुह्लादः प्रथमं तद्भीष्मत्वं शान्तत्वं वा सम्यगवधार-यितुमशक्नुवन् दिवि स्थिता देवताः परित्रायध्वं, परित्राय ध्वमित्याचुक्रोश । स पिशाचश्शुभं कर्तुमागतोऽशुभाय वेति स नाजानात् । अथ शनैर्धैर्यमवलम्ब्य तं पिशाचमवालुलोके । सोपि तेन सह सम्भाषणाय स्पृहयालुरिव स दैन्यमनुह्लादस्य मुखमैक्षत । अनुह्लादोपि तातेति तं संबोध्य सस्नेहं वीक्षमाणः "पितृलोकं विहाय पुनरिहागमने किं वा कारणम् । यत्ते मनसि वर्तते तद्विस्पष्टं निवेद्यताम् । अहं तदनुष्ठातुं बद्धा-ञ्जलिरस्मीति" स प्रश्रयमुवाच । पिशाचस्तु हस्तसंज्ञयाऽनु ह्लादमाहूय "मया सह कंचन विविक्तप्रदेशमागच्छे" त्यादि-देश । किंतु स पिशाचो जात्युचितकौटिल्येन कदाचिदनुह्लादं समुद्रे पातयिष्यत्यथवा सन्निकृष्टं प्रोत्तुङ्गं महीधरमारोप्य ततः क्षेप्स्यत्याहोस्विद्घोररूपमास्थाय भाययित्वा तस्य बुद्धिभ्रंश जनयिष्यतीति भीत्या वेतालानुयानमनर्थावहमिति होराशयमार-शीलयोर्निवारयतोस्तदुपदेशमनादृत्य जरत्तृणलघीयसः कायस्य

नश्वरतामात्मनो नित्यतां च ज्ञात्वा जीविताशानिरपेक्षस्तदनुगमने कृतनिश्चयस्तेन पिशाचेन सह निर्दिष्टं विजनस्थानं प्रतस्थे।

यदा तौ पितापुत्रौ जनसंचारशून्यं प्रदेशमासेदतु स्तदा स यक्षो विरतमौनः पुत्रमिदमभाषत "वत्स! त्वत्पितास्म्यहमाह्लादः यथाभ्यूहितं त्वया तथैव संवृत्तम् अहं नृशंसेन त्वत्पितृव्येन क्लान्तेन मद्राज्यतल्पापहारिणा व्यापादितोऽस्मि। एकदाहं यथाभ्यासं मध्याह्नसमये मत्सुप्तिमंदिरे गाढमस्वाप्सम् तदा निद्रापहृतसंज्ञे मयि केनचिदप्यलक्षितो मच्छयनागारं प्रविश्यासौ राजद्रोहमहापातकी प्रसुप्तस्य मम कर्णे कंचित्प्राणापहरं विषौषधिरसं न्यषिचत्। अतितरलरसपारदरस इव मद्देहस्य सिराजालं युगपद्व्याप्य रुधिरं क्वाथयित्वा त्वचि सर्वतश्श्वित्रमजीजनत रक्तस्य घनीभूतत्वान्निरुद्धशोणितप्रसरो दुर्भरवेदनया प्राणैर्वियुक्तोऽभवम्। एवमुद्याने निद्रानिलीढनयनोहं राज्यात्प्राणेभ्यः प्राणेभ्योपि गरीयस्याः प्रेयस्याः मृत्युरूपिणोऽनुजस्य करेणाच्छिन्नोस्मि" वत्स! अनुह्लाद! यदि मयि निश्चला ते भक्तिस्तर्हि मद्घातुकमेनं लवश उत्खंड्य तद्रक्तजलैर्मा तर्पय अमुमेव मन्मनोरथं पूरयितु प्रति जानीहि पश्य तव मातुस्स्वैरिण्या अपथप्रवृत्तिम्। या मयाग्निसाक्षिकमूढा चिरं मम सहधर्मचारिणी भूत्वा मयि चिरन्तनप्रीतिमकांडे निरस्य भ्रातृवधमहापातकिन-

मेनं चकमे । पितृव्ये वैरनिर्यातनाय कृतनिश्चयोपि त्वं त्वन्मात्रे मा द्रुह्य यतो निखिलस्य जगतोऽन्तरात्मतयाऽवस्थितो भगवानीश्वर एव तस्या दुष्कर्मणः फलं विधास्यतीति" पितुरेनं निदेशं श्रुत्वाऽनुह्लादो यथासमादिष्टमनुष्ठास्यामीति प्रतिज्ञाय तं पिशाचं विससर्ज ॥

अथैकाकी स एकान्ते स्थितश्शास्त्रेभ्योऽधिगतं लोकानुभवात्सम्पादितं स्मृत्यारूढं सर्वं विज्ञानं विस्मृत्य तत्पिशाचभाषितमेव स्मृतिपदव्या सन्ततं निधातुं निरचैषीत् पिशाचभाषितान्यन्तरङ्गसुहृदे होराशयाय निवेद्य तद्रहस्यं न कस्यापि प्रकाशयितव्यमिति तं शशास ॥

पितृवधशोकादेव निरुत्साहीकृतो विषण्णमानसोऽनुह्लादः पितुर्भयंकरपिशाचाकृतेर्दर्शनादतितरामुन्मत्त इव बभूव । "यदीयं स्थितिस्सर्वदाऽवलंब्यते चेन्ममाशयः परैरभ्यूह्येत अथवा लोकप्रकाशिता पितृवधविधा तत्त्वतोनेन ज्ञाताभूदिति मम पितृव्यस्य मनसि शंकाप्युदीयादिति भीत्या स युवराजस्तत्प्रभृति नूनमुन्मदिष्णुमिवात्मानं लोकस्य दर्शयामास अनेनोपायेन क्लान्तस्य शंकास्थानं न भवामि सोपि वैरनिर्यातने मामशक्तं मन्यते अनेनाभिनीतोन्मत्तवेषेणात्मनः पारिप्लवत्वं गूढ सुरक्षितं भवेदिति" च मेने ।

अचिरादेवानुह्लादो वेषभाषावर्तनेष्वन्य इव परिवृत्ति प्रापत् । राजा देवी च वस्तुस्थित्यनभिज्ञौ युवराजस्यैनादृश-वैमनस्योत्पत्तौ पितृनिधनशोक एव कारणमिति यथानामन्येतां तथोन्मत्तवृत्तिमवालंबे । यतस्तौ तत्पितृपिशाचदर्शन-वार्तानभिज्ञौ मनोभव सन्तापनिमित्तकोयं चित्तव्याधिरियता कालेनाभिव्यक्त इति निश्चिक्यतुः ।

विषादबहुलाया एतदवस्थायाः पूर्वमनुह्लादः प्रधाना-मात्यस्य फलनयाख्यस्य तनयां निरवद्यलावण्यां फलिनीनाम्नीं चकमे । मदनलेखप्रेषणेनोर्मिकादि पारितोषिकदानेन च स्वरागवृत्तिमस्या व्यवृणोत् । सम्मानोचितरीत्या स्वमनोरथं पूरयितुं तां निरबध्नात् । सापि तत्कृतप्रतिज्ञा तत्प्रार्थनां च न प्रत्याचख्यौ । किंतुपश्चादुद्भूतया चित्तविक्रियया तां नितरा-मुपेक्षितवान । यदा कृत्रिमोन्मत्तवेषमाधातुमारेभे तदा तां रूक्ष-दृष्ट्या पश्यन् तस्या निर्दयस्संवृत्तः । सरक्षमातिस्सा फलिन्यपि तादृग्विरागसंदर्शनविमुखेऽनुह्लादेनुद्भूतामर्षापूर्वानुरागसञ्जात - विस्रम्भतया विदिततदाशया तमनिन्दन्ती “नायं विरक्तः किन्तु चित्तास्वास्थ्येनैव नूनमीदृशो बभूवेति निश्चिकाय” यथा वीणाश्रुतिसुखगीत्युत्पादनक्षमापि विस्वरं वाद्यमाना श्रवणकटु कणति तथास्य सहृदयताप्रज्वलितशेमुषीमनोव्यथया विप-र्यासिताऽभूदित्यमंस्त सा ।

पितृघातुके पितृव्ये वैरपारं गन्तुं कृतोद्यमतया कृतकोन्मत्तवेषमादधानस्याहर्निशं पितृव्यव्यापादनचिन्ताधीनमानसस्यालसकामुकजनोचितं मदनव्यापारपारतंत्र्यमिदानीं मम नितान्तमसमञ्जसमिति मनस्यालोच्याप्यनुह्लादोऽस्मिन्समये प्रियतमा फलिनीं स्मृत्वा तदनुरागवागुरानियन्त्रितं स्वचित्तहरिणं विमोचयितुमशक्तो निर्निमित्तमस्याः प्रणयं पारुष्येण निरस्तवानस्मीति जातानुशय उन्मत्तानुरूपवचः परिपाटीसमधिष्ठितमपि गाढानुरागव्यञ्जकं लेखमेकं तस्यै प्रजिघाय। यस्मिन्स इत्थमाचचक्षे । "प्रिये नूनं मां त्वयि बद्धभावमवेहि । यदिमास्ताराअङ्गारखण्डा भवेयुर्यदि स्थास्नोस्सूर्यस्य चलनं सम्भवेद्यदि सत्यमसत्यं भवेत्तथापि त्वयि मदनुरागो न विपर्येतीति दृढं विश्वसिहि" इति । भक्त्या फलिनी तमनङ्गलेखं पित्रे समदर्शयत् । सोपि स्वतनूजायामनुह्लादस्यानुरागकथा राज्ञे मृहिष्यै चावश्य निवेदनीयेति निश्चित्य तथा कृतवान् । तावपि तच्छ्रुत्वाऽनुह्लादस्योन्मादस्त्रीव्यामोहजनित एवेति निरनैषिष्टाम् । "फलिन्या लोकातिशायिलावण्येनैवायं विमोहितमतिरीदृशीमवस्था प्रापितः । यदा साऽस्य मनोरथं पूरयिष्यति तदैव पुनः प्रकृतिमापद्यत" इत्यमंस्त देवी ॥

किं त्वनुह्लादस्याधिर्नैवं प्रतीकार्यो यथा देव्यमन्यत । पूर्वं दृष्टो यक्षरूपधारी तत्पिता मुहुस्तस्य बुद्धिपथमवातरत् ।

वेदविधिवदत्रश्यानुष्ठेयो वैरशुद्ध्यात्मकः पितृनिदेशआकार्य-समाप्तेस्तं नक्तं दिवमस्वस्थचित्तमकरोत् । क्षणविलंबोपि महा-प्रत्यवाय इव पित्राज्ञोल्लङ्घनमिवादृश्यत । सर्वदा रक्षिपुरुषा-भिरक्षितगात्रस्य राज्ञो हननं प्रायशो न लब्धीमाला । यदि राज्ञी जरित्री तन्माता अनारतं राजानुवर्तनपरा तत्र सन्निहिता भवेत्तदा सुतरा विहन्येतेदंकार्यम् । यस्स्वपितरं व्यापाद्य राज्यमपजहार सएवेदानीं स्वमातुर्वल्लभस्संजात इतीदमेवास्य मनसि वागतीतं सन्तापमजनयत् । सङ्कल्तितपकार्यनिर्वहणमपि मन्दीचकार । शान्तशीलस्यानुह्लादसदृशस्य लोके यस्य कस्यापि सजातीयो मनुष्यो हन्तव्य इतीदं गर्हितं दारुणं च कर्म । चिरेणानुह्लादेनानुभूयमानश्चित्तावसादो विषादश्च बुद्धिचांचल्यं पितृव्यनिषूदनकर्मणि कालाक्षमत्वं चाजनयताम् । परं तु तेन दृष्टस्सपिशाचस्तस्य जनको वा न वा । कामरूपी यः कश्चना-परः पिशाचस्तं वंचयितुं तेनेदृशं घोरं वधकर्म कारयितुमागतो वेति बहवो विकल्पास्तस्य बुद्धिमनारूढाः । पिशाचदर्श-नस्य भ्रान्तिमूलत्वात्तद्वचनस्याविश्वसनीयत्वादितः परं दृढत-रोपपत्तिभिः पितृव्यस्यापराधमनिश्चित्य तद्वधो न कार्य इति निश्चितवान् ।

एवं चित्तास्थैर्येण पीड्यमानस्य तस्य गच्छति काले परि-वर्तमानेषु दिनेष्वथैकदा समायाताः केचन रजाङ्गीववनभजराम् ।

अथ यत्किंचिद्रूपकमभिनेतुं राज्ञा समाज्ञप्तास्तेत्रायदेशाधीश्वरस्य वृद्धस्य राज्ञः प्रियाभिधानस्य करुणरसप्रधानं निधनवृत्तान्तं तत्पत्न्याश्शुकाभानाम्न्याः परिदेवनं च साभिनयं सचमत्कारं वर्णयंतोऽनुह्लादं ह्लादया चक्रिरे। अथ सोपि राजसन्निधिमागतां-श्चिरन्तनप्रियसुहृदस्तान्नटान् प्रीतिपूर्वक स्वागत व्याहृत्य सत्कृत्य तद्वाणीमाधुर्यजनितमानन्दमनुभवन् तत्प्रेक्षणिकं पुनः प्रयोक्तुं तेषु नटेष्वन्यतमं न्ययुंक्त। सोपि दुर्बलस्य वर्षीयसस्तस्य नृपतेर्वधं तस्य पुरदहनेन प्रजानाशं निजोत्तमाङ्गं कर्पटखंडेनाच्छाद्य जघनं रल्लकेनापिधाय तन्महिष्या भर्तृशोकविधुराया हर्म्यांगणमभितः परिधावनमित्येतत्सर्वं चिरप्रवृत्तमपि तस्मिन् क्षणे प्रवर्तमानमिव दर्शयन् सर्वेषा सामाजिकानां मनासि शोकसागरनिमग्नानि कुर्वाणस्तादात्म्यापन्नतया स्वयमप्यश्रुपर्याकुलेक्षणस्सोत्साहं तद्रूपकमभिनीतवान्। एतन्नाटकप्रयोगोऽनुह्लादस्य मनस्येवं विधां चिन्तामजनयत्। कदाचिदप्यदृष्टाया अनेकाब्दशतेभ्यः पूर्वं मृतायाश्शुकाभादेव्याः कल्पितकथयानर्तकेन सचमत्कारमभिनी-यमानयैवेत्थं सर्वे सामाजिकाश्शोकार्द्रचित्ता बभूवुर्यदि किमु-ताहं तथ्यशोककारणः प्रियजनः कोहं पितृव्येन पितरि मारितेऽ-पि निर्घृणो वैरनिर्यातनचिन्तां विहाय स्वस्थश्शयितोस्मि। धिङ्मां कृतघ्नम्। अगुणग्राहिणम्। तातशुभयशः पराङ्मुखम्। एवं स यदा रूपकाणि तेषामभिनेतॄणां सामर्थ्यं प्रेक्षकाणा

मनसि संजातविक्रियां चाचिन्तयत् । एकदा एकस्मिन्नाटकेऽभिनीयमानं वधकर्म दृष्ट्वा पात्रप्रवेशमहिम्नाऽवस्थासादृश्येन च मयापीदृशं दारुणं कर्मानुष्ठितमिति तस्मिन्नेव प्रदेशे तस्मिन्नेव समये स्वाकार्यकरणमङ्गीकृतवतः कस्यचिन्मनुजस्य वृत्तान्तमनुह्लादस्य स्मृतौ पपात । तत एतैः कुशीलवैस्तत्पितृव्यस्य पुरतः पितृवधकथानुकारि किमपि नाटकमभिनेष्यते चेत्तर्हि कथं तस्मिन् तत्परिणमेदिति जागरूकतया परीक्षितुं तस्य दृङ्मुखरागादिना तदपराधं दृढतरं विनिश्चेतुं च शक्नुयामित्यनुह्लादो निश्चिकाय । एव यथोद्दिष्टं तान् शैलूषान् किमपि रूपकमभिनेतव्यमित्यादिश्य राजानं देवीं च तत्र सामाजिकसंघे सन्निधातुमभ्यर्थितवान् ॥

अथ तैरभिनेयं वस्तु वियन्नगर्यां कस्यचित्सामन्तस्य गंजागाख्यस्य हननकथा निर्दिष्टा । आसीत्तस्य जाया भाप्रतिष्ठा नामैका । लासयाननामा कश्चिद्गंजागस्य सन्निहितबंधुरेकदोद्याने निद्रितं तं विषप्रयोगेण निहत्य तज्जायां वशीचकारेति कथा सम्यक्प्रयुक्ता ।

एतन्नाटकप्रयोगसमये कुमारेण प्रयुक्तममुं कपटोपायं अजानानस्सत्यं नाटकावलोकनकुतूहलतया सदेवीको राजा सर्वै राजवल्लभैस्तत्र सन्यधिषि । अनुह्लादस्तु तदाकारावेक्षणतत्परस्तत्पार्श्वे एव निषसाद । नाटकाभिनये तावत्प्रथममेव गंजागस्य

कलत्रेण सह संवादस्समभूत् । तस्मिन् दम्पत्योस्संभाषणे सा भाप्रतिष्ठा भर्तारमित्थं प्रत्याययत् । "हे नाथ यद्यहं भवदनंतरं जीवितं धारयिष्यामि तर्ह्यन्यं भर्तारं नोपयामि त्वमेव मेऽन्यस्मिन्नपि जन्मनि पतिर्भूयाः । त्वय्यहं सुदृढमनुरक्तास्मि । त्वयि स्वर्गते भर्त्रन्तरं वरिष्यामि चेदभिशस्ता भवेयं प्रायशो भर्तृघातिनीर्नारी विहाय का स्त्री तादृशमनुचितं कर्म कुर्वीतेति' एतद्वाक्यश्रवणेन हठात्सञ्जाता क्रान्तस्य मुखविक्रियामनुह्लादो लक्षयांचकार तद्वचनं राज्ञो देव्याश्च कर्णयोः हालाहलसदृशमभूत् । राजबन्धुर्लालसयानः प्रमदवने प्रसुप्तं गंजागं विषप्रयोगेण मारितवानिति कथासन्दर्भेऽभिनीयमाने नटेन निष्कुटे निद्रालीढनयनं ज्येष्ठभ्रातरं राजानं विषरससेचनेन व्यापादितवत आत्मनो दारुणचेष्टायाश्च प्रबलतरसादृश्यदर्शनात्कान्तः क्रान्तमुखस्स्वाकार्यकरणव्रीडाविदीर्णान्तःकरणतया आकथान्तं तत्र संस्थवस्थातुमशक्नुवानः करदीपिकाप्रदर्शितनिजमन्दिरमार्गस्तात्कालिकशिरोरुजाव्याजेनाकांडे विजहौ रंगस्थलीम् । राज्ञि निष्क्रान्ते नाटकमपि विरमितम् । अथेदानीमनुह्लादः पिशाचोक्तं सर्वं सत्यमेव न तु भ्रान्तिरिति सम्यक्प्रत्येतुं पुष्कलं लिङ्गमलभत अथ यत्किंचिल्लोकोत्तरं केनाप्यननुष्ठितपूर्वमद्भुततरं कार्यं कृतवानिवानुह्लादोऽवस्थान्तरमारूढः पिशाचोदितवाग्जातममूल्यरत्नभांडतुलामारोहतीति शपथमकरोत् । अथ वैरप्रती-

काराय कथं प्रवर्तितव्यं कोवाऽभ्युपाय इति तस्मिन्निश्चयमनधिगच्छति सति तेन सहोपांशु मंत्रयितुं जननी तं समाकारितवती । तस्य प्राक्तनदुश्शीलतया पित्रोर्मनसि काप्यप्रीतिरजायत । तत्प्रतिकर्तुकामा जरत्री राजाज्ञयैव सुतमवरोधमानाययामास । राजापि माता पुत्रयोर्वर्तिष्यमाणे संभाषणे जननीस्वभावसुलभेन सुतपक्षपातेन यत्किंचिदप्रकाश्यं निगूहेदिति शंकमानस्सर्वं वृत्तान्तं साकल्येन ज्ञातुं फलनयाख्यं कंचिद्वृद्धमंत्रिणं देवीमन्दिरे यवनिकाभ्यन्तरे निगूढं स्थातु समादिदेश कुटिलनयोपासनेन व्यवहृतराज्यतंत्रस्य कुटिलमार्गनिष्णातस्य स्थविरसाचिवस्यास्यासावुपायो विशेषेण युज्यते ॥

अथ सा जरंती सविधमागतं तनयं दृष्ट्वा तद्दुश्शीलं तत्कर्माणि च वक्रभंग्याऽक्षेप्तुमारभत । पुत्र! त्वद्दुष्प्रवृत्त्या ते पिता भृशं व्यथितः इत्यवादीत् । ततोनुह्लादस्स्वपितुर्हन्तारं आततायिनं क्रान्तमनुचितेन पितृशब्देनाभिहितवत्यै मात्रे कुप्यन् "अम्बमम पितरि भवती कृतापराधा"इति परुषमभ्यधात् । देवी—पुत्रक! तत्केवलं निरर्थकमुत्तरं यदवोचः । अनुह्लादः—न हि न हि प्रसंगानुरूपं साधुचेदमुत्तरं ॥

देवी—पुत्र! पुरतः स्थितां त्वया भाषमाणां मां किं विस्मृतवानसि ॥

अनुह्लादः—शक्नुयां चेत् त्वां विस्मर्तुमिच्छामि । मम पितरि जीवति सति तस्य महिष्यासीः । इदानीं तदनुजस्य वल्लभा मे माता च इदानीमतिक्रान्तमर्यादासि ॥

देवी—यद्येवं मयि भक्तिहीनोसि तर्हि प्रेषयामितवनिकटमन्यं कंचित्त्वयाभाषितुं समर्थं इति वदन्ती नृपफलनयो रन्यतरमाह्वयितुं तस्मात्प्रदेशादुत्तस्थौ । तदा अनुह्लादः पराङ्मुखीभूय गच्छन्तीं मातरं मणिबन्धे गृहीत्वा तस्मिन्नेव स्थले बलात्समुपवेश्य तस्या दुष्प्रवृत्तिं दूषयितुमारेभे । विक्षिप्तचित्तस्य तस्य तादृशबलात्कारेण सञ्जातप्राणभीतिर्वेपमानगा. त्रयष्टिर्देवी उच्चैराचक्रन्द । तस्मिन्नेव क्षणे परित्रायध्वं महाराज्ञीमित्यपरः कंठरवो यवनिकाभ्यन्तरादुदचलत् । तद्ध्वनि श्रुत्वा तत्र निलीय स्थितः क्लान्त एवेति निश्चित्यानुह्लादो य तस्स ध्वनिरुदगात्ततः खड्गं प्रक्षिप्यैतस्ततो धावन्तं मूषकमिव गाढं प्रजहार । तेन प्रहारेणाक्रन्दन्भूमौ पतितो विचेष्टमानः प्राणान विजहौ । यदा समृतकलेबरं सविधमाकृष्यापश्यत् "तदा नायं राजा अपितु तत्र तिरस्करिणीतिरोहितोऽपसर्पतयास्थितोयं वृद्धमंत्री फलनय इत्यनुह्लादोऽज्ञासीत् ।

देवी—वत्स ! कीदृक्साहसं दारुणं च कर्मानुष्ठितं त्वया ।

अनुह्लादः—अम्ब ! सत्यमिदं दारुणं कर्मैव । किंतु भर्तारं व्यापाद्य तदनुजं पतित्वेन वृतवत्यास्तव कर्मणः, क्रूरतरं

नेदम् । इत्युक्त्वा नैतावता विरम्य पुनरपि तस्या दुश्चेष्टा उपालब्धुं प्रवघृते । अम्ब ! लोके मातापितृगता दोषाः प्रायशः पुत्रैरपरिगणनीया एव । किंतु तौ यदा उत्पथं प्रतिपन्नौ लोकगर्ह्यचरित्रौ स्यातां तदा न मर्षणीयौ तौ निर्भर्त्स्यासत्पथान्निवर्तने तनयः प्रभवति अतः परुषवाक्यैर्विनिघ्नसे । भर्तुर्हतारं नृशंसं क्रान्तमुपयम्य गुणतुंगं निजवल्लभं विस्मृतवत्यसि । प्रथमभर्तरि मत्पितरि त्वत्कृताऽसमपथास्त्वयैवोल्लंघिताः । नेतः परं स्त्रीकृतप्रतिज्ञासु कस्यापि विश्वासो जायेत सर्वे पतिव्रताधर्माडम्बरूपा एवेति वक्तव्यम्। विवाहसंविदोऽप्यक्षधूर्त वचनेभ्योपि लघिष्ठाः कृताः मतधर्माश्चोपहसनीयाऽशब्दमात्रनिष्ठा इति संभावनीयम् । ” इत्येवमतिमात्रकठोरहृदयैर्मर्माविद्भिर्वचनैरनिंदत् । अंब ! किमपरम् । त्वद्दुर्व्यापारेण द्यौरपि व्रीडिता । भूरपिव्यधिता । अथानुह्लादः पितृपितृव्योः प्रतिच्छन्दकमानीय तदग्रे निधाय तयोरूपगुणे तारतम्यं सम्यङ्निरूपयेतिंतामन्वपृच्छत् ।

## ॥ अनुह्लादचरित्रम् ॥

( पूर्वप्रकाशितात्परम् )

अनुह्लादः—अम्ब पश्यैनं हा कथं प्रकाशतेऽस्य मुखचन्द्रः कोपि दिव्य इव दृश्यते । धिषणायां गुरुस्सौन्दर्ये

मनसिजः द्रविभवे सहस्राक्षः राजचित्तरञ्जने बुधस्सर्वदेवतामय इव दृश्यते अयं ते वल्लभ आसीत् । अस्य स्थाने संप्रति यस्मिन्ननुरक्तासि तमपि पश्य भ्रातृवधमहापातकमलीमसो द्रुमव्याधिरिवालोक्यते ।

ततो जरन्ती कुमारेणैवं प्रदर्शितात्मापराधा सर्वं स्वचरित्रं मनस्याकलय्य स्वव्यापारविलक्षा भृश ह्रीणा बभूव । स पुनस्तामपृच्छत् अम्ब त्वद्भर्तारं विनिपात्य दस्योरिव कपटोपायेन तद्राज्यमपहृतवतस्तृणाच्छन्नकूपोपमस्य पितृव्यरूपान्तरितकृष्णसर्पस्य अस्य क्लान्तस्य पत्नी भूत्वा कियच्चिरमनेन सहजीविततरोः फलमुपभोक्तुमिहास्स इति । एवमनुह्लादे मात्रासह सम्भाषमाणे तत्पितृपिशाचो यथापूर्वं धृतवपुर्देवीगर्भगृहे पुनः प्रादुरासीत् । अथ त दृष्ट्वा भयसम्भ्रमाक्रान्तमानसोऽनुह्लादः भूयस्तदागमनकारण तं पप्रच्छ । त्वया प्रतिज्ञातंविस्मृतं वैरशोधनं स्मारयितुं आगतोस्मि । अभयंदेहि भवन्मात्रे नोचेद्दुःखभयपरवशा कदाचिन्म्रियेतेत्युक्त्वा सपिशाचस्तिरोदधे । अनुह्लादं विना न केनापि दृष्टस्सयक्षः । सोपि तदतिदेशं अंगुल्या निर्दिश्य वा यया कयाचिद्विधया वर्णयित्वा वा तं पिशाचं मात्रे प्रदर्शयितुं न शशाक । साप्याकाशेन भाषमाणमिव स्थितं पुत्रं वीक्ष्यातिमात्रमुद्विग्ना चित्तास्वास्थ्येनैवं व्याहरतीति मेने ।

अनुह्लादः—अम्ब मामुन्मत्त इति मावमंस्थाः । अनार्यायास्तव दुश्शीलमेव मम पितरं पुनरिमं लोकमानिनाय। स्वतो निर्दुष्टायां निरागसि मय्युन्मदिष्णुरयमिममपराधमारोपयतीति मामन्यस्व । नाहमुन्मत्तः मन्नाडीं परीक्षस्व । कथमविकृता दृश्यते । अम्ब अतीतस्य कर्मणो विषये जातानुशया अस्मात्पाप्मन आत्मानं विमोचयितुं ईश्वरं जगदन्तरात्मानं प्रार्थयस्व । इतः परं तस्य दुष्टस्य गृहिणीत्वं मुञ्च । यदि नूनं मे माता भवितुमिच्छसि तर्हि सर्वदा तातपादपादाब्जयुगे मिलिंदायमानचित्ता भव । पुत्रेण मया अयमेव वरः प्रार्थ्यत इति अश्रुपरीतनयनो मातुश्चरणावुपसञ्जग्राह । कुमारेण यथाज्ञप्तं तथैवानुतिष्ठामीति सापि प्रतिज्ञापूर्वकमवोचत् । एवमवससादैतयोस्संवादः ।

दुस्सहक्रोधावेशविवशतया मयेदानीं निषूदितः पुरुषः कोन्विति तन्मृतकलेबरं स्वसमीपमाकृष्य सम्यक् निरूप्य असौ मत्प्रियायाः फलिन्याः पिता वृद्धमन्त्री फलनय इति अनुह्लादो यदा बुबुधे तदा जातविप्रतीकारो भृशं विललाप ।

अथ दुर्भगस्य फलनयस्य वधं व्याजीकृत्य राजा क्रांतोऽनुह्लादं स्वराष्ट्रात्प्रवासयितुमयतत । अनुह्लादानुरक्ताभ्यः प्रकृतिभ्यो महिष्याश्च स यदि नाभेष्यत् तदा तं बालं सद्य एवाहानिष्यत् । एवं स दुरात्मा क्रांतः फलनयवधात् कृता-

पराधस्यानुह्लादस्य राजदण्डाभावेन क्षेमो विधेय इतीच्छया परिकल्प्य राजसभासङ्ख्या सनाथीकृतमेनमांग्लेयदेशं प्रेषितवान् । तत्काले धर्मार्कराज्यागभूतस्य करदीकृतस्यांग्लेयविषयस्याधिपतये आज्ञापत्रमपि प्रजिघाय । भूम्यवतरणानंतरमेव अयमर्भकोऽनुह्लादः केनापि व्याजेन हन्यतामिति । अनुह्लादस्तु तत्सर्वमुपजापं विशंकमानस्तन्नक्त रहसि तत्पत्रिकामुद्घाट्य अवाचयत् सुनिपुणं तत्र स्वनाम प्रोछन् तत्स्थाने राजवल्लभयोराख्या विलिख्य यथापूर्वं पत्रिकामुखं जतुना मुद्रयित्वा यथास्थानं निदधे । अथ नावि गच्छंत्या मध्येसमुद्रं घोरा नावमवचस्कन्दुः । तदा नौस्थानां तैस्सह तुमुलमायोधनं प्रववृते । तत्रांतरेऽनुह्लादो निजविक्रमं तेभ्यो दर्शयितुमिच्छन्नेकाकी मण्डलाग्रालंकृत भुजदण्डस्साहसैकरुचिर्विक्रमानुरूपं रिपुनौकामभिपपात । एतस्मिन्नंतरेऽनुह्लादेन पूर्वारूढा नौका शत्रुभ्यो भीता तं परित्यज्य कान्दिशीकतामियाय । तदारूढौ राजवल्लभावप्यांग्लभूमिं गतौ । अथ समुद्रदस्यवश्च स्वनौकारूढं वशंवदमनुह्लादं व्यूढोरस्कत्ववृषस्कंधत्वाद्यसाधारणचक्रवर्तिलक्षणैर्महाराजपुत्रं विदित्वा तस्मिन् जातानुकंपा असावस्मदादिभिर्विपदि कृतोपकारश्चेद्राज्यप्राप्त्यनंतरं अस्मदुपकृतेः प्रतिकृतिं कुर्यादिति मन्वाना धर्मार्कदेशे स्वराजधानीनेदिष्ठनगरे तं न्यस्राक्षुः । तत्रस्थएवानुह्लादो दिष्ट्या पुनस्स्वदेशप्राप्तिं पितृ-

व्याय निवेदयितुकामः श्वः प्रभाते महाराजं द्रष्टुमागमिष्यामीति सन्दिदेश ॥

एवं तस्मिन्निजमन्दिरं प्रविष्टमात्रे प्रथममेव विषादबहुलं किञ्चिद्दृष्टं तेन तदिदं । निजनयनमहोत्सवभूतायाः फलिन्याऔर्ध्वदैहिकक्रियानिर्वर्तने सा तपस्विनी दुहितृवत्सलस्य स्वपितुर्मरणात्प्रभृति बुद्धिमोहमुपागता अन्येवाजनि । यस्मिन्जने सा दृढमनुरक्ता तेनैव स्वपिता व्यापादितोऽभवदिति व्यथितहृदया । अचिरेणैव कालेन चिंताकलुषीकृतचित्ता सावज्ञेव भूताविष्टेव इतस्ततो भ्रमंती कदाचिदसौ नृपप्रमदावन गत्वा पुष्पाण्यपचित्य तानि पितृनिवापार्थानीत्यभिधायावरोधवधूभ्यो ददती दिङ्मूढेवाविदितनिजावस्था अर्थविधुराणि वचासि जल्पन्ती शृंगारकरुणरसमिश्राणि गीतानि गायंती परिबभ्राम । अथ कदाचिदासन्नगिरिणद्यां प्रतिबिंबितपल्लफलकुसुमस्य कस्य चिद्वनतरोः कुसुमान्यपचित्य मालां ग्रथितुमना एकाकिनी तद्गिरिनदीमासाद्य तत्र प्ररूढैर्नानाविधारण्यकपुष्पैः स्रजं विरचय्य तत्तरुशिखरे निधातुं दुरधिरोहमुत्तुंगभूरुहमारोहंती शाखाभंगेन दूरादधो निर्झरिणीजले पपात । तत्र स्ववस्त्रभारेण क्षणमात्रं जलोपरि प्लवमाना अज्ञातनिजव्यसना किन्नरीव गीतानि गातुमारेभे । क्षणादनंतरं जलक्लिन्नवासोभारेणाधः कृष्टा जले निममज्ज ममार च । तदिदं तस्याश्चन्द्र-

मुख्याः फलिन्याः पारलौकिकं कर्म तदनुजन्मना लाटाख्येन वितन्यते। तत्र समुपस्थिता सपरिवारा देवी राज्ञा सह। तस्मिन्नेव समयेऽनुह्लादोऽपि तत्र समायातः प्रथममेतस्य प्रेक्षकस्याभिप्रायं विनिश्चेतुमशक्नोतरा कर्मणोतरायं रचयितुमनिच्छन्ननुह्लाद एकत्रावतस्थे तदा। स्त्रीणां यदाकर्मानुष्ठेयं तदास्मिन्नपि कर्मणि निष्ठां गमिते सति तस्याश्श्मशानगर्ते पुष्पाणि विकीर्णानि देवीच स्वयं पुष्पाणि विकीर्य प्राह। वत्से! मधुरायास्ते मधुराणि। त्वद्विवाहमंगलनैपथ्यरचनामभिलषन्त्या मम मन्दभाग्याया मनोरथोसहिष्णुना दैवेन भग्नः। एतदेवोपस्थापितं तेन अस्माकं वधूर्भवित्री—हा एवं पर्यवसितासि। अथ लाटोपि वत्से भगिनि प्ररोहंतु कुसुमलतास्त्वच्छ्मशाने इति वदन् दुर्भरदुःखावेशविवशस्तस्यानिखननश्वभ्रे आत्मानं पातयितुं तदभिमुखं धावन् यावन्मे प्रियसोदरो परलोकस्य प्राहुणिकी भवति तावदेव तामनुगच्छामि राशीकुरुत ममोपरि मृत्पिण्डानित्युच्चैराक्रोशन् अनुह्लादेन दृष्टः। भ्रातृशतेभ्यस्तस्याः प्रेयाननुह्लादोपि तद्गतं पूर्वानुरागं स्मृत्वा एतत्संविधानदर्शनेन शोकाकुलहृदय उद्वेलशोकसागरस्यान्यथापरीवाहप्रक्रियामलभमानमात्मानमपातयत् फलिनीश्मशानश्वभ्रे यत्र लाटः पूर्वमेव प्रविवेश तत्र मत्पितरं घातितवानयमेव ततो ममासौ रिपुरिति अनुह्लादं लाटो गल्हे

जग्राह । आजुहुवे नियुद्धाय च । तस्य संरंभं वीक्ष्य सर्वे तद्नुचरा इतस्ततो विद्रुताः । अनुह्लादो लाटस्य पादयोः पतित्वा सहसा विहितो ममापराधः क्षंतव्य इति प्रार्थयाञ्चक्रे । सोपि सोदरीशोककर्शितस्सन्प्राह त्वया कृतइति क्षमे त्वदन्यस्य कस्याप्येतादृशमपराधं न क्षाम्येयं इति एवमेतौ महाशयौ युवानौ कृतसंधी कञ्चित्कालं शांतवैराविव बभूवतुः ।

अथैवं गच्छति काले दुष्टोनुह्लादस्य पितृव्यस्तं व्यापादयितुं पितृवधामर्षी तेन लाटेन रहसि मंत्रयित्वा द्वंद्वसंप्रहारे तयोरुभयोः कौशलपरीक्षणे ममातीव कुतूहलमित्यपदिशन् लाटेनानुह्लादस्य सन्देशं प्रेषितवान् । युद्धनिमन्त्रणमन्वमोदतानुह्लादोऽपि । कस्मिंश्चिन्नियतदिने लाटानुह्लादयोश्शस्त्राशस्त्रि युद्धं भविष्यति तद्दर्शनाय सर्वैरागन्तव्यमिति नगरे सर्वत्र उदघोषीत् । अस्मिन्युद्धसमये वीक्षाकुतूहली स्वपरिवारो राजा सर्वे मन्त्रिणो राजवल्लभाश्च सन्निदधुः । क्रान्तेन पूर्वं दत्तसङ्केतो लाटो विषसंपृक्तं शस्त्रं सज्जीचकार । यतस्तौ द्वावपि शस्त्रयुद्धे निरूढिमागतौ परस्परजयैषिणौ निजपराक्रमानुरूपं युध्यमानौ दृश्येते ततस्तत्र ससदि बहुभी राजवल्लभैर्बहवः पणबन्धाः कृता स्तयोरन्यतरविजये । द्वन्द्वयुद्धमर्यादानुगुण्येन क्रीडाखड्गं लोहयष्टिं वा अगृहीत्वा निशितविषपृक्तं शस्त्रं

गृहीतवतो लाटस्य द्रोहबुद्धिमजानन् तस्य कृपाणं वा आदाव-परीक्षमाणः कुण्ठमेकं शस्त्रमादाय योद्धुमारेभे । लाटोनुह्लादेन क्रीडन्निव युध्यमानः प्रथमन्तमेव जापयन्निव युयुधे । कपटाशयो राजा क्लान्तोपि स्वाकारगुप्तिं कुर्वन्ननुह्लादस्यैव विजयमाशंसमान इव लक्षितस्तस्यैवानामयाय पिबन्निव तस्य जयं प्रशशंस । तयोरेवं युध्यमानयोर्लाटः कोपोद्दीपितमानसस्सन् विषपृक्तेन निजकृपाणेन अनुह्लादस्य कण्ठपीठे गाढं प्रजहार । तेन प्रहारेण क्षणमात्रं विसञ्ज्ञोऽप्यनुह्लादः पुनर्लब्धसंज्ञः क्रोधाविष्टः तस्मै प्राणहरं प्रतिप्रहारं दत्तवान् । एवं तौ वीरप्रकाण्डावन्योन्यं प्रजह्रतुः । लाटस्य द्रोहबुद्धिपरिकल्पितं कपटनाटकं तस्मिन्नेव फलतिस्म । अस्मिन्व्यतिकरे देवी विषं पातास्मीति तारस्वरेण चक्रन्द । यद्यनुह्लादो लाटं पराजेष्यते तदास्यपातुं मद्यं अपेक्षणीयं भवतीति मत्वा राजा विषमिश्रं मद्यपूर्णं पात्रं कल्पयामास । प्रमत्तया देव्या एतच्च मधुपूर्णं पात्रं रिक्तीकृतं राजा तत्पानार्त्तां निवारयितुं व्यस्मरत् । देवी प्रमादात्तत्पीत्वा विषं पीतवत्यस्मीत्याक्रोशन्ती पञ्चत्वमुपागता । अनुह्लादस्त्वेतत्सर्वमभिमतं इति ज्ञात्वा विषपरीक्षातत्परो राजमन्दिरद्वाराणि पिधातुं समादिदेश । ततः किमर्थस्तवायं विषपरीक्षाप्रयासः भवद्विषये अहमेव द्रोहकृदिति जानीहीति लाटस्स्पष्टमवदत् । सोप्यनुह्लादस्त्वरुन्तुदप्रहारेण मरणवेदनामनुभवन्क्षतजोक्षिताङ्ग इदमाह । आर्यानुह्लाद सर्वस्यास्योपजापस्याहमेव निमित्तं। ।

तत्फलमपि मयैवानुभूतं शस्त्रस्य विषपृक्ततया विषस्याप्रतीकार्यत्वाच्च भवानपि क्षणादूर्ध्वं न जीवति क्षंतुमर्हसि मामागस्विनमार्यः । अस्य कपटनाटकस्य प्रणेता क्रांत एव । एवं लाटः पश्चिमा वाचस्समुदीरयन् दुस्सहप्रहारवेदनामसहमानश्चक्षुषी निमील्य विरतश्वासोऽभूत् । अनुह्लादोपि प्रत्यासन्नमरणावस्थमात्मानं बुद्ध्वा स्वल्पावशिष्टविषेण शस्त्रेण पितृव्यं हृदये विव्याथ । सोपि सपत्नाकृतो भूमौ पतित्वा विचेष्टमानो ममार । एवमनुह्लादः पितृघातिनं पितृव्यं क्रांतं हत्वा यक्षरूपिणे पित्रे प्रतिश्रुतं वैरनिर्यातनं अद्य निर्व्यूढवान् । आसन्ननिर्वाणो निर्यत्सु प्राणेषु प्रियसुहृदः एतद्दुःखनाटकप्रेक्षकस्य होराशयस्याभिमुखो भूत्वा तमित्थं व्याचचक्षे । वयस्य! भवानपि मद्दुःखेन मर्तुकाम इव लक्ष्यते त्वं माकार्षी स्तथा त्वमेकोपि अस्मिन् लोके इमाम्मत्कथा प्रकाशयितुं चिरमेधि । न परित्याज्याः प्राणाः । सोपि वयस्यानुह्लाद भवत्कथां लोके यथातत्वं प्रकाशयिष्यामीति अस्मै प्रतिशुश्राव । एवं पूर्णमनोरथोनुह्लादचन्द्रोस्तमियाय । अथ पार्श्वस्थिता होराशयप्रभृतयः क्षणं बाष्पायितदृशः तस्य निर्हरणादिकाः क्रिया निर्वर्त्य तदुत्तमलोकप्राप्तये देवतास्तुष्टुवुः । अनुह्लादो हृदयालुर्विमृश्यकारी दांतस्सत्यसंधस्सुशीलश्चाभूत् । यदि स कुमारश्चिरमजीविष्यत् धर्मार्कदेशो राजन्वानभविष्यत् ॥

॥ समाप्तं ॥

---

## 3. Merchant of Venice
## ( विनिशापुरीवणिक् )



Shylock = शैलेशः

Antonio = अंतनयः

Bassanio = भासनीयः

Portia = पौरुषी

Gratiano = घटयानः

Belmont = बिल्ववत्

Venice = विनिशा

Balthasar = बलारिः

••

# विनिशा[illegible]वणिक्

अस्ति सकलाशाविश्रुता वसुन्धरालङ्कारभूता विनिशा नाम नगरी । आसीत्तत्र शैलेशनामा कश्चिदिभ्यो वार्धुषिकः । यस्तत्पुरवासिभ्यो वणिग्भ्योऽधिकवृद्ध्यै ऋणानि दत्वा तेभ्य ऋणविशोधनसमये मूलद्रव्यादभ्यधिका वृद्धि बलादाकर्षन्नमितं धनं सञ्चिकाय । यदाऽधमर्णानतिकठोरहृदयतया ऋणप्रत्यर्पणे भृशम्पीडयामास । तदा तत्रत्याना सर्वेषा साधुजनानां द्विष्टोऽभूत् । विशेषतस्तत्पुरवास्तव्यस्य कस्यचिद्वणिग्यूनोऽन्तनयाख्यस्य । तं शैलेशोऽतीव दिद्विषे । यतस्सदयालु र्जनेभ्य स्समुपस्थितेषु व्यसनेषु वृद्धिं विनैव ऋणानि ददौ । यदा ते प्रत्यर्पयंस्तदैव प्रतिजग्राह । नकदाचित्तेषामुद्वेगमजनयत् । एवं क्रमेण विरुद्धशीलयोर्लुब्धोदारयोस्तयोः प्रभूतं शात्रवं समवर्धत । यदा यदा अन्तनयः श्रेष्ठिचत्वरे शैलेशमपश्यत्तदा तदा तत्कुसीदव्यापारपारुष्यमुच्चैर्निनिंद । सोपि तां निन्दां मर्षयन्निवालक्ष्यत । इतरस्तु वैरनिर्यातनायैव रहो मन्त्रयतेस्म । अन्तनय स्तदानींतनेषु सदयान्तः करणो धनाढ्यस्सर्वजनोपचारविधावविश्रान्तोत्साहश्च बभूव । किंबहुना तत्कालेऽहिस्थलीदेशे जीवतां निखिलजनाना मध्ये सज्जनविहङ्गनीडवृक्षे तस्मिन्नेक एव

प्राचीनरोमकदेशीयमर्यादा बभौतराम् । ससकलपौरजनमनश्च-कोरपार्वणचन्द्रतामवाप । तेषु पौरेष्वासीदेको भासमानगुणगणो भासनीयो नाम तन्नगरवासी अन्तनयस्य द्वितीयं हृदयं बहिश्चराः प्राणाइव स्थितः कश्चित् हृदयङ्गमस्सखा । यो व्ययशीलो भोगलालसतया ह्यात्मनोऽत्यल्पं पितृदायमचिरादेव व्ययितभूयिष्ठं कृत्वा अकिञ्चनस्संवृत्तः । तादृशा ह्यभिजाता युवानः प्रायशो व्ययशीलाः खलु भवन्ति । यदा यदा भासनीयो धनमियेष तदा तदाऽतनयस्तद्वाञ्छितं पूरयामास । नूनं तावेकहृदयावेकधनोपभोगाविव प्रत्यभाताम् । तयोरेवं गच्छति काले । अथैकदा भासनीयोऽन्तनयस्यान्तिकमागत्येत्थमाचचक्षे । भो वयस्य श्रूयताम्मद्वचनम् । "अस्त्येका वरवर्णिनी अशेषप्रमदाजनललामभूता विनिशानगरोपान्तस्थितबिल्ववन्नाम्नि शाखानगरे । पितृपार्श्वस्थिता सा सर्वाङ्गसुन्दरी तत्र गतस्य मे बहुवारं नेत्रातिथीबभूव । ततस्तस्या मुदपादि मम चक्षूरागो भगवता सङ्कल्पयोनिना । मयि च तस्याः । अवेदयच्चानक्षरं न मे भवाननुरूपो वरइति स्वाभिप्रायमसकृदादीपितकन्दर्पैरपाङ्गवलनसन्देशैः । अचिरेणोपरतोऽस्याः पिता प्रियतनयस्सर्वस्यात्माविभवस्य तामेव स्वामिनीं चकार । ततोहं तां कन्या परिणीय क्षीणभूयिष्ठां मदृद्धिं पुनर्नवीकर्तुमभिलषामि । उच्चैःपदस्थितां कुलीनां तादृशीं

कुमारीं पाणौ कर्तुं स्पृहयालोर्वराहँ सुभगवेषं सम्पिपादयिष-तश्च मे निस्स्वता भवतो विदितपूर्वैव । तस्माद्भवता मयि कृत-चरेषु प्रसादेष्वयमेकतम इति परिगणय्येदानीं निष्कसहस्रत्र-यपरिमाणं धनं ऋणरूपेण दातुं भवन्तं प्रार्थये इति" । तत्समये वणिग्भाण्डपूरितानां कतिपयनौकानां तीरप्राप्तिं प्रतिपालयन्स्थि-तोऽन्तनयोऽपि द्रव्याभावान्मित्रस्य मनोरथं सफलीकर्तुमशक्नु-वन्निदमुवाच । "वयस्य वृध्याजीवस्य शैलेशस्य निकटं गत्वा समुद्रस्थितानां तासां मन्नावामधीनीकरणेन यावदपेक्षितं धनं त्वत्कृते ऋणं ग्रहीष्यामीति" । यथोद्दिष्टं तौ तत्र गत्वा समुद्र-स्थितानां नावां भाण्डविक्रयद्रव्येण प्रत्यर्पयितुं तदभिलषितवृद्ध्यै त्रिसहस्रसंख्याकान् निष्कान् ऋणं ययाचाते । ततश्शै-लेशएवं मनस्यचिन्तयत् । "यद्यसाविदानीं मे हस्तगत इति गले गृह्णीयां तर्हि प्राचीनमात्सर्यस्य हस्तावलम्बो दत्तस्स्यात् । असावस्माकं जातिं सर्वदा द्वेष्टि । अस्मास्वभ्यसूयया स्वलाभ-मप्यविगणय्य वृद्धिं विना ऋणानि ददाति । वैदेहकगोष्ठ्यां ममार्थप्रयोगं वणिग्भावं च मुहुर्विनिन्दति । हा मज्जातिम् । यद्यहं क्षमेय तमिति"। अन्तनयस्तु मनसि दीर्घं विचिन्तयन्तं प्रत्युत्तरमददतं तं वीक्ष्य द्रविणादानोत्सुक इत्थमाबभाषे 'शैलेश 'किन्नप्रविष्टं ते श्रवसी मद्वचः । किं दीयते वा न वा ऋणं' एवमनु-युक्तस्सोपि प्रत्यभाषत । "आर्यान्तनय ? श्रेष्ठिचत्वरे मद्वाणिज्य-

पारुष्यव्यपदेशेन मां शतकृत्वो निन्दितवानासि । तत्सर्वमवनतोत्तमाङ्गेन मया स्वीकृत्यासाहि । यतोस्मदीया जातिः क्षमालङ्काराहि । मां नास्तिकइत्याततायीत्यनेकशो व्याहृतवानासि । मद्वसनोपरि निरष्ठीव्यः श्वानमिव मां पदा हन्तु मभ्युद्यतोसि । हन्त इदानीं मत्साहायकाय स्पृहयसि । मामागत्य शैलेश ? ऋणं देहीति वदसि । किं शुनो धनमस्ति । श्वा त्रिसहस्रं निष्कान् ऋणं ददातीति कात्र सम्भावना । सुभग सप्रश्रयं विज्ञापयामि पूर्वेद्युर्ममोपरि निरष्ठीवः । अन्येद्युर्मां भषक इत्यभ्यदधा एतेभ्य उपचारेभ्योऽहं ते ऋण ददामीति " ।

अन्तनयः. अरे ! सार्थवाह ! त्वां पुनस्तदेव व्याहरामि पुनस्तवोपरि निष्ठीवामि । पुनः पदापगारं ताडयामि । यदि ऋणं नददासि मित्रायेव मा प्रयच्छ । शत्रवइव देहि । यद्यहं तत्प्रत्यर्पणसमयं भनज्मि तर्हि मत्तो दण्डं गृह्णीयाः ।

शैलेशः—अरे ! किमेवं गर्जसि त्वया मे मैत्रीभवतु । अहं त्वत्प्रेमपात्रं भवितुमिच्छामि । त्वत्कृतामवज्ञां नेतः परं स्मरामि । दत्तऋणस्य वृद्धिं च नाभिकाङ्क्षामि ।

एवं कपटसौहार्दनिवेदनेन विस्मयोत्फुल्लमुखमन्तनयं वीक्ष्य तस्य प्रेम्णः पात्रीकर्तुमात्मानमद्यापि कूटानुरागं दर्शयन् शैलेशः "अन्तनय ! स्मेरमुखो भूत्वा भवानेकएव मया

सार्धं धर्मशास्त्राभिज्ञस्य सान्निधिं प्राप्य तत्र निर्दिष्टदिनावधौ यद्यहं दत्तं ऋणं प्रत्यर्पयितुं न शक्नुयां तर्हि शैलेशाभिमतान्मच्छरीरावयवात् प्रस्थमात्रं मांसं खण्डितं दास्यामीति प्रमाणपत्रं लिखसि चेत् वृद्धिं विहाय ऋणं ददामीति" पुनः पुनः प्रतिजज्ञे ।

अन्तनयः—शैलेश ! एतावता सन्तुष्टिमाप्नुहि । लिखामि प्रमाणपत्रं यथा मनीषितम् । दयालुता भवत उद्घोषयामि । सोऽपि भासनीयेन प्रियसुहृदा मत्कृते त्वया तादृशं प्रमाणपत्रं नलेखनीयमिति बलवन्निवार्यमाणोऽप्यभिनिविष्टबुद्धिस्सन् करिष्याम्यवश्यं पत्रलेखनं ऋणविमोचनावधिदिनात्प्रागेव ऋणधनाधिकमूल्यभाण्डपूरिता नावः प्रतिनिवर्तेरन्निति प्रत्युवाच ॥

एतयोर्विवादं श्रुत्वाऽथ शैलेशो "हा भगवन्नीश्वर ! धिगिमान् शङ्काशीलान् । एषां दुष्प्रवृत्तिरेवेतरेषा मनोगतं विशङ्कितुमपि शिक्षयतीत्युच्चैराक्रुश्य भासनीयमिदमवादीत् " ।

"सौम्य भासनीय यद्यन्तनय ऋणनिर्णेजने नियतदिनमुल्लङ्घते तर्हि कोवा मम लाभस्यात्तस्य मांसस्य बलाद्ग्रहणेनेति पृच्छामि भवन्तम् । कथय । प्रस्थपरिमाणं मांसं मनुष्यादुत्कृत्तं गोरजस्यवा मांसवत् न श्लाघनीयं नापि भक्षणीयम् । एतत्सौहार्दपण्येन तस्य प्रसादं क्रेतुमिच्छामि । सोप्यङ्गीकरोतु मत्प्रार्थना । नोचेत् स्वस्त्यास्त्विति " एवं शैलेशेन सस्नेहमु-

क्तोपि "मत्कृते मम प्राणमित्रं तादृशोद्वेगकरनिष्कृत्या संशयितजीवितो माभूदिति" भासनीयस्य निवारयतस्सतस्सर्वाश्शैलेशोक्तीः परिहासगर्भा विभावयन्ननन्तनय ऋणपत्रं स्वनामाक्षरैरानङ्के । धनिनीं कुमारीं यां भासनीयोऽभ्यविवक्षत् । सा विनिशोपान्तस्थितबिल्ववन्नामानं शाखानगरमध्युवास । नाम्ना पौरुषी सा शरीरलावण्ये सौमनस्येच कलयापि नहीयते तस्या अपरस्याः पौरुष्याः या केतोः पुत्री बृहतस्य धर्मदाराः । सात्वन्यत्र कथ्यते ॥

अथ भासनीयो जीविताशानिरपेक्षसाहसिकेन प्रियवयस्येनानन्तनयेनोपकल्पितधनः घटयानाभिधं कञ्चित्सहचरमादायोदारनेपथ्यवता महता परिबर्हेणानुयातो बिल्ववन्तं प्रतस्थे । तं वधूप्रार्थनानुरूप्ये लब्धकामतया सम्प्रतीतमचिरादेव पौरुषी स्वपाणिं ग्राहयितुं मनश्चकार । भासनीयोऽप्यात्मानमकिञ्चनं महाकुलीनतामात्रधन तस्यै न्यवेदयत् । तद्गुणानुरक्ता "अतिशयितविभवानादृतभर्तृधना सा व्रीडाललितामिदमूचे । नाथ ! त्वत्कराम्बुजावलम्बनमहार्घताया आत्मनोर्हता सम्पादयितुमियं मे रूपसम्पदियती धनसम्पत्तिर्वा नालमिति मे मतिः । अहमनुपदिष्टा । अशिक्षिता अविनीता प्रमदा । अनतीतविद्याभ्यसनकालाच । तस्मादितः परं सर्वविषयेषु ममाऽऽर्यपुत्रएवाचार्यकं रचयत्विति प्रार्थये इति ॥

मदात्मात्मीयं च भवदीयीकृतम् । आर्यपुत्र! यावत् ह्यः स्वामिन्यहमस्य रमणीयहर्म्यस्य । आत्मन ईशित्री । एतेषां भृत्याना गृहस्वामिनी चासम् । स्वामिन्नद्य प्रभृति इदं वेश्म इमे भठाः अहं च भवदीयानि । अनेनाङ्गुलीयकेन सह तानि भवते ददामीत्यूर्मिकां प्रायच्छन् । अहो तादृगुदारप्रकृतिः पौरुषी एतादृशं दुर्गतं मा पति धृतवतीति भासनीयो यथा आत्मनः आनन्दमादर वा बहिर्वक्तुं न शशाक तथा विस्मयेन परवान् भूत्वा ऊर्मिकामादाय न कदाचिदिमां परित्यजेयमिति धृतव्रतोऽभून् । एवं गेहिनीभवितुं पौरुष्यां तस्मै सविलासं प्रतिशुश्रुष्यां घटयानस्तस्या श्रेटी निरीशाख्याच तत्र सन्यधिषाताम् । घटयानस्तयो र्वधूवरयोः कल्याण माशंसमानस्तस्मिन्नेव समये स्वोपयमायानुज्ञा चकमे । "घटयान! प्रकामं तथा क्रियतां यद्यवाप्यते कलत्रमिति भासनीयः प्रत्यवादीत्तं । ततो घटयानः, पौरुष्याः परिचारिका मनोज्ञा आर्यशीला निरीशाभिधाना मय्यनुरक्ता सापि मत्कुटुम्बिनीभवितुमङ्गीचकार । यदि भवन्तं पौरुषी हस्ते करिष्यति तदा तामहं परिणेष्यामीति" निजाशयं भासनीयाय व्यवृणुत । तत्वं जिज्ञासमाना पौरुषी तयो रनुरागकथा तां निरीशामपृच्छत् । साप्यार्ये यदीदं भवत्यै रोचते तर्हि तथैवेत्याचष्ट । तयोः परिणये पौरुष्या

प्रकाममनुमन्यमाने भासनीयो मधुरमिदमूचे । घटयान ! युष्मद्विवाहमहोत्सवांचितस्स्यादस्मत्परिणयोत्सवः ।

अत्रांतरेऽन्तनयसान्निध्यादुद्वेगकरीं वार्तामाहरता प्रविष्टेन केनचिद्वार्ताहरेणानयोर्वरयोरेवं मिथो नर्मगर्भं सल्लपतोः प्रमोदोऽकाण्डचण्डवातेनेवाम्बुदोत्करश्शतधा बिभिदे । अथ लेखमुद्घाट्य वाचयतो भासनीयस्य मुखकमलविच्छायतामवलोकयन्ती पौरुषी यस्य कस्यापि प्रियसुहृदो मरणोदन्तः प्राप्तइत्यबिभत् । हृदयमर्मच्छेददारुणा का सा वार्तेति तया पृच्छ्यमानोऽचकथत् । प्रिये पौरुषि! किं कथयामि मन्दभाग्यः अनभ्राशनिपातसन्निभानि वचास्यत्र लिखितानि । निस्स्वः कुलीनतामात्रधनोस्मीति त्वयि मदनुरागप्रकाशनवेलायामेव मया भवत्यै विज्ञापितम् । ततस्सपत्रिकागतं सर्वं वृत्तान्तमादितः प्रभृत्याचिख्यासुः अन्तनयात्स्वस्य ऋणादानं तस्यान्तनयस्य पुनश्शैलेशनिकटात्तद्ग्रहणं ऋणनिर्णेजनावधिदिने तत्प्रत्यर्पणाभावे स्वगात्रात् प्रस्थपरिमाणं मासमुत्खण्ड्य दद्यामित्यंतनयस्य प्रमाणपत्रलेखनमित्यादिकं पौरुष्यै व्यवृणोत् । ततोऽन्तनयस्य लेखमेवं वाचयतिस्म । "प्रियवयस्य भासनीय! निमग्ना स्सर्वा मन्नावस्समुद्रे. शैलेशाय मल्लिखितस्य प्रमाणपत्रस्य प्रतिज्ञोदचारि । यदि तदनुसारेण तत्प्रत्यर्पणमनुतिष्ठेयं तर्हि नातःपरं मे जीविताशा । यथास्मिन्मरणसमये त्वां द्रष्टु-

माशंसते मे मनस्तथा तवापि नूनं यदि सहजस्नेहकातरतया बद्धदर्शनोत्कण्ठं मयि मनस्तर्हि सकृत्तव मुखपङ्केरुहं दर्शय । मल्लेखप्रोत्साहितेन तु भवता नागन्तव्यमिति" । एतत् श्रुत्वा पौरुषी "आर्यपुत्र ! अविलम्बिततरमत्र कार्यं निर्वर्त्य प्रतिष्ठस्व सुहृत्प्राणपरिरक्षणार्थं त्वदपराधाद्विपत्तिं गमितस्य तवास्य प्रियसुहृदो यावच्छायापि नकाञ्चित् क्षतिमाप्नोति तावदेव तदृणमपाकर्तुं यतस्व । भवदायत्तेन तस्माद्विंशतिगुणाधिकेन मम सुवर्णेन यतो भवांस्तादृश्या निष्कृत्या क्रीतः ततस्त्वय्यधिकतमा प्रीतिमुद्वहे" इति प्रोवाच । पौरुषी स्वद्रविणजाते भर्तुर्भासनीयस्य न्याय्यं स्वाम्यं घटयितुमनास्तत्प्रस्थानात्प्रागेव तमुपयन्तुं निश्चिकाय । तथा तस्मिन्नेव दिवसे तयोः पाणिपीडनविधिस्समवर्तत । घटयानोपि निरीशामुपयेमे । इत्थं भासनीयघटयानौ विवाहानन्तरएवाकृतकालविलम्ब प्रतस्थाते विनिशानगरीं । यत्रान्तनयो बन्धनागारे विक्षिप्तस्समदृश्यत । ऋणनिस्तारावधिदिनस्यातिक्रान्ततया नृशंसश्शैलेशो भासनीयेन दत्तं धनमप्रतीच्छन्नन्तनयस्य मांसग्रहण एव निर्बन्धमकरोत् । न्यवेदयच्च राजसन्निधौ । धर्माधिकरणे विनिशाधिपतेः पुरत एतद्दारुणं व्यवहारं विमृशितुमेकं दिनमपि निरूपितमासीत् । भासनीयोपि प्रियवयस्यस्य किंवा आपतिष्यतीति महाभयेन डोलिकादोधूयमानचित्तवृत्तिर्विचारणापरिणामं प्रतिपालयाञ्च-

कार। पौरुषी भर्तुः प्रस्थाने प्रसन्नमुखपुण्डरीका भूत्वा प्रतिनिवर्तनसमये तेन साकं तत्प्रियसुहृदं बन्धनाद्विमुक्तमन्तनयं निजगृहमानेतुं दयितमादिदेश। अन्तनयस्य सङ्कटमापतिष्यतीत्यधिकं बिभयांचकार। एकांतस्थिता सा येनकेनचिदुपायेन भर्तुः प्रियमित्रस्य प्राणपरित्राणे आत्मानमुपकरणीकर्तुं दीर्घचिन्तामतानीत्। सा प्रथमं भर्तरि भासनीये स्वप्रतिपत्तिं दर्शयितुं भवत्प्रज्ञातिशयेनैवेतःपरं सर्वविषयेष्वीशितव्यास्मीति कलत्रोचितानुकूल्येन सविनयमुक्तवत्यपि तथापि पूज्यस्य हृदयवल्लभस्य सुहृद्विनाशेन कर्मणि प्रोत्साहिता आत्मनस्सकलं सामर्थ्यं विनियुयुक्षमाणास्स्वकीयपूर्णपरिच्छदमात्रसहाया द्रुततरं विनिशां प्राप्य तत्रान्तनयस्य पक्षसमर्थनायोत्तरं दातुं निरचिनुत। तत्रासीत्कश्चिद्दुलारिनामा पौरुष्या बन्धुर्व्यवहारतन्त्रसचिवो निपुणमति र्विद्वान्। यस्मै पौरुषी अन्तनयस्य कार्यगतिं विवृण्वती तस्यार्थतत्त्वं ज्ञातुकामा व्यवहारसचिवैर्धार्यपरिच्छदं प्रेषयितुं दूतद्वारा लेखं विससर्ज। प्रत्यावृत्तः प्रणिधिः कार्योपक्रमोपदेष्ट्रीं पत्रिकां सज्जीकरणाय तदपेक्षितं सर्वं चानिनाय। पौरुषी निरीशया सह पुरुषवेषमाधाय मन्त्रोपदेशकस्य वासांसि परिधाय लेखकीकृतनिरीशाद्वितीया सद्यएव विनिशामभ्ययासीत्। विमर्शदिनएव तां पुरीं समनुप्राप्ता। राजसभायां सद्यएव विनिशाधिपतिना राजकीयसामाजिकैरन्यैश्च

कार्यविमर्शः प्रारभ्यत । ततः पौरुषी धर्माधिकरणमुपेत्य प्राड्विवाकाय मन्त्रोपदेशकाद्बलारेरानीतां काञ्चित्पत्रिकामुपनिन्ये। यस्यां पत्रिकायां सविद्वत्सचिवः "यदि रुजा निरुद्धश्चेन्नाभविष्यम् अन्तनयस्य पक्षे हेतुवादं कर्तुमह मागमिष्यम् ततो बाल्यसारनामानमिमं कुमारपण्डितं मत्स्थाने हेतुवादकरणायानुज्ञातुमनुनाधामीति" व्यजिज्ञपत् । सचिववासोभिः केशमयशिरश्शेखरेणच परिहितवेषान्तराया स्तस्या अपूर्वव्यक्तेः कोमलतराकृत्यनुभावेन विस्मयाविष्टस्तामधिकरणे हेतुवादं कर्तुं सनृपतिरप्यन्वमोदिष्ट ॥

अथ प्रास्तूयतेयमलघ्वी विचारणा । पौरुषी अभितोवलोकयन्ती निर्घृणं शैलेशं प्रियं भासनीय चैक्षत । सोपि रूपांतरापन्ना तां प्रेयसीं नाज्ञासीत् । मित्रविपद्वेदनादूयमानमानसोऽन्तनयस्य पार्श्वे निषसाद ॥

अथ स्वव्यापृतस्यास्य दुस्साधकर्मणो गौरवं सुकुमारप्रकृते स्तस्याधीरतामापादयत् । कर्तुमुपक्रान्ते कर्मणि सा सधैर्यमुपाक्रमत । प्रथमं सा शैलेशं सम्बोध्य प्रमाणपत्रलिखितदण्डग्रहणे तस्याधिकारोस्तीति प्रतिपाद्य तदनु या सकलजनाह्लादकारिणी वृष्टिरिवाधः पातिता दिवः या दयितस्य दयमानस्य च द्विधोपकर्त्री या राज्ञां मकुटछत्रचामरादिनृपत्वसाधारणचिह्नेभ्यस्साधीयोऽसाधारणं च लक्षणं या स्वयं भगवतो

नारायणस्यापि विशेषणतया प्रसिद्धा यया दण्डं प्रशमयन्तः पृथ्वीपतयो वात्सल्ये भगवत्समा भवन्ति । तां कृपाशीलता मत्यर्थं श्लाघयन्ती तथा तत्र स्थिताना सर्वसभास्तारार्णा मनांस्यद्रवन विना शैलेशस्य हृदयं तथातिमधुरवाण्या गंभीरमुपन्यस्तवती । यथा वयं सर्वे भगवत्कृपां प्रार्थयामहे तथास्माभिरप्यन्योन्यस्योपरि कृपा दर्शनीयेति शैलेशस्योपदिदेश । सतु प्रमाणलेखप्रतिश्रुतदण्डग्रहणान्नाविरमेयमिति पौरुषीं प्रत्यभाषत । किमेनमसमर्थं मन्यसे ऋणप्रत्यर्पणे इति पौरुषी तं पप्रच्छ । अथ शैलेशो यावन्ति सहस्रत्रिनयाण्यभिवाञ्छति तावन्ति दातुमुपचक्रमे भासनीयः । तथा शैलेशे तत्प्रत्यादिश्य अन्तनयस्य प्रस्थपरिमाणमांसग्रहणे प्रत्यभिनिविष्टबुद्धौ सति भासनीयोऽन्तनयप्राणपरिरक्षणपरः धर्मशासनवचनानामर्थं मीषदन्यथा व्यावर्तयितुं यततामिति कुमारपण्डितवेषधारिणीं ता ययाचे । पौरुषीतु सकृत् संस्थापिताः स्मृतयो नकदाचिदपि विपर्यासमर्हन्तीति सधैर्यमुवाच । स्मृतिर्नान्यथा विकल्प्येति पौरुषीभाषितं श्रुत्वा आत्मनः पक्षं समर्थयन्तीमिव तां ज्ञात्वा शैलेशस्ससंभ्रमं "विवेकिन । कुमारधर्माध्यक्ष ! कश्चिन्महाप्राज्ञो धर्माधिकरणमानीय विमृश्यते । कथमहं मानयेयं भवन्तम् । बाह्याकाराद्भवान् कियान वर्षीयानित्युवाच ॥

अथ पौरुषी सकृद्दणपत्रं मे दर्शयेति शैलेशं पृष्ठा। तत्पठित्वा "इयं प्रमाणपत्रिका समयभ्रष्टा । ततः शैलेशः स्वहस्तेन वृक्ण प्रस्थपरिमाणमन्तनयस्याग्रमांसं न्यायतोऽर्हतीति प्रत्यपादयत् । ततः पौरुष्या" आर्य ? अस्मिन् दयां कुरु द्रविणं प्रतिगृहाण ! पत्रिका विदारयितुमनुजानीर्हीति" सपादपतनमभ्यर्थ्यमानोपि शैलेशो दयां नादर्शयत् निर्दयमभाणीच्च । "आत्मना शपे कस्य जिह्वायास्तादृशी प्रभविष्णुता । या मदध्यवसायमन्यथाकर्तुं शक्नोतीति । अन्तनय ? अथ किं विचार्यते ? सज्जीकुरु वक्षोऽसिपुत्रिकायै" इति पौरुष्यंतनयमादिदेश । ततश्शैलेशे प्रस्थपरिमाणं पिशितमुच्चिकर्तिषौ महतौत्सुक्येन दीर्घां कृपाणिकामुत्तेजयति सति पौरुषी "किमप्यस्ति ते मनसि वक्तव्यमित्यन्तनयमाह । यतोहं प्राणपरित्यागे कृतनिश्चयोस्मि ततो नमे किञ्चिदप्यस्ति विवक्षितमित्यन्तनयोऽनाविलक्षमया प्रत्यभाषत । सभासनीयाभिमुखो भूत्वा "भासनीय, निर्वापय मे शरीरसंतापमपश्चिमेन ते करकमलसंस्पर्शदानेन । स्वस्त्यस्तु ते । त्वत्कृतेहमीदृशो दारुणदैवदुर्विपाकस्य गोचरीकृतोस्मीति माशोचीः । तव सत्कलत्रस्य पुरतो मद्वृत्तं कीर्तय । कथमहं त्वयि स्निग्धस्तत् कथय तस्यै" इत्यवोचत । भासनीयोपि शोकसागरनिमग्नः प्रत्यूचे । प्रियवयस्यान्तनय !। यामहमुद्वहम् सा प्राणेभ्योपि

गरीयसीयं प्रेयसी इमे मत्प्राणा इदं जगदित्येतत्सर्वमपि न मे स्पृहणीयं यथा तव जीवितं। एतन्मम सर्वस्वमस्य वेतालस्योन्मुञ्चामीति। एतत् श्रुत्वा सदयहृदया पौरुषी तादृशि सहजमित्रेऽन्तनये तथाविधया दृढप्रतिज्ञया स्वानुरागमाविष्कुर्वाणेप्यनुत्पन्नामर्षा सत्येवमवादीत् "यदि तव जायाऽत्र सन्निहिता मित्रस्य कृते स्वविनाशं प्रतिजानतो भवतो वचनं शृणुयात् तर्ह्यल्पीयसीमपि प्रीतिं त्वयि न प्रदर्शयेदेवेति"। ततो निजस्वामिनोऽनुचिकीर्षुर्घटयानोपि भासनीयवदन्तनये निजस्नेहप्रकाशनाय व्याहर्तुं मनसि सङ्कल्प्य पौरुषीपार्श्वेलेखकवेषधारिण्यां लिखंत्यां निरीशाया शृण्वत्यामित्थमाह। ममाप्यस्त्येका कांता यस्यामहं सुदृढमनुरक्तः। यत्सा दिवं गतापि श्वशीलस्यास्य शैलेशस्य क्रूरस्वभावमन्यथा कर्तुं दिविष्ठां काञ्चिद्देवतां प्रसादयेत्तद्वरमिति मन्ये इति। ततो निरीशापि "आर्य! तव कलत्रस्य परोक्षे युज्यते तवैवं वक्तुं॥ यदि तत्समक्षेप्येवमुक्तं नूनं सा भवते क्रुध्येदेवेति बभाषे॥

अथ शैलेशस्सामर्षमुच्चैराचक्रन्द। किं मुधाकालः क्षिप्यते। क्षिप्रमादिश्यतामस्य प्राणहरो दण्डइति। तदा सर्वे पारिषद्या भयसम्भ्रमाक्रान्तचित्ता इदानीमन्तनयस्य किंवा विधास्यति भवितव्यतेति भृशं विषण्णा बभूवुः॥

अथ मांसतोलनाय तुलां सज्जीकर्तुं रक्तस्रावनिरोधाय कंचित् शस्त्रवैद्यञ्च सन्निधापयितुं पौरुषी शैलेशमादिदेश। नोचेदन्तनयोऽधिकशोणितक्षरणान्म्रियेत। दुरात्मा सतु शैलेशो यथान्तनयः पञ्चत्वमुपयाति तथोद्वेलं रुधिरं क्षरतु मासनिकर्तनकर्मणीति मनसि कृतसंकल्पः प्रमाणपत्रे तथा नोक्तमिति प्रत्यवदत्। "किं तत्रोक्तेनानुक्तेन वा भवांस्तथानुग्रहीतुमर्हतीति पौरुष्या सानुनयमनुनाध्यमानोपि शैलेशः प्रमाणपत्रे तथा नोक्तमित्येवोत्तरं पुनरदात्। ततः पौरुषी प्रस्थपरिमाणमन्तनयस्य मांसं भवानादातुमर्हति। तथा धर्मोनुशास्ति। धर्माधिकार्यपि तथा ज्ञापयति। एतन्मांसं तस्य वक्षसश्छिन्धि। तथा धर्मो विदधाति। धर्माधिकार्याज्ञापयतीति शैलेशं दृढमूचे। सोपि "विवेकिन् धर्माधिकारिन् कश्चिन्महाप्राज्ञो धर्माधिकरणमानीतइति पुनः सोल्लासमुच्चैरुदीरयन् दीर्घामसिधेनुकामुत्तेजयित्वा अन्तनयं सोत्कण्ठमीक्षमाणः "एहि सज्जीभवेत्युवाच। अत्रान्तरे सुनिपुणं विचारयन्ती पौरुषी शैलेशं वीक्ष्य पुनर्वाचमिमामाददे। शैलेश! क्षणमात्रं विलम्बस्व अत्रान्यदप्यस्ति किंचित्प्रष्टव्यं अस्यां पत्रिकायां शोणितबिन्दुकथापि नकृता। सुव्यक्तं तत्र लिखितं प्रस्थपरिमाणं मांसमित्येतावन्मात्रमेव। तस्मान्मांसच्छेदने कृष्णमतावलम्बिनोऽस्य यद्येको रुधिरबिन्दुरपि बहिर्निस्सरति। विनि-

शाधिपतिना युष्मत्सर्वस्वमपह्रियेत इति । एवं निगृहीतश्शैलेशो रुधिरोद्गमं विना अन्तनयमांसच्छेदनस्य दुश्शकतया विफलोद्यमस्संवृत्तः पत्रिकोक्तं मांसमेव नतु शोणितमित्यनेन पौरुष्याः प्रौढनिरूपणेनेदानीमन्तनयस्य प्राणाः परिरक्षिताः । तदानीं तत्र स्थितास्सर्वे सभासदस्तादृशोपायं रचितवत्याः बाल्यसाराभिधानेन प्रकटिताया मन्त्रोपदेशकवेषधारिण्यास्तस्याः पौरुष्यास्तादृशं विस्मयकरं वैदग्ध्य सशिरः कम्पं श्लाघमानाः धर्माधिकरणं जयघोष प्रतिशब्दपूरितगर्भमकार्षुः । ततो घटयान श्शैलेशप्रयुक्तपूर्वाण्येव वचांसि प्रयुंजान आचुक्रोश । "विवेकिन धर्माधिकारिन । कश्चिन्महाप्राज्ञो धर्माधिकरणमानीतइति" ।

आत्मनः कपटप्रबंधं प्रत्याहतं ज्ञात्वा शैलेशो भग्नाशस्सन् ऋणधनं स्वीकरिष्यामीत्यवोचत् । अन्तनयस्यातर्कितविमोक्षणेन मानातीतप्रहर्षो भासनीयो गृहाणेदं धनमित्युन्ननाद । किंतु पौरुषी धनं ददतं तं निवारयन्ती समार्दवमवोचत् । मा त्वरस्व । शैलेशो दण्डमेवादत्तां । शैलेश सन्नद्धोभव मांसखण्डनाय । माभूदल्पमपि रक्तक्षरणं प्रस्थपरिमाणादधिकं ततो न्यूनंवा माछिन्धि । मांसस्य परिमाणवैषम्ये माभूदल्पीयस्यपि शङ्का । तुलाघटः केशमात्रस्यापि भारेणाधोगच्छतिचेत् विनिशाराज्यशासनेन वध्यो भविष्यसि । युष्मत्सर्वस्वमप्य-

प्ह्रियतइति । देहि मद्धनं, साधयामीति शैलेशोऽभ्यधात् । इदं ते धनं सिद्धमस्ति । गृहाणेति भासनीयोऽवदत् ।

एवं शैलेशे तद्द्रविणं जिघृक्षति सति पौरुषी तं निवारयन्ती समभिदधौ । शैलेश! तिष्ठ तावत्क्षणमात्रं । अन्यथापि त्वं वशीकृतोस्माकं । विनिशानगरशासनैस्तव सर्वस्वं तदधिपेन विनिशाराज्यसात्करिष्यते । यतस्त्वं तत्पौराणामेकतमस्य प्राणानभिद्रोग्धु मुपजपितवानसि । इदानीं युष्मज्जीवितं विनिशानगराधिपतेः कृपायत्तं । तस्मात्तत्पादयोरात्मानं निपात्य क्षंतु त प्रसादयेति ।

ततो राजा शैलेशं वीक्ष्य "कृष्णमतावलम्बिनामस्माकं सौशील्यं त्वां ज्ञापयितुं युष्मत्प्रार्थनां विनैवाहं क्षमे तव द्रविणस्यार्धभागोऽन्तनयस्य गच्छतु । इतरार्धो राज्यस्ये"त्यब्रवीत् ।

•• यदि शैलेशः प्राणप्रयाणसमये धनमेतत्स्वदुहिताजामात्रोर्हस्ते निक्षिपामीति किंचिल्लेखप्रमाणं विलिख्य दास्यति चेत् उत्सृजामि स्वार्धभागं शैलेशधनस्येत्युदारधीरंतनय उवाच । यतस्सोवगतवानस्त्येकैव दुहिता शैलेशस्येति । या पित्रनुज्ञाविरुद्धं केनचित्कृष्णमतावलंबिना लोकरंजननामधेयेनांतनयमित्रेण यूना भर्तृमती संजाता तेन हेतुना शैलेशोऽतिमात्रं रुष्टस्तां पैतृकरिक्थाधिकारहीनां चकार ।

शैळेशोऽन्तनयोक्तरीत्या अनुष्ठातुमनुमेने। एवं वैरनिर्यातने भग्नोद्यमो हृतसर्वस्वश्च भूत्वा सदैन्यमवोचत्। "अहमस्वस्थशरीरोस्मि। गृहान् गन्तुमनुजानीत मामार्यमिश्राः। प्रेषयत पत्रिकां विलिख्य मम मद्वित्तस्यार्धभागं दातुं मत्कुमार्यै प्रतिश्रृणोमीति"। "शैळेश तत्साधय मल्लिखितप्रेषिता पत्रिका स्वनामाक्षरैरङ्किता कुरु यदि तव नृशंसतायां जातविप्रतीसारः कृष्णमतावलम्बी भवसि तदा स्वविभवस्यार्धभागं दापितःक्षम्यसे"। इति विनिशाधिपतिरुपदिदेश।

ततस्सोतनयं विमोक्ष्य सभासदो यथागतं निवर्तयामास। अथ बाल्यसारनाम्नः कुमारसचिवस्य लोकोत्तरं प्रज्ञातिशयं वाचो युक्तिवैदग्ध्यं चात्यर्थं प्रशस्य स राजा तं सजग्ध्यै स्वमन्दिरमाजुहाव। पौरुषी तु भर्तुः परापतनात्प्रागेव बिल्वमंतं निवर्तिषमाणा "धन्यास्मि परमनुगृहीतास्मि महत्राऽनेन भवत्प्रसादेन। इच्छाम्यहमविलंबितं स्वग्रामं गन्तुमिति राजानं सप्रश्रयं विज्ञापयामास। सोपि तया साकं पङ्क्तिभोजनसुखमनुभवितुमवकाशालाभात् भृशं खिन्नोन्तनयमिदमाह "संभावयाऽऽर्यमेनं पूर्णपात्रेण। अनुगृहीतोस्यनेन। निस्तारितोसि विपदः। भवांस्तस्य ऋणीभूतइति मे मतिरिति"।

अथ स सामाजिको राजा जहावास्थानीम् । ततो भासनीयः पौरुषीमब्रवीत् । "महात्मन् अहं मम सुहृदंतनयश्चाद्य भवदसाधारणप्रज्ञापोतेन संतारितौ विपत्सागरं । भवदुपकृतेः का निष्कृतिर्दातुं शक्यतेऽस्माभिः तस्माच्छैलेशाय धारितमेतन् त्रिसहस्रसंख्याकं धनं प्रीत्या प्रतिगृह्यास्मानानन्दयितुं भवन्तमभ्यर्थये इति । भवदुपकृतेर्वयमिह परत्र च प्रतिकर्तुमशक्नुवंतो यावदायुषं भवत्किङ्करा भवेमे"त्यन्तनयोग्यवदन् ।

तद्धनं स्वीकर्तुं पौरुषी नाङ्गीचकार । अपितु यत्किञ्चिदपि पारितोषिकमपरिगृह्य नगन्तव्यमिति भासनीयेनातिमात्रं निर्बध्यमाना सा "देहि मे भवत्करच्छदं युष्मदर्थे तं धारयामी"त्यभ्यधत्त । ततो भासनीये निजकरात्करच्छदमाकृष्टवति तद्दत्तमंगुलीयकं स्वांगुल्यामपश्यत् । एतदेवांगुलीयकं वंचनपरा पौरुषी तस्मादादातुमभिललाष । पुनर्भर्तृसमागमे सोल्लासं तं परिहसितुं एतदंगुलीयकं साभिलाषं दृष्ट्वा त्वत्तः प्रतिगृह्णामीदमनुरागचिह्नमित्युवाच । भासनीयस्तु धर्मशास्त्रपंडितेनोर्मिकां याचितः स्वकांतादत्तस्य प्रीत्यास्पदस्यांगुलीविश्लेषानर्हस्य तस्य वस्तुनो विरहमसहमानः स्वभार्यया प्राभृतीकृततया स्वप्नेपि तदपरित्यागे धृतव्रततयाच तदंगुलीयकं तस्मै दातुं न सेहे । विनिशानगरीस्थितानि सर्वाण्यपि रत्नापणान्यु-

द्घोषणयावलोक्यापरं महार्घतममंगुलीयकं तुभ्यं दास्यामीति प्रतिशुश्राव तस्यै। ततः पौरुष्यात्मनोऽवमानमिव दर्शयंती आर्य! याचको यत्प्रतिवचनं उच्यते तन्मां शिक्षयसीति ब्रुवाणा न्यायाधिकरणात्सकोपमुदचलत्।

प्रियवयस्य भासनीय! त्वयि मत्प्रीतिर्मयि तद्विरचिता महोपकृतिश्चेति द्वयमेव गरीयइति मन्यस्व युष्मज्जायापरागापेक्षयेत्यन्तनयोऽब्रवीत्। भासनीयोप्यात्मनोऽकृतवेदित्वप्रदर्शनेन ह्रीणस्तमनुरुध्यमानो घटयानस्य हस्तेनोर्मिकां पौरुष्यै प्रेषयामास। तस्य लेखकीभूता या निरीशा सापि घटयान स्वदत्तपूर्वामूर्मिकां ययाचे। सोप्यौदार्ये स्वामिना समीकर्तुमात्मानमीहमानस्तस्यै तां ददौ। ततस्ते उभे गृहगमनानन्तरं स्वकान्तयोरंगुलीयकादर्शनेन "कस्यैचित्प्रियतमायै स्वं स्वमंगुलीयकं ताभ्यां दत्तमित्यपराधमारोप्य तौ परिहसिष्याव" इति मिथो जहसतुः। ततः पौरुषी स्वनिकेतं प्रति निवर्तमाना मित्रपरिरक्षणरूपपुण्यचेष्टाकरणेन समुत्पन्नचित्तोन्नत्याऽतीव मुमुदे। प्रमुदितचित्तवृत्तिस्सती सर्वं वस्तु सुखमयमपश्यत्। यथा चन्द्रस्तत्समयेऽतिविशदभासा प्रकाशमानो दृष्टस्तथा नकदाचित्तया पूर्वं व्यलोकि। रमणीयदर्शने तस्मिंश्चन्द्रे जलधरतिरोहिते सति बिल्ववन्नामकग्रामस्थितस्वमन्दिरे भासमानस्य प्रदीपस्याराद्दर्शनेनोद्दीपितरमणीयकविताकल्पनाशक्तिस्सा निरी-

शामिदमूचे । "हंजे पश्य । दृश्यमानोऽसौ दीपो मन्मन्दिरे चकास्ति । यथास्याल्पीयसो दीपस्य रश्मयोऽतिदूरमश्नुवते तथैवास्मिन् कुत्सिते लोके सत्कर्मापीति । एवं भाषमाणा सा स्वमन्दिराच्छ्रूयमाणं गीतध्वनिं श्रुत्वा निरीशां पुनरवदत् । सखि! दिवातनाद्गीतान्नक्तंतनी गीतिर्मधुरतरं श्रूयतइति तर्कयामीति" ।

अथ पौरुषीनिरीशे स्वावसथं प्राप्य यथापूर्वं स्ववेषं धृत्वा प्राणवल्लभयोरागमनं प्रतिपालयां चक्रतुः । तावप्यन्तनयेन सह तयोरनुपदमेवानुजग्मतुः । भासनीयोपि प्रियमित्रमन्तनयमार्यायै पौरुष्यै दर्शयामास । सापि तं दृष्ट्वा स्वागतोक्त्याभिनन्दयन्ती परां प्रीतिमवाप । अत्रान्तरे कस्मिंश्चिद्गृहकोणे कलहायमानौ दृष्टौ पृष्टौच किंवा युवयोः कलहकारणमिति । आर्ये विवाहसमये मम निरीशया दत्तं कुत्सितस्वर्णद्रवलिप्तमस्ति किंचिदङ्गुलीयकं यदर्थोयमावयोः कलहः । यस्मिंश्च शस्त्रकारच्छुरिकायां पद्यमिव "मयि प्रीतिं कुरु जहीहीति पदान्यङ्कितान्यासन्निति घटयानः प्रत्युवाच । तत्पद्यंवा तदंगुलीयकमूल्यंवा किंद्योतयति । तत्समर्पणसमये भवानाप्राणात्ययं तन्नपरित्यजेयमिति प्रतिज्ञाय कथमिदानीं धर्मशास्त्रविदो लेखकायोपहारीकृतमिति ब्रवीषि । जानाम्यार्यपुत्र जानामि । तत्कस्यैचिदङ्गनायै दत्तवानसीति ब्रूहीति निरीशा

सोल्लुण्ठं भर्तारमब्रवीत् । घटयानः ॥ अनेनैव मत्करेण खर्वीकृतः त्वत्तुल्यदेहपरिमाणस्य कस्यचिद्बालकस्य पारितोषिकमददाम् । यो वाग्विभवेनान्तनयस्य प्राणान् ररक्ष तस्य प्रार्थनां जीवितव्ययेनापि मोघीकर्तुं न शक्तोस्मि । तत् श्रुत्वा पौरुष्यवदत् । घटयान ! कांताप्रथमोपायनीभूतस्य तदंगुलीयकस्य परप्रतिपादनेन निन्दार्हएवासि । अस्ति मद्वल्लभस्याप्येकमंगुलीयकं मयोपहारीकृतं तदसौ निखिलजगद्विभवस्यापि कृते नजहातीति निश्चयं विद्धीति । ततो घटयानोप्यपराधक्षमां प्रार्थयमानः पौरुषीमित्थमवादीत् । आर्ये अस्मत्स्वामिना भासनीयेन स्वांगुलीयके धर्मशास्त्रसचिवाय प्राभृतीक्रियमाणे बालस्तस्य लेखको ग्रंथलेखने कृतप्रयासो मदीयमयाचतेति । एतत् श्रुत्वा पौरुषी कोपराहूपरक्तमिव मुखचन्द्रं दर्शयन्ती अंगुलीयकदानेन तं भासनीयमुपालभमाना " भवता नूनं कस्यैचिन्मनोवल्लभायै तद्दत्तमिति निरीशा मामितः प्रत्यर्थयदिति सकोपमाह भर्तारं । भासनीयोपि प्रियतमायां कृतव्यलीकस्सत्यमिदमूचे । प्रियेऽलं मामन्यथा गृहीत्वा । अंगुलीयकं स्त्रियै नदत्तं । अपितु कश्चिन्नागरिकश्शास्त्रज्ञो मत्त स्त्रिसहस्रसंख्याकान् निष्कानप्रतीच्छन्नेतदंगुलीयकमभिललाष । मया प्रेयसीप्रथमसन्माननव्यंजकमिति कृत्वा न ते दातुं योग्यमिदमितिप्रतिषिद्धस्सोपि कोपेन परावृत्तः । प्रिये पौरुषि ! ततोहं

किंकर्तव्यतामूढो बहिः प्रतीयमानकृतघ्नताभरेण लज्जान्वितस्तदंगुलीयकं दातुमनिच्छिन्नप्यवशस्तस्मै प्राहिणवम् । क्षमस्व मां साधुशीले यदि तत्समये तत्रभवत्यपि सन्निहिताभविष्यच्चेत् पूजार्हं तं विद्वांसं सत्कर्तुं त्वमेव मा तदंगुलीयकमयाचिष्य इति मन्ये । इति । धिङ्मां मन्दभाग्यं अहमेवैतेषां कलहानां निमित्तं जातोस्मीति सनिर्वेदं ब्रुवाणमन्तनयं पौरुषी इदं बभाषे । आर्य चिन्तां माकुर्वस्मिन्विषये । एव सत्यप्यभिनन्दितगमनोसि ॥

अन्तनयः ॥ भासनीयस्यार्थे सकृन्मच्छरीरं समर्पितवानस्मि । यस्मै त्वत्प्राणेशोंगुलीयकमदात्तदर्थेऽधुना त्यक्तजीवितोपि भवेयम् । दण्डदानार्थं पुनरात्मानं विनाशयितुं प्रधृष्यामि । त्वन्नाथस्तु नेतःपर निजविस्रम्भं व्यत्येति । पौरुषी ॥ तथाचेद्भवतु भवान प्रतिभूस्तस्य । देह्येतदंगुलीयकं तस्मै । दत्तपूर्वादभ्यधिकतरजागरूकतयैतत्परिपाल्यमिति तं ब्रूहीत्युक्त्वा तदंगुलीयकं तस्मै दर्शयामास । भासनीयस्तदृष्ट्वा व्यवहारतन्त्रसचिवायोपधीकृतमंगुलीयकमिदमेवेति सम्यक्प्रत्यभिज्ञाय विस्मयेन परवान्बभूव । ततः पौरुष्यन्तनयपक्षसमर्थनाय हेतुवादं कर्तुं धर्मशास्त्राभिज्ञस्य वेषं धृत्वा तल्लेखकवेषधारिण्या निरीशया सार्धं विनिशां गतवत्याः आत्मनस्सर्वं वृत्तान्तं भर्त्रे व्याचख्यौ । तदा भासनीयो वाक्पथातिवृत्तप्रहर्षविस्मय-

योरन्तरे पतितो यत्प्रियमित्रमन्तनयः परित्रातस्तन्निजकलत्रस्या-साधारणमेधासम्पत्या धैर्येण चैवेत्यमंस्त ॥

पौरुषी च स्नेहात्पुनरन्तनयं सभाजयन्ती दैवात्स्वहस्त-गतान् नष्टतया सम्भावितानां नावां क्षेमेण नौकाश्रयस्थानप्रा-प्तिनिवेदकान् कांश्चिल्लेखांस्तस्मै ददौ । एवमस्य धनिनो वैदेह-कस्योपाख्यानमादौ दुरन्तमपि अचिन्तितशुभपरिणामेन भाव्य-नुकूलदैवेन स्वन्तं समजनि । गृहीतवेषांतराभ्यां स्वजायाभ्यां परिहासाय कृतमंगुलीयकविपर्यासं तावंतनयघटयानौ ज्ञातुं नशे-कतुरिति तदा तत्रत्यास्सर्वे जना जहसुः । घटयानोपि निरीशा-दत्तांगुलीयके सर्ववस्तुभ्योधिकतरं यावज्जीवमप्रमत्तो भवामीति सशपथं सोल्लासमुवाच ॥

विनिशापुरीवणिक् समाप्तम् ॥

---

## 4 Cymbeline—(सिंहबलचरित्रम्.)



1 Cymbeline = सिंहबलः—मगधदेशाधिपः.

2 Imogen = हिमजनिः—तस्यदुहिता.

3. Posthumus = अनन्तरः—हिमजन्याभर्ता.

4. Rome = विशालापुरी.

5. Iachimo = अयाचकः.

6. Melford-Haven = घरट्टग्रामः.

7. Pisanio = बिसादः—अनन्तरभृत्यः.

8. Bellarius = बलाहकः—सिंहबलस्य पुरातनमन्त्री.

9 गृधिरविरागौ—सिंहबलस्यापहृतपुत्रौ.

10 सुफालकुवालौ—तावेवबलाहकेनकृतनामधेयौ.

11 Fidele = पडिालः—हिमजन्याः प्रच्छन्नवेषायानाम.

12 Lucuius = लासकः—सेनापतिः.

# ॥ सिंहबलचरित्रम् ॥

## (CYMBELINE)

आसीत्पुरा सिंहबलो नाम राजा आंग्लदेशस्य पालयिता राज्ञस्तस्यापत्यत्रयेऽनतिक्रान्तस्तन्यपानवयसि माता पञ्चतामवाप। त्रिषु ज्येष्ठां हिमजन्याख्यां दारिकां पिता निजमन्दिरएव निधाय स्वपोषमपुषत्। पित्रा पोषिता संवर्धिताचसा शशिकलेव प्रत्यहमुपचीयमानलावण्या कालक्रमेण परिणयोचितवया बभूव सिंहबलस्येतरा पत्येद्वावर्भकौ धात्रीगृहाद्दैववशात्केनाप्यउक्षितमपहृतौ। तयोः प्रथमस्त्रिवर्षदेशीयः द्वितीयस्तनन्धयएवतौ दारकौ केनापहृतौ तयोः किमभूत्कुत्र स्थितौ" इति ज्ञातुं न शशाक सिहबलः स पुनर्दारसंग्रहमकरोत् "तस्येयं द्वितीया जाया कपटप्रबन्धनिर्माणचतुरा परवञ्चनपरा गुणिमत्सारिणी चासीत् सपत्नीसुतायां हिमजन्यामेव प्रथमं स्वदुर्नीतिं प्रयोक्तुमयतत पुनर्भूरियं प्रथमभर्त्रा आत्मन्युत्पादिताय तनयाय तां प्रतिपादयितुं मुहुः प्रायस्यत् अनेनैव तीर्थेन भर्तुरनन्तरं तद्राज्यधुरं स्वपुत्रे सञ्जयितुं सुशकमित्यमंस्त केनापि प्रमुषितं राज्ञो डिम्भकद्वयं पुनर्न लभ्यते चेत्पुत्रसंतत्यभावेन शिष्यमाणेयं पुत्रिका हिमजनिरेव तद्राज्यस्य स्वामिनी भवि-

ष्यतीति सा दृढं ज्ञातवती किंतु हिमजनिस्सपत्नीमातुरिमामाशां मोघीकृत्य पितुरनुज्ञामप्यनवाप्य असवर्णमनंतरनामानं कंचित्परिणिनाय असावनन्तरस्तत्काले सकलकलाकुशलस्सर्वविद्याविशारदो महान्विदग्ध इति ख्यातिमवाप । अस्मिन्मातृगर्भस्थ एव अस्य पिता सिंहबलस्य शात्रवानीकं प्रति युद्ध्यन्सङ्ग्रामे परैर्निहतस्स्वमिभक्त्या प्रियैः प्राणैर्भर्तुरानृण्यं गतः अथास्य प्रसूश्चनव्यवैधव्यदुःखं सोढुमक्षमा इमं प्रसूय तनूनपाति तनुमाहुतीकृत्य भर्तृगतामेव गतिमन्वियेष ।

शैशवात्प्रभृति मातापितृहीनस्यास्यासहायदशां वीक्ष्य जातानुकम्पस्सिंहबलः पित्रनन्तरजातत्वादस्यानन्तराभिधा निधाय राजगृहमानीय स्वपुत्रमिव पोषयन् विद्योपदेशमपि कारयामास ।

हिमजन्यनन्तरावेकगुरोरेव विद्यामधिजगाते पांसुक्रीडनवय आरभ्य सहक्रीडापरायणौ संजातसान्द्रमैत्रीकाविभूताम् बाल्योत्पन्नस्तयोः परस्परानुरागो वयसा सहोपचितिं गतः क्रमेणोपारूढयौवनयोस्सतोस्तयोर्गान्धर्वेण विधिना उपांशुविवाहोपि समभूत् ।

अथ देवी सपत्नीदुहितुरेतद्रहस्यविवाहः प्रणिधिभिर्ज्ञात्वा स्वाभिलाषसिद्धेर्भञ्जकत्वाद्भग्नमनोरथा हिमजन्यारहःपरिणयं सिंहबलाय द्रुततरं निवेदयामास राजापि देवीगदितं श्रुत्वा

"स्वदुहिता निजाभिजात्यविभवादिकं तृणाय मत्वा कंचित्प्राकृतमकुलीनं प्रेष्यं भर्तारं धृतवतीति" दण्डताडितदन्दशूकवत्क्रोधपरीतस्तत्क्षणमेवानन्तरं जामातरं स्वदेशान्निष्कासयितुं भटानादिदेश ॥

अथ देवीनूतनप्रियविप्रयोगदुःखितायां हिमजन्यां कृत्रिमदयां दर्शयन्ती अनंतरस्यान्यदेशप्रस्थानात्पूर्वमेकान्ते तयोर्वधूवरयोस्समागमं कारयामास स्वसूनोः कलादस्य कृते स्वसंकल्पितकार्यसिद्ध्यर्थमेवैतां कपटदयां तस्यामकरोत् राजाज्ञाऽननुरोधेनानुष्ठितत्वादयं न धर्म्यो विवाह इति भर्तुर्विदेशगमनानन्तरं हिमजन्यै बोधयित्वा तां स्वपुत्रेण कलादेन योजयितुं देवी संकल्पितवती ।

हिमजन्यनन्तरौ वियोगसमये सानुरागं परस्परमापृच्छताम् हिमजनिस्स्वमात्रादत्तमेकं मणिमयमंगुलीयकमनन्तराय प्रादात् सोपि प्रियतमानुरागस्य व्यंजकं तदाभरणं प्रीत्या प्रतिगृह्य यावन्मयि जीवितं ध्रियते तावदेतत्परित्यक्तुं नोत्सह इत्यवदत् अथानन्तरोपि स्वानुरागमभिव्यंजिजिषुः कनकवलयमेकं तस्या भुजलतायामामुच्य प्राह "प्रिये अस्मिन्स्वर्णाभरणे भवत्या जागरूकया भवितव्यमिति" ततस्तावावाभ्यां परस्परं स्थिरानुरागाभ्यां भाव्यमिति अन्योन्यं शपथं कृत्वा पुनरन्योन्यमामंत्र्य यथागतं जग्मतुः ।

हिमजनिस्तु भर्तृविरहाद्दुर्मनायमाना गलितधैर्या भोग्यवस्तुषु नष्टरतिर्विविक्तदेशसेवाभिलाषुकीप्रत्याख्यातमण्डना सखीसम्भाषणारुचिः कथं कथमपि कालमत्यवाहयत् ।

अथ विवासितोऽनन्तरश्च स्वनिवासोद्दिष्टां विशालापुरीं प्राप तत्र सततं स्वैरचारिभिस्त्रीकथालम्पटैर्नानादेशागतैर्विटप्रायैर्युवभिस्सह वासं चकार। तेषामेकैकस्स्वस्वदेशस्त्रियं स्वदयितां वा सौन्दर्यविषये श्लाघमान आसीत् । सदा हृदयसन्निहितप्रियतमोऽनंतरोपि स्वजायाहिमजन्याह्वयारूपेण बुद्ध्वा वृत्तेन चाप्रतिमेति तत्तरुणसमाजेऽसकृद्वर्णयामास । अथ तस्यां तरुणसंसदि अयाचकोनामैको भुजंगस्स्वदेशीयासु लाटसुन्दरीषु विद्यमानासु मुहुर्मुहुर्वर्ण्यमानां मगधदेशवनितां श्रोतुममृष्यमाणोऽनन्तरस्य जायाया हिमजन्याः पातिव्रत्ये संशयान इवालक्ष्यमाणोऽनन्तरस्य मनसि कोपमुत्पादितवान् । अथोभयोरनल्पवाग्विवादानंतर च को मया मगधदेशं गत्वा हिमजनि सतीव्रताद्भ्रंशयिष्यामीति प्रतिजज्ञे । यद्ययाचक एतदसत्कर्म कर्तुं न शक्नोति तर्हि प्रभूतं धनमनंतराय दातुम् यद्ययं हिमजनिचित्ताकर्षणे कृतकृत्यस्सन् अनन्तरेण तस्यै दत्तं हेमकटकं तस्या आदातुं प्रभवतिचेत्तदा अयाचकायानंतरः प्रियोपायनीकृतमंगुळीयकं प्राभृतीकर्तुं तयोः पणबन्धः कृतः इतः पूर्वमेव बहुशः परीक्षितप्रियतमामनश्शुद्धिरनंतरोऽस्मि-

न्पातिव्रत्यपरीक्षणे सा सती जनोचितपदाद्रेखामात्रमपि न व्यत्येतीति दृढं विशश्वाऽस । ततोऽयाचकोपि यथा प्रतिज्ञातं विशालाया मगधान्गतः । तत्र राजपुत्रीं हिमजनिं दृष्ट्वा अहं त्वद्भर्तृमित्रं त्वा द्रष्टुमागतोऽस्मीति ” व्यपदिश्य तयाऽन्नपानादिनासम्यक्सत्कृतोलब्धपरिचयस्सुखमुवास कतिचिद्दिनानि । यदा तस्या स्वानुरागमाविष्कर्तुमारभत तदातयाऽवज्ञात आसीत् । स्वप्रतिज्ञानिर्वहणे आशातंतुरप्युच्छिन्न इति मेने । तथाप्ययाचकोग्लहविजयाशंसया बलात्प्रेरितोऽनंतरमतिसन्धातुमेकं कपटोपायमचिंतयत् । स्वकार्यसाधनाय काश्चित् हिमजन्याश्चेटीरुत्कोचदानेन वशीकृतवान् । तासां सहायेन निशि तस्याश्शयनागारं निभृतं प्रविवेश । यावत्सा निद्राविलुप्तचेतना भवति तावत्तत्रैव मंजूषान्तरितशरीरो निगूढमवतस्थे । हिमजन्यपि पर्यंकमधिरुह्य गाढं सुष्वाप । ततोऽयं जाल्मः मंजूषाया निर्गत्य सावधानतया तदपवरकमभितः परीक्षां चक्रे । तत्र यद्यद्वस्तु दृष्टं तस्य तस्य नामपत्रे लिलेख । हिमजनिकंठस्थितं कालकं निपुणं निरूपितवान् । ततो निद्रानिलीढनयनायास्तस्याः करात्स्वर्णवलयं भर्तृदत्तं शनैर्भ्रंशयित्वा पुनर्दारुपेटिकयात्मानं जुगूह । ततस्तद्गृहाद्विनिष्क्रम्य परेद्युरति त्वरया विशालामाययौ । अनंतरमुपेत्य एवं मृषोद्यमाचचक्षे । हिमजनिरेतत्कनकवलयं मह्यं ददौ । सा

स्वभवने मामेकां रात्रिमावासयत् तच्छयनागारः कौशेयसूत्रनिर्मितचित्रयवनिकालकृत आभाति। भवनभित्तयश्च नानाविधचित्रलेखनैस्समाकीर्णाः प्रकाशंते।

अनंतरः—अयाचक! एतत्सर्वं सत्यमेव। अपितु साक्षाद्दर्शनं विनैव एतत्सर्वं जनमुखाद्भवता श्रुतं भवेदिति तर्कयामि।

अयाचकः—आर्य! यदि न प्रत्येषि मां ददामि तेऽपरं लिङ्गं मम साक्षाद्दृष्टत्वे। धूमप्रणाळी दक्षिणेन तदगारं दृश्यते।

अनंतरः—इदमपि त्वया श्रुतं भवेदिति मे मनीषा। यत आश्चर्यावहत्वात्तां धूमनाळीं जनाः प्रशंसंति। ततोयाचको यथास्थितं तद्भवनवलभिं वर्णयित्वा प्राह। एकपादावष्टब्धं इध्मपात्रीकृतं प्रतिमाद्वयमपि तत्रास्ते। तद्वक्तुं विस्मृतवानस्मि। वस्त्रग्रथितं कनकवलयं प्रदर्शयन्नाह। एतत्स्वर्णकटकं किं प्रत्यभिजानासि प्रीतिपुरस्सरमिदं सा मह्यमर्पितवती। अपहसितबिसकाण्डद्युतेस्स्वभुजादिदमवरोप्य नर्मगर्भं मम हस्ते न्यस्तवती। अद्यापि सा पुरतः स्थितेवाभाति। न विस्मर्तुं शक्नोमि तद्रूपम् तस्या नर्मचेष्टास्तु एतत्पारितोषिकादपि मामाप्याययंतितराम्। इत्थं सर्वमाख्याय अंते तस्याः कंठे स्वदृष्टं तिलकमप्यवर्णयत्।

अनंतरमनंतरः कृत्स्नामेतां कृत्रिमकथां श्रुत्वा तथ्यमिति मत्वा स्वजायायाः खंडितवृत्तेन भृशं व्यथितस्तामुद्दिश्य तीव्रकोपाविष्टोऽभूत् ।

हिमजनिसकाशात्कनकवलयाधिगमेन विजितपणोभवसि चेत्तुभ्यं दास्यामीति प्रतिश्रुतं रत्नांगुलीयकमनंतरोऽयाचकाय ददौ ततोऽनंतरस्स्वभार्यायामसूयाविष्टोमगधदेशनिवासिने हिमजन्यास्सेवकेष्वन्यतमायाप्ततमायऽविसादाह्वयाय तस्यादुश्चरित्रं निवेद्य सा घरट्टाख्यग्रामं नीत्वा रहसि व्यापाद्यतामिति लेखं विससर्ज । "मगधान्परित्यज्यान्यत्र गच्छन्नहं त्वत्पित्रा वधदण्डेन वित्रासितोऽस्मि । ततस्तत्रागन्तुं न शक्नोमि । त्वं तु बिसादानुयाताघरट्टग्राममागच्छसिचेत्तत्रावयोरन्योन्यदर्शन भविष्यति । अहं त्वां द्रष्टुमुत्कंठितोस्मि । त्वां विना जीवितुं नोत्सहे" इति कुहनागर्भमेकं लेखं स्वभार्यायै प्रेषयामास॰। सा साध्वीमनस्यविशङ्कमाना दयितविसृष्टलेखप्रत्ययादेतत्सर्वं विप्रलम्भइत्यजानन्तीप्राणेभ्योपि प्रियतरस्य प्राणवल्लभस्य दर्शनमेव कांक्षन्ती बिसादानुयात्रिकाप्रियतमप्रेषितपत्रिकाप्राप्तिसमनंतरमेव भर्तृसंकेतितं ग्रामं प्रतस्थे ।

अथ बिसादहिमजन्योर्गन्तव्याध्वन्यल्पावशिष्टे अनंतरे भक्तिमानपि बिसादो भार्याहननरूपपापकर्मणि तस्य सहायं कर्तुमनिच्छन्ननंतरेण संदिष्टां क्रूरवार्तां तस्यै व्यवृणुत ।

अथ हिमजनिर्भर्तुर्दारुणमशनिपातसन्निभं संदेशमाकर्ण्य "प्रियोऽत्रागमिष्यतीति तद्दर्शनलालसा आगतास्मि न तु जाने मय्येवमनिमित्तं दारुणस्संवृत्तो मृत्युं विधास्यतीति" कुररीव विलपन्ती वातोद्धूतेव लता भूमौ निपपात। ततो बिसादस्तथा शोचन्तीं तां समाश्वास्य जगाद । "आर्ये ! यावदनंतरस्स्व-प्रवृत्तिं द्रोहमयीं ज्ञात्वा जातानुशयो भवति तावदिमं हृल्लेख-वैशसं धैर्येण सोढुं यतस्व" । ईदृशीं दुर्दशामापन्ना सापुनः पितृगृहं गंतुं नैच्छत् । पथि निरपायतया गन्तुं पुरुषवेषो धारणीय इति बिसादेनोपदिष्टा सा तथैवाकरोत् । अनेनैव कृत्रिमवेषेण विशाला गत्वा नृशंसभूतं भर्तारं सकृद्द्रष्टुमियेष बिसादस्तस्यै अभिनवं पुरुषधार्यं परिच्छदं दत्वा स्वगृहं प्रतस्थिषुस्तां भवितव्यतामात्रशरणां चकार बिसादस्स्वप्रस्थाना-त्पूर्वंसिद्धौषधरसपूर्णमेकं पात्रंतस्यै प्रदायेत्थमवोचत् । "आर्ये ! इदं सकलव्याधिभञ्जकं परमौषधमिति" देवीमह्यमदात्। तत्ते ददामि गृहाण ।" हिमजन्यनंतरयोरयमंतरङ्गसुहृदिति बिसादं मारयितुं देवी कंचन भिषजं विषलक्षणपरीक्षार्थं किंचिद्विषं ममापेक्षितमिति ययाचे । स भिषगपि तस्याद्रोहबुद्धिं विज्ञाय विषमदत्वा अन्यं कंचिदौषधिरसं प्रादात् । यं पीत्वानरस्सर्वा-कारेण मरणावस्थासदृशीं निद्रां लब्ध्वाचिरंशयितोऽनंतरं सुप्तोत्थित इव प्रबोधं भजति । तमिमं विषरसं कदाचिद्वि-

सादाय ददौ । सोपीमं जायुं सर्वव्याधिनिवारक इति कृत्वा प्रयाणे परिश्रान्ता हिमजनिः पास्यतीति तस्या हस्ते निदधे । अथ तस्या आपन्निवृत्तये आशिषः प्रयुंजानो विसादस्तामरण्ये विहाय स्वनिलयाभिमुखो ययौ ।

अथ हिमजनिरटव्यामाहिण्डमाना क्षुत्क्षामकण्ठी शैशवेऽपहृतयोस्स्वभ्रात्रोर्निवासभूमिमघटितघटनाचतुरेण दैवेन प्रापिता राज्ञि सिंहबले कृतमहापराधतया अनंतरइव देशान्निर्वासितो बलाहकनामाकश्चिद्राजवल्लभस्सिंहबले द्वेषाद्वैरनिर्यातनाय तस्य पुत्रद्वयमचूचुरत् । अरण्ये कस्मिंश्चित्पर्वतकन्दरे तौ निधाय पुपोष । तत्पितरि सिंहबले द्वेषबुद्ध्या वैरपारं गन्तुं तावाहृतवानपि तयोर्दारकयोस्सुतनिर्विशेषां प्रीतिमुद्वहन् श्रद्धया तावध्यापयत्सकलाः कलाविद्याश्च सिंहकिशोराविवतौ कालक्रमेण चारुदर्शनावुपारूढयौवनौ संवृत्तौ । कुमारविक्रमौ तौ कुमारौ क्वचिन्निशितशरशतसम्पातेन वनगहनानि मृगशून्यानि कुर्वाणौ मृगयाविहारमनुभवन्तौ दृप्तमृगराजशाबाविव क्वचिदनुधावनेन वनमातङ्गान्विद्रावयन्तौ दूरलक्ष्यभेदपाटवसम्पादनाय लोहनाडीभिर्महीधरशिखरसंसक्तदृषदः पाटयन्तौ मेध्यवनहरिणमांसैर्निर्वर्तितदेहयात्रौ राजसत्त्वावष्टम्भेन निर्व्यूढसाहसकृत्यैः पितुर्मनसि मुदं जनयन्तौ विचेरतुः । संग्रामेषु गत्वा स्वबाहुवीर्यं प्रकाश्य धनं संपादयितुमभिलषन्तौ

पितरमनुज्ञा मुहुरयाचेताम् । अनयोर्यूनोर्निवासभूतां पर्वतदरी-मेव दिष्ट्याहिमजनिस्समनुप्राप्ता । घरट्टग्रामं जिगमिषन्ती मध्येऽरण्यमज्ञातपथा अमार्गेण बभ्राम अध्वखेदेन द्विगुणीकृतक्षुत्पीडया निर्यत्प्राणा क्रेतुमप्याहारो यत्र लभ्यते तं प्रदेशं अन्विष्यापि नाद्राक्षीत् । तथा हि शैशवात्प्रभृति पितृमन्दिरे सुखेन पोषिता कदाचिदप्यनीदृशावस्थोचिता हिमजनिः पुरुषवेषधारणमात्रेण पुंवत्प्रागल्भ्यं कथं लभेत । कान्तारपरिभ्रमणखेदसहनक्षमा कथं भवेत् । एतद्भूधरगुहां दृष्ट्वायः कश्चिदन्नस्य दाता इहवसेदित्याशया अन्तः प्राविक्षत् । अपि तु न कोपि तत्रादृश्यत । इतस्ततो दृष्टिं विक्षिपंती एकत्र पर्युषितं मांसाहारं विलोक्य तीव्रबुभुक्षया अवसन्नागृहस्वामिन आगमनं नप्रतिपालयन्तीतदनुज्ञामप्यनवाप्य तदामिषमत्तुमारेभे सास्वगतमित्थमचिन्तयत् । "अहो दुःखबहुलं मनुष्यजीवितम् । कथं परिश्रातास्मि । द्विरात्रं कठिनभूतलएवशयितास्मि । मम मनोदार्ढ्यमेव मम सहायं रचयति । नोचेदिदानींक्षुत्परीतामरणमाप्नुयां पर्वतशिखराद्विसादेन संदर्शितो घरट्टग्राम अत्यासन्न इवाबभासे । अधुनाप्यति दविष्ठ इव लक्ष्यते ।" ततो भर्तारमनंतरं तत्सन्देशं च स्मृत्वा प्राह प्रिय! अनन्तर! असत्यसंधोसि मायी खल्वसि । इत्यात्मनिचिंतयन्ती तन्मांसं जघास ।

अत्रान्तरे हिमजन्यास्सोदरौ पितृत्वेनाभिमतेनबलाहकेन सह चिरमासेवितादाखेटकाद्गिरम्यगुहाभिमुखं प्रतिनिवृत्तौ बलाकस्तयोस्सुफालकुवालाविति नामनी चक्रे सएव स्वरेतोधाः पितेति तावमंसाताम् । ततोऽधिकंतौ नाजानीताम् । तयोः पिता तु ज्येष्ठस्य गीर्धर इति कनिष्ठस्य विराग इति नाम निदधे ।

प्रथमं बलाहको गुहां प्रविश्य तत्र स्थिता हिमजनि दृष्ट्वा अन्तः प्रविशन्तौ पुत्रौ निवारयन्नाह । "वत्सौ मा प्रविशतं काचिद्दिव्या नारी अस्मद्गुहा प्रविश्य तत्रास्माभिर्न्यस्तं मांसाहारं भक्षयति ।

कुमारौ—तात ! किमेवमभिधीयते ।

बलाहकः—वत्सौ ! ईश्वरेण शपे काचिद्दिव्यनारी अथवा तत्तुल्याकृतिः काचिन्मानुषी वा भवितुमर्हति।

युववेषधारिणी हिमजनिरेवतथा लोकातिशायिसौंदर्येण ददृशे। सामनुष्यकंठध्वानि श्रुत्वागुहाया बहिरागत्य तानेवमाह ।' आर्य ! मां माहिंसीः । शृणु मद्विज्ञापनां । बुभुक्षार्दिताहंयत्किंचिदशितव्यं क्रेतुं याचितुं वा आगतास्मि किंत्वत्र न कोपि दृष्टः कस्मिंश्चिद्भाजने न्यस्तं मांसं मयोपलब्धं तद्भक्षितं मया तस्य मूल्यं गृह्यताम् इति स प्रश्रयमाह । अथ

वयस्तामभिनंदंतोन्नऽमूल्यं न जगृहुः। हिमजनिर्भयाद्वेपमाना पुनरिदमाह। किमार्यामयि क्रुद्धाः। यदि भवन्तो ममापराधान्मां हन्तुं निश्चनियुः तदानिबोधन्तु मद्वचनम्। यदि नाहं तदन्नमभक्षिष्यं तदाहममरिष्यम्। तस्माज्जीवितसंशयमापन्ना चौर्यकृत्यमकार्षम्। ततो मां मर्षयंत्वार्याः।

बलाहको बाह्यवेषेण तां पुरुष इति मत्वा आह वत्स कुत आगतोसि। कगन्तासि कान्यक्षराण्यलंकुर्वंति तव नाम।

हिमजनिः "पीडालनामाहम्। अस्त्यहिस्थलीदेशे ममैको बन्धुः। सघरट्टग्राममागमिष्यतीति श्रुत्वा तं दिदृक्षुस्तत्र गच्छन्मार्गमध्ये अध्वगमनक्लेशेन क्षुत्पीडया च परिक्षीणोभवत्स्विममपराधमकरवम्" बलाहकः। "सौम्य! अस्मान्कदर्यान्मामंस्थाः। वने वासितया एते अनातिधेया इति नास्मानवगन्तुमर्हति भवान्। अस्मन्निलयं दिष्ट्या संप्राप्तोसिअस्माकमतिथिरसि सूर्योढः अद्य परिणतप्रायश्च दिवसः बह्वपायेनिशासमयेनायुष्मता एकाकिना गन्तव्यम्। तत इतोधिकतरमस्माभिः कृतातिथ्यस्सन् श्वः प्रयास्यसि"। कुमाराववलोक्य। "वत्सौ! अस्मै स्वागत व्याहरतं। ततस्तौ भ्रातरौ अस्मिन्नतिथि विशेषे सोदरप्रीति दर्शयन्तौ बहूनि प्रीतिवचनान्युक्त्वा स्वागतं व्याजह्रतुः। ते सर्वे गुहाभ्यन्तरं प्रविविशुः। तत्र हिमजनिर्गृहस्वामिनीव स्थलसम्मा

जैनजलाहरणपाकादिकर्मसु कुशलतां कृतहस्ततां च व्यञ्जयन्ती तानधिकतरमप्रीणात्। अस्मिन्कालेह्यभिजातायुवतयः पाकविद्याविज्ञानमधिगंतुं नयतन्ते। हिमजनिस्तु पाकविद्याया सुष्ठु विनीता। तेत्रयस्तत्कृतमन्नं भुक्त्वा "अहो सुष्ठुसंस्कृतमन्नं. सुष्ठुपक्वमिति" पाकशुद्धिं सशिरःकंपं शश्लाघिरे। ततो हिमजनिर्गातुमारेभे। तच्छ्रुत्वा सुफालोऽनुजमिदमाह। भ्रातश्शृणु-पीडालस्यगीतिमाधुर्यं कथं किं नर इव गायति। असौ युवा मधुरं स्मितपूर्वं च भाषमाणोपि तुल्यबलाभ्या धैर्यशोकाभ्यामाक्रान्तहृदय इव निर्मलमुखशशाङ्कं गाढविषादकलंकेन कलंकयन्निवालक्ष्यते। किं वा भवेदस्य मनोव्यथायाः कारणमिति तौ सोदरौ परस्परं संलेपतुः।

तौ भ्रातरौ तत्समानोदरसंबन्धमजानन्तावपि हिमजन्या गुणसम्पदा समाकृष्टचित्तौ तां स्वप्रीतिपात्रं चक्रतुः। सापि यथाप्राणवल्लभमनंतरं विहायास्यामेवगुहायामाभ्यामारण्यकयुवभ्यामेवाजीवितान्तं सुखेन जीवेयमिति निश्चितवती तथा तयोरस्निह्यत्। या वत्सा अपनीताध्वश्रमाघरट्टग्रामोपगमाय शक्ता भवति तावत्ताभ्यां सह तत्रोषितुमैच्छत्।

अथ मृगयासम्पादिते सर्वस्मिन्नामिषे तैर्भक्षिते पुनरधिकतरमधिगंतुं मृगयां गच्छंतौ तौ भ्रातरौ अस्वस्थशरीरतया पीडालोनानुयातुं शशाक। भर्तृदुश्शीलजनितविषादः

कांतारपर्यटनखेदश्चेति द्वयमेवास्यारुजायाः कारणमभूत् । तौ पीडालमापृच्छ्य तस्य सद्वृत्तिं बुद्ध्यौदार्यं च पथि श्लाघमानौ विपिनाभ्यन्तरं जग्मतुः ।

इदानीमेकाकिनी हिमजनिस्तयोर्निष्क्रमणानंतरं बिसाद्दत्तमौषधरसं स्मृत्वा तं पपौ सद्य एव मरणकल्पां निद्रामवाप ।

ततस्तेषु त्रिष्वप्यरण्यात्प्रतिनिवृत्तेषु प्रथमं सुफालो गुहां प्रविश्य तत्र भूमौ चलनशून्यं पतितांगाढनिद्रानिमग्नां मत्वा पदशब्देन तस्या निद्राभंगो माभूदिति गरिष्ठमुपानद्युगलं पद्भ्यामच्यावयत् । अनयोरारण्यकनृपकुमारयोस्तस्यां तादृशो निर्व्याजस्नेहस्समजायत । अथ तारध्वनिनापि अप्रबुद्धां तां मृतेति निश्चिक्युः । तत स्सुफालश्शैशवात्प्रभृति तयाऽवियुक्त इव अननुभूतपूर्वतद्वियोग इव तस्या निधनेन भृशं दुःखितो भ्रातृवात्सल्यमनुदर्शयन् विललाप ।

ततो बलाहकस्तत्कालिकाचारानुरोधेन तस्या मृतकलेबरमरण्यं नीत्वा गानपुरस्सरमौर्ध्वदैहिक क्रिया निर्वर्तयितुमयतत तस्या अनुजावपि तां प्रच्छायशीतलां वनस्थलीं प्रापय्य शनैश्शाद्वले शाययित्वा उत्क्रांतस्य तदात्मनोनिर्वृतिजननाय कलं गीतानि जगतुः पर्णपुष्पादिभिस्तद्गात्रं प्रच्छाद्य सुफाल इदमाह—वसंतेऽहमत्रैव निवसामि तव श्मशानमनुदिनं वसंतपुष्पैः प्रच्छादयामि त्वन्निश्वासगंधिभिः पाटलैः त्वद्दन्त-

कान्तिसदृक्षच्छविभिर्मल्लिकाकुसुमैः त्वच्छरीरसवर्णैः कर्णिकारैः त्वद्वचो माधुर्यावधीरितमरंदैश्चूतैश्च त्वत्पितृकाननमलंकरोमि हेमन्ते तु पुष्पाभावात्त्वच्छिरोरुहसदृशं शैवलं तवोपरि निक्षिपामि एवं ते तस्या अपरकर्माणि निर्वर्त्य स्वनिलयं प्रति ययुः ।

अथ हिमजनिरपि तेषां निर्गमनानन्तरमोषधीरसस्य शक्तौ क्षीणभूयिष्ठायां शनैः प्रबुद्धा परितो विलोकयन्ती न कमपि ददर्श । स्वदेहस्योपरि निपातितानि पत्राणि पुष्पाणि च विधूयोदतिष्ठत । इदं सर्वं स्वप्नसदृशं मन्यमाना एवमाह । "पर्वतकंदरे सुप्तास्मि । अत्र प्रबुद्धास्मि । कुतो वेमानि पुष्पाणि । कथमेभिः प्रच्छादितास्मि " इति बहुप्रकारैर्वितर्कयंती न किमप्यवधारयितुं शशाक । गुहामार्गमप्यजानन्ती नूतनपरिचितेष्वेकमप्यपश्यन्ती सर्वमेतत्स्वप्नएवेत्यवससौ । घरट्टग्राममुपतिष्ठमानं पन्थानं गवेषमाणा हिमजनिः पुनरेकाकिनी मार्गखेदावसन्ना प्रतस्थे । तं ग्रामं प्राप्य तस्मात्प्रदेशादहिस्थलीं गच्छंत्या कयाचिन्नावा रोमकपुरं गन्तुं कृतनिश्चया बभूव । अद्यापि भर्तर्यनतरे बद्धभावा सती गूढवेषधारिणी तमेव विचेतुमभिललाष । अत्रान्तरे दैवयोगेन प्रसज्यमानं महान्तं व्यतिकरं हिमजनिर्न विवेद ।

अथाकस्मादांग्लदेशाधिपतेस्सिंहबलस्य रोमकचक्रवर्तिना अगस्त्येन समं महान्संग्रामः प्रससंज । आंग्लदेशं विजेतुं स

चक्रवर्ती महत्या सेनया तमेवारण्यमार्गमनुसृत्याजगाम। यत्र हिमजनिरवास्थिता।

अनंतरो रोमकसैन्येन साकमांग्लदेशमागतोपि तत्पक्षमवलंब्य स्वदेशीयानभियोक्तुं नैच्छत् अपितु देशान्निष्कासितवत स्सिहबलस्यार्थे आंग्लानीकेन मिलित्वा रोमकभटैर्योद्धुमीहितवान्।

हिमजनिस्स्वैरिणीत्येवानंतरस्य मनसि दृढप्रत्यय आसीत् तथापि "त्वदाज्ञानुरोधेन मया हिमजनिर्व्यापादिता" इति बिसादेन लेखमुखेन निवेदितस्तदीयवधोऽत्यर्थमीप्सितोप्ययशनिर्महीध्रमिव अनंतरस्य हृदयं व्यदारीत्। अतएव वैराग्येन लोकयात्रायां निर्विण्णस्संप्रहारेषु निषूदितानां वीराणामनिवर्तिनीं गतिमाप्तुं वा विवासनात्पुनरागमनेन क्रुद्धात्सिंहबलादात्मनो वधमन्वेष्टुं वा कृतनिश्चय आंग्लभूमिमवततार।

अथ हिमजनिर्घरट्टग्रामप्राप्तेः पूर्वं रोमकसैनिकैर्जीवग्राहं गृहीता रोमकसेनाधिपतेर्लोसकस्य सविधं निन्ये किंकरवेषधारिण्यास्तस्या रूपसम्पदा सद्वृत्त्या सेनाधिपः परं हृष्टस्तां स्वसेवायां नियोजितवान्।

अथ सिहबलो विपुलसैन्यानुगतोऽभ्यमित्रीणस्संवृत्तः तस्मिंस्तदरण्यं प्रविष्टे सुफालकुवालावपि व्यूढकंकटौ धृतशिर-

त्राणौ चर्मासिगदाद्यायुधधारिणौ राज्ञोऽनीकमनुप्राप्तौ तौ तरुणौ "नृपस्यास्मत्पितुरेव साहाय्यं कर्तुमावां समुपस्थितौ स्व" इत्यजानन्तौ केवलभुजदंडकंडूत्यपनोदोत्कंठाप्रेरितौ योद्धुं जग्मतुः। बलाहकोपि ताभ्या सह प्रथनभूमिमाजगाम। स यौवने बहुषु समीकेषु विजयी योधाग्रणीर्भूत्वा लब्धप्रतिष्ठ आसीत्। राजनि सिंहबले स्वकृतपुत्रापहरणरूपापराधेनानुतप्तश्चिरात्तदुन्मार्जनावकाशलाभाय स्पृहयन् अद्य साधीयानवसरः प्राप्त इति हर्षेण द्विगुणीकृतरणोत्साह आहो पुरुषिकाधिष्ठितोऽहंपूर्विकया संग्रामागणमभ्यपद्यत्।

अथ प्रावर्तत द्वयोः पक्षयोर्हयखुरोद्धूतधूलीपटलसमावृतवियदाभोगं भेरीभाकारप्रतिश्रुन्मुखरितदिगन्तरं परस्पराभिहतयोधं शस्त्राशस्त्रितलातलितुमुलमायोधन। एवं सम्प्रवृत्ते संप्रहारे यद्यनंतरो बलाहकस्तत्पुत्रौ च निजपराक्रमानुरूपं न व्यक्रमिष्यन् 'सिंहबलो निहतोऽभविष्यत् आंग्लसैनिका निहता अभविष्यन् एवं ते राज्ञो जीवितं ररक्षुः तं विजयलक्ष्मीं ग्राहयामासुः अथ युद्धानंतर आकांक्षितनिधनमलभमानो विवासनात्पुनरावर्तनेन क्रुद्धाद्राज्ञः प्राणहरं दंडं प्रतीच्छन् तस्याधिकृतानामन्यतमस्य वशमियाय किंकरीभूता हिमजनिस्तत्स्वामी च बंदीकृतौ सिंहबलस्याग्रत आनीतौ। तस्याः पूर्वशत्रू रोमकसैन्यनियुक्तोऽयाचकश्च बंदीकृतः युद्धगृहीतेष्वेतेषु सिंहबलस्या-

स्थानी मानीतेषु अनन्तरोपि वधदंडं प्रापयितुं तत्रैव प्रवेशितः अस्मिन्व्यतिकरे युद्धे कृतमहोपकारायानुरूपं पारितोषिकं दापयितुंसुफालकुवालाभ्यां साकं बलाहकोपि सिंहबलस्य पुरतस्सन्निधापितः राजसेवकतया बिसादोपि तत्र सन्निहितः अनंतरस्सस्वामिका हिमजनिर्भक्तिविश्वासशाली बिसादो नृशंसोऽयाचको बलाहकेनापहृतौ सिंहबलस्य पुत्रौ इत्येते सर्वे भयव्याकुलहृदया राजसभायां तस्थुः तेषां मध्ये रोमकदेशसेनानीरेव प्रथमं राजानमालापितवान् अपरे तु भयकम्पिताङ्गाः किमपि वक्तुमधीरा तूष्णीमासन् ।

हिमजनिरनन्तरं वीक्ष्य शूद्रवेषधारिणमपि तं प्रत्यभिजज्ञे। स तु हिमजनिं प्रत्यभिज्ञातुंनाश क्नात् । सा त्वया च कमजानात् । स्वकीयमंगुलीयकं तस्यांगुल्यां ददर्श । आत्मन आपतितायाविपदोऽयमेव कारणमिति तया न ज्ञातम् । स्वजनकस्याग्रत एव साचारकोपरुद्धा बभूव । बिसादो हिमजनिं प्रत्यभिजज्ञे । स एव मां पुरुषवेषं पर्यधापयत् । "इयमस्मद्भर्तृदारिकैव । दिष्ट्या जीवन्ती मया दृष्टा बलवती भवितव्यतैवास्याश्शुभं विधास्यति ।" इति बिसादो मनस्यचिन्तयत् । बलाहको हिमजनिं प्रत्यभिज्ञाय कुवालं जनान्तिकमिदमुवाच । किं नासौ मृत्वा पुनर्लब्धसंज्ञः कुमारः ।

कुवालः—सत्यमयं चंद्रनिभाननः कुमार आकारेण पीडालमनुसंवदति ।

सुफालः—मृत एवासौ पुनरागतः ।

बलाहकः—नायं पीडालः स चेन्नूनमस्मानालापयेत् ।

सुफालः—तमरण्ये मृतमपश्यम् । स कथं पुनरत्रागतः ?

बलाहकः—भवतु जोषमास्व ।

एतत्समयेऽनंतरो महीशात्प्राणदंडादेशं प्रियातिथिमिव निरीक्षमाणः तस्थौ । उपकृतिपाशसंयतस्सिंहबलो दयार्द्रहृदयः क्षान्तापराधस्सन् मरणदंडान्मां मोचयिष्यतीति भीत्या आत्मना कृतं युद्धसाहाय्यमनंतरस्तत्पुरतो नोद्घाटयामास । हिमजनिं स्वसेवाया परिगृह्य पोषयन् लासको रोमकसेनाधिपतिरेव राज्ञा सह संभाषणमकरोत् । महाधीरस्वान्तो महाकुलप्रसूतस्सवाहिनीपतिः राजानमिदमुवाच । "राजन् एतद्बंदीभ्यो-निष्क्रयधनमप्रतिगृह्य सर्वानेतान्वधदंडेन योजयसीति मया श्रुतम् । अहं रोमकदेशवासी । रोमकजनोचितहृदयेन युष्मद्विहितं वधमनुभवितुं बद्धपरिकरोस्मि । किंत्वस्ति मे काचित्प्रार्थना" । एवं ब्रुवाणस्सेनापतिः हिमजनिं राज्ञे प्रदर्श्य पुनराह । "असौ कुमार आंग्लजातिजः । अस्य निष्क्रयधनं प्रतिगृह्य मुंचैनम् । अयं मत्किंकरः । तादृगनलसो मेधावी विनीतः कर्मकरोदयावान्किंकरःकेनापि प्रभुणा अनासादितपूर्व इत्यवेहि । यावन्तं कालं मां सिषेवे तावन्तं कालं नानेनापराधलवोपि

कृतः । अन्यान् रक्षितुं नेच्छसि यदि तदा एनमेकमपि रक्ष । ” अथ सिंहबलस्सोत्कंठं स्वदुहितरं हिमजनिमपश्यत् । वेषान्तरापन्नां ता न विवेद किंतु बलवत्तरया प्रकृत्या हृदये ज्ञापितो मनसीदमाह । “स्मराम्यस्याकृति । नूनमयं क्वापि मया दृष्ट इव प्रतिभाति । कुत्र वा अयं दृष्टो न जाने ।

तां प्रति । “वत्स चिरं जीव । मया दत्तमभयं ते । मत्तो यमन्यं वरं वृणीषे तं ते ददामि ।

हिमजनिः । परमनुगृहीतास्मिमहानयं प्रसादः । राज्ञस्तादृशविजयोत्सवकाले यो यद्वाछति तत्तस्मै वितरणमेव वरप्रदानं । ततस्ते तत्रत्यास्सर्वे “अयं बालकिंकरो राज्ञस्सकाशात्किमभीष्टमभीप्सतीति श्रोतुमवदधुः । अथ लासकस्तदानीं तामाह । “वत्स ! नाहं प्राण परीप्सुः त्वया प्रार्थ्यमानम भीष्ट-महं जाने ।

हिमजनिः । प्रभो ! न हिन हि । ममान्यत्प्रार्थनीयमस्ति । नाहं याचे त्वत्प्राणान् । बालस्यास्य कृतघ्नतामालोच्य रोमकसेनाधिपतिर्विस्मयाविष्टो बभूव अथ हिमजनिरयाचके बद्धदृष्टिराह । राजन् । वक्ष्यमाणाद्वरादन्यं न याचे । स्वांगुलिसक्तं तदंगुलीयकमयाचकेन कुतस्समासादितमिति प्रष्टव्यम् । तेन सोपपत्तिकमुत्तरं दातव्यं । सिहबलोऽगुलीयकस्याधिगमः विस्तरेण वक्तव्यः समीचीनप्रतिवचनदानाभावे त्वां लोष्टघातं घातयिष्यामीत्ययाचकमभाययत् ।

अथायाचकः पूर्वोक्तप्रकारेणानंतरस्य जायापरीक्षणार्थमात्मना कृतपणबन्धं तत्सिद्धये स्वदौर्जन्यकल्पितकपटोपायं च सविस्तरं कथयित्वा एतत्सर्वं मत्कृत्यमेवेति अभ्युपजगाम ।

स्वकलत्रानवद्यचरित्रे प्रमाणभूतमेतदुपन्यासं श्रुत्वा नन्तरो वागतीतमानन्दमन्वभूत् । तदा झडिति तज्जनसमूहात्पुरतः प्रधाव्य "हाप्रिये हिमजनि ! तत्काले त्वयि निर्घृणोऽस्मि संवृत्तः । मृष्यतु भवती ममापराधमित्याक्रन्दन्कठिनोहमिमा राजकुमारीं हंतुं बिसादं मत्सेवकमाज्ञप्तवानस्मीति सिहबलस्याग्रतः निजनृशंसत्वं प्रकटीचकार । ततो हिमजनिर्भर्तुः परिदेवितानि श्रुत्वा असहमाना अहमेवास्य व्यसनस्य कारणमस्मीति विचिंत्य यावदहमिम गूढवेषमपनीयात्मान नप्रकाशयेयं तावदस्य मनस्स्वास्थ्यं न जायेतेति मत्वा पुरुषवेषमपनीय यथापूर्वं स्ववेषं जग्राह सोपि ता प्रिया ज्ञात्वा दुःखं विशंकां च परित्यज्य आनंदसागरनिमग्नस्तस्या पूर्वाभ्यधिकां प्रीतिमुवाह ।

सिहबलोपि चिरनष्टा कुमारीं विचित्रतरदैवयोगेन पुनर्लब्ध्वा परां निर्वृतिमाप पूर्वतोप्यधिकतरं पितृप्रेम तस्यामदर्शयत् । अनंतरस्य न केवलं प्राणरक्षणमपि तु सन्मानेन तस्य राजभवनानयनमपि अन्वमंस्त ।

बलाहकश्च राज्ञि स्वकृतापराधं विवरीतुमयमेव समुचितस्समय इति सुफालकुवालावादाय राज्ञे समर्प्य "देवइमौ

भवदीयौ नष्टौ कुमारौ गीर्धरविराविव्यवेहि । शैशवएव मयापहृतौ इत्यवोचत् । सिहबलश्च वर्षीयांसं तं बलाहकं चक्षमे सर्वानंदस्यंदिनि तत्समयेकृतापराधानपि दंडयितुं कोनृपति-रुत्सहेत ।

सिंहबलो नष्टलब्धयोर्युवराजपदार्हयोर्भुजवीर्यशालिनोः पुत्रयोर्नष्टलब्धाया दुहितुश्च पुनस्समागमेन आनंदपरवशो बभूव ।

किंकरवेषधारिणी सती सती हिमजनिः पुरायं सिषेवे तस्य सेनाधिपतेः प्रत्युपकृतिं कर्तुमिदानीमवसरं लेभे । राजा च दुहितृप्रार्थनया तत्क्षणमेव तस्य सेनाधिपतयेऽभयं प्रादात् । तस्य माध्यस्थ्येनैव उभयोः पक्षयोस्सन्धिः कृतः ।

अथ सिहबलस्य पापाशया द्वितीयजाया स्वसंकल्पित-कार्यसिद्धेर्भंगात् भग्नमनोरथा पश्चात्तापसमन्वितहृदया स्वप्रेरणोत्थापिते कस्मिंश्चित्कलहेनिषूदितं स्वपुत्रं कलादं स्वचक्षुषैव दृष्ट्वा पुत्रशोकार्त्या रुग्णीभूता प्राणान्विजहौ ।

एवमयं दुःखव्यतिकरोऽस्याः कथाया आनन्दपरि-समाप्तिं भनक्ति ये साधवस्ते सर्वे संतोषिता इत्येतावत्कथनमे-वालम् । दुरात्मा अयाच्वकोपि मोघीकृतनिजकपटोपायो राजानुग्रहेण निग्रहं विना विसृष्टोऽभूत् ।

सिंहबलचरित्रं समाप्तम् ॥

---

## 5. Macbeth—(सुपर्वचरित्रम्)



1 Duncan = धनिकः—कुन्तलदेशाधिपः.

2 Macbeth = सुपर्वा—राजवल्लभः.

3. Banquo = भासुरकः—सेनाधिपतिः.

4 कुमतिः—सुपर्वणोजाया.

5. Malcolm = रुचिकः—धनिकस्य ज्येष्ठपुत्रः.

6 Donalbain = वल्लभः—धनिकस्य कनिष्ठपुत्रः.

7 Fleance = सुजातः—भासुरकस्य पुत्रः.

8 Macduff = मखदर्पः मलयदेशाधिपतिः–सुपर्वणश्शत्रुः.

9. Birnam wood = भरणारण्यम्.

10 Dunsinane = सेनाघनाद्रिः.

# ॥ सुपर्वचरित्रम् ॥

## (MACBETH)

आसीद्विनमिताशेषरिपुमण्डलो मण्डलेश्वरशिरश्शेखरायमार्णशासनश्शासनातिलंघिजनभयप्रदोऽभयप्रदश्शरणार्थिनां शिष्टसम्मतोऽनुरक्तप्रजः धनिको नाम राजा कुन्तलदेशस्य पालकः। तस्मिन् राज्यं शासति सति अभूदेकस्सामन्तस्तस्य मित्रं सुपर्वाख्यः। अयं राज्ञस्सन्निहितबन्धुः। अनेकसाम्परायेषु निजदोर्दण्डविक्रान्तिविजितारिसंघः राज्ञो बहुमानपात्रं बभूव।

अथैकदा सुपर्वाऽन्येन भासुरकनाम्ना सेनाधिपतिना शत्रून्पराजित्य संग्रामविजयलक्ष्मीसनाथो निजपुरीं प्रति निवर्तमानोऽत्युद्धतप्रभंजनां कांचन जागलभूमिं समया आगच्छन् मध्येमार्गं स्त्रीवदाभासमानामपि सकूर्चानां तिसृणामाकृतीनां हठाद्दर्शनेन जातविस्मयो विरमितगतिस्तत्रैव तस्थौ। ताः विशीर्णत्वक्तया प्रचंडवेषतया च मर्त्यधर्मा इव न ददृशिरे। एवं विधास्तावीक्ष्य प्रथमं सुपर्वा सम्भाषणोद्यत आसीत्। तावता प्रकम्पिता इव दृश्यमानास्ता एकैकास्वनासाग्रनिहितजीर्णाङ्गुलिर्न्यवारयत्। तासां प्रथमा सुपर्वाणं वीक्ष्य "प्रभो! वन्दे

भवंतमित्यबोचत् । एतादृशैः प्राणिभिर्ज्ञातमात्मानं विचित्य स सेनानीरीषदपि मनसि विस्मयं नावाप । ततो द्वितीया कुन्तलदेशाधिप!" इति तं संबोध्य प्रणनाम । तत्सभाजनं सोप्यंगीचकार पुनस्तृतीयापि "राजन! स्वस्ति तेऽस्तु त्वमस्य देशस्य राजा भविष्यसि" इत्युक्त्वा विरराम । एतासां भूतविशेषाणां भाविफलावेदनेन सुपर्वा नितान्तं विस्मितोभूत् । यतः । यावद्राज्ञो धनिकस्य पुत्रा जीवन्ति तावन्मनसापि मम राज्यमीहितुमवकाशो नास्तीति सुपर्वा दृढं जज्ञौ ततस्ता भासुरकाभिमुखा भूत्वा प्रहेलिकासदृशया वाचा इत्थमुदीरयांचक्रुः "धनिकादधिको न्यूनश्च भविष्यसि । न तथा सुखी अपितु सुखवत्तरः न कदाचिद्राज्यं त्वदायत्तं भविष्यति । तथापि त्वदनन्तरं तव पुत्राः कुन्तलदेशस्याधिपतयो भविष्यन्ति" इति भाविफलमावेद्य तास्तिस्रस्तिरोदधिरे । ततस्तौ डाकिन्य इति निश्चिक्यतुः ।

अथ तयोरेवमाकस्मिकभूतदर्शनं चिंतयतो राजदूता आगत्य "संग्रामे भवत्पराक्रमसंप्रीतो धनिकस्तुभ्यं कदरदेशाधिपत्यं दातुं कृतनिश्चयस्तिष्ठति । अकृतकालविलंबमागंतुमभिलषतीत्यूचुः । भूतानां भाविफलनिवेदनमद्यैव यथार्थमिव प्रतिभातीति सुपर्वा विस्मयाकुलहृदयो बभूव । एवमेव तृतीयभूतस्यादेशोपि नूनं सिद्ध्येत् । यदा कदा वा कुन्तलानां

राजा भविष्यामीत्याशोत्तरंगितहृदय आसीत् । भासुरकमित्थमाह । आर्य भासुरक ! डाकिनीभिर्मद्विषय उक्तस्समादेशोऽव्यभिचरितं फलिते त्वत्पुत्राणां राज्यप्राप्तिः कथं वितथीभवति ।

भासुरकः—राज्यप्राप्त्याशा भवंतं राज्यप्राप्तये प्रेरयति । किंतु एतासां नक्तंचरीणां वचनानि क्षुद्रविषयेष्वमोघानि भवेयुः । यदि तद्वचनं प्रमाणीकृत्य महत्कार्यमनुष्ठातुं प्रवृत्ता भवेम तर्हि खलीकरणमेव फलम् । तस्मात्तादृशेष्वर्थेषु नास्मादृशैः प्रयतितव्यमिति भासुरकेणानुशिष्टोऽपि सुपर्वा क्षणदाचरीपापोपक्षेपेषु जातदृढप्रत्ययस्तत्प्रभृति कुंतलराज्यपदप्राप्त्युद्यम एवाहर्निशं मनो व्यदधात् ।

अथ सुपर्वा स्वगृहमेत्य डाकिनीनां भाविसूचनं तस्य पाक्षिकसिद्धिं च भार्यायै न्यवेदयत् । सा सर्वदा दुष्टहृदया ऐश्वर्यकाङ्क्षिणी च धर्मेण धर्मेतरेण वोपायेन भर्तुरुत्कर्षाधिगममेव चक्रमे । नृशंसव्यापारपराङ्मुखमपि भर्तारं भूतादेशसिद्ध्यर्थं राजवधः कर्तव्य इति दृढं प्रणुनोद ।

राजा धनिकः प्रसादाभिमुखस्सन् यदा कदा वा प्रधानराजवल्लभान्सभाजयितुं तेषां निकेतनानि गन्तुमभ्यस्तः । तथैव तस्मिन् दिने स्वपुत्राभ्यां रुचिकवल्लभाख्याभ्यां सामन्तनृपैरितरानुयायिवर्गेण चान्वीयमानो रिपुविजयसम्पन्नं सुपर्वाणं द्रष्टुं तद्गृहमगात् ।

अथ महेंद्रहर्म्यसन्निभमतिरमणीयसन्निवेशंमंदमारुताधूतशाखाग्रपल्लवैः कूजन्नानाविधविहङ्गमकुलनिर्मितकुलायसङ्कुलैस्संफुल्लकुसुमामोदभरितदिगन्तरैः द्रुमवरैरावृतं मणिमयसोपानपरिष्कृताभिर्विमलजलपूरिताभिस्सौगन्धिकपरिमळोद्गारिणीभिः हंसकारण्डवचक्रवाकादिजलवयःकलकलमुखरिताभिर्दीर्घिकाभिर्विराजितं सुपर्वणस्सौधं विलोक्य विस्मयाकुलः प्रत्यास्पदविहरमाणपुष्पन्धयनिचयझंकारैरभिनान्दितागमन इव मरंदशीकरवाहिगन्धवहस्तनन्धयेनापनीताध्वखेदः मनोगतं पापाशयं स्मितैरेव निगूहन्त्या कुमत्याख्यया सुपर्वजायया प्रत्युद्गतः अन्तर्निगूढकालसर्पं कुसुमितमालतीलतानिकुंजमिव तन्मन्दिरं प्राविक्षत् ।

औपवाह्यादवतीर्य सुपर्वणा निर्दिष्टं राजार्हमौपकार्यं सपरिवारो भेजे "अथ विश्रम्य मुहूर्तं निर्वर्त्य काल्यकृत्यमुपनीतानि गुणवंत्यन्नान्यभ्यवहृत्य मार्गपरिश्रमापनोदनाय शरीररक्षिपुरुषाभ्यामधिष्ठितं मृदुलशय्यासनाथं शयनागारं प्रविवेश सुपर्वकृतातिथ्येन संजातासाधारणप्रीतिस्स राजा धनिकः प्रधानराजवल्लभेभ्यः अधिकृतेभ्यो महार्हं पारितोषिकजातं दापयामास ।

अथ भयङ्करो निशीथसमयः प्रावर्तत अस्मिन्समये लोको निद्राप्रमुषितसंज्ञो मृतकल्प इवाबभौ जारचोरौ विना

न कोपि बहिस्संचरति शरारवः पर्यटन्तीतस्ततः सुप्तानां जनानां मनांसि दुस्स्वप्रदूषितानि भवन्ति एतादृशसमये प्रसुप्तस्य राज्ञो वधं कारयितुं कुमतिः प्रबुद्धा आसीत् यदि सुपर्वा साहसिको नृशंसोऽभविष्यत् स्त्रैणानर्हं लोकगर्हितं कर्म कर्तुं कुमतिस्स्वयं नोपाक्रमिष्यत किंतु स सदयान्तःकरणः कापट्येन सजातीयं मनुष्यं हन्तुं नैच्छत् भार्यया मुहुर्मुहुः प्रचोदितोपि नैतादृशं राजवधरूपं घोरकर्म विधातुं न मे हस्तः प्रसरतीति दृढ न्यषेधीत् ।

तदुपरि सा स्वयमेव धनिकस्य शिरश्छेत्तुमध्यवस्य रक्षिपुरुषौ सुरा पाययित्वा कृपाणपाणी राज्ञः पर्यंकसमीपमुपगम्य यावत्तस्य मुखं सम्यङ्न्यरूपयत्तावत्स्वपितुराकृतिं तस्मिन् दृष्ट्वा मनस्संकोचेन चिकीर्षिते कर्मणि प्रवर्तितुं न शशाक ।

अथ सा भर्तारं प्रोद्दीपयितुं पुनस्तन्निकटमाजगाम सोपि डोलिकातरलहृदयश्चिरं बहुविकल्पानकरोत् तदकरणे बह्व्य उपपत्तयस्संतीति मेने तत्र प्रथमतस्स राज्ञः पादपद्मोपजीवी सन्निहितो बंधुः विशेषतस्तस्मिन् दिने आतिथ्यं ग्राहयितुमाहूतः अयं धनिकोपि महात्मा, अनुरक्तप्रजः धर्मरतिः, तस्मादीदृशं निर्निमित्तं हन्तुं मम न रोचते अस्य प्रसादेनैवाहमुच्चपदं प्रापितः अनेन क्रूरकर्मणा मम कीर्तिः प्रतिष्ठा च विन-

श्येतामिति मनसि दीर्घमालुलोचे। न मयेदमकार्यं कर्तव्यमिति निश्चितवन्तं भर्तारमुपेत्य क्रूराशया अविचाल्यग्रहा कुमतिरिदमाह—अतिसुकरमेतत्कार्यं द्रुतनिर्वर्त्यं च एकक्षणेन साध्योयमर्थः कृत्स्नस्यजीवितकालस्य सुखहेतुर्भवति भवांस्तावद्भीरुः चंचलचित्तश्च अहंतु स्मितांकूरालंकृतमुखचंद्रं स्तनन्धयशिशुं मातुरुत्संगादाकृष्यैकेन शस्त्राघातेन स्फुटितमस्तिष्कं कर्तुं प्रभवेयम् अपिच मधुपानमत्तयोर्गाढनिद्रावशंगतयोस्तद्रात्ररक्षकयोरिममपराधमारोपयितुं सुकरमिव पश्यामि एवं भार्ययोक्तं निशम्य सुपर्वा एतत्साहसकर्मानुष्ठातुं मनो दृढीचकार एवं कृतनिश्चयो निशितकृपाणमादाय धनिकस्य प्रावरकमन्धकारे शनैः प्रविवेश प्रविशंस्तत्र स्वोपरिपतनोद्यतं शोणितबिंदुरूषितमपरं कृपाणमपश्यत् प्रसारितकरेण तस्यादानाय यतमाने न किमप्यदृश्यत करिष्यमाणवधकर्मणा व्याकुलितबुद्धेस्सुपर्वणस्तत्कालोत्पन्नया भ्रान्त्यैव तथा प्रत्यभात् ततो भयशंकाभ्यां विमुक्त एकेन खड्गप्रहारेण चिच्छेद तच्छिरः एवं राज्ञि धनिके सुपर्वणा व्यापाद्यमाने तत्पार्श्वे प्रसुप्तयोरक्षिपुरुषयोरेको निद्राण एव जहास अपरः "अब्रह्मण्यमब्रह्मण्यमि"त्याचक्रन्द ? तदाक्रंदरवेणोभौ प्रबुद्धौ सह परिवाराय राज्ञे "स्वस्ती" त्युक्त्वा जगदीश्वरं स्तुत्वा पुनर्निद्रां गतौ उत्स्वप्रायमानयोस्तयोस्तद्वचश्शृण्वन्नलिन्दाद्बहिरवस्थितस्सुपर्वा स्वयमपि स्वस्तीति

वक्तुं यतमानस्साध्वसातिरेकसंजातगद्गदस्वरेण लुप्ताक्षरा स्ववाचं न शशाक समापयितुम् । “मापरं भैषीः सुपर्वा चेतना पुष्यन्तीं निर्दुष्टा निद्रामुपहन्ती” त्युच्चरन्ती वाक् श्रूयमाणेव आसीत् “मातः परं भैषी” रिति वाग्गृहमभितः पुनः पुनरुदचरत् तादृशभयंकराभिर्निजमनःकल्पितभ्रान्तिभिरुपेतस्सुपर्वा स्वसंकल्पसिद्धिं श्रोतुं प्रतिपालयन्तीं भार्यामुपेत्य चिकीर्षितं कर्म अव्याहतं कृतमित्यचकथत् ततः कुमतीराजवधमहापातकेनोत्पन्नबुद्धिचाचल्यं गाढविषादकलुषितहृदयं संजातानुशयं भर्तारं सन्निपत्य क्षतजार्द्रं कृपाणं तस्य हस्तादादाय प्रक्षाळयामास राजा तन्निकटे सुप्ताभ्यामनुचराभ्यामेव निषूदित इति यथा लोको मन्येत तथा तद्वासांसि रुधिरबिन्दुभिरांकिष्ट ।

अथ रजन्या प्रभातायामनिगूहनीयं तद्वधकर्म पुर्यां सर्वत्राभिव्यक्तमभूत् । सुपर्वा तज्जाया च राज्ञ अतर्कितोपनतमरणेन महद्दुःखमभिनिन्यतुः । तत्र सुप्तेन भटद्वयेनैवेदं कर्म कृतमिति केचिदूहाचक्रिरे । अपरेतु सुपर्वैव कृतापराधी इत्यशंकिषत यतः प्रायशो लोके क्षुद्राणामुच्चतरपदप्राप्त्याशान विद्येत । राज्यलोभेन सुपर्वैवेतद्दारुणं कर्म कृतवानिति वक्तुं युज्यते । एतद्दृष्ट्वा द्वौ राजपुत्रौ प्राणपरीप्सया कांदिशीकौ बभूवतुः । तयोर्ज्येष्ठो रुचिकः लाटदेशाधिपं शरणमियाय कनिष्ठो वल्लभो देशान्तरं जगाम ।

इत्थं दायार्हयोराजपुत्रयोरुत्तराधिकारिणोरभावात्सुपर्वा तद्राज्यं स्ववशे चकार । अभिषिक्तश्च एवंभूतादेशोऽक्षरशस्सिद्धः ।

एव राज्यप्राप्तावपि तौ दम्पती कुमतिसुपर्वाणौ "भासुरकस्य सूनवो राज्यं पालयिष्यंती"ति भूतादेशविशेषं न विसस्मरतुः । एतदेव मुहुर्मुहुस्स्मृत्वा स्मृत्वा एवं मनसि चिंतयतस्स्म "किंभासुरकापत्यमस्मद्राज्यासने निषत्स्यति? अस्मद्विषये सिद्धस्सभूतादेशः । भासुरकविषये यथा मृषाभवेत्तथा-स दुरात्मा सपुत्रो मारयितव्यः" । इति निश्चिक्यतुः ।

एतत्प्रयोजननिष्पादनाय उत्सवव्याजेन कृत्स्नं राजवल्लभवर्गं सजग्ध्यै निमंत्रयांचक्रे । भासुरकं सुजातनामानं तत्सुतं च निमंत्रितवान् । तस्मिन्नर्धरात्रसमये तमः पटलमेदुरेण येन पथा भासुरक आगच्छेत्तन्मार्गमायुधपाणिभिर्घातुकपुरुषैरुपरुद्धं कारयामास । अथ तपस्वी भासुरकस्स्वपुत्रेण साकं तद्रथ्यया गच्छन् घातुकपुरुषैर्हृदयमर्मणि गदयाविद्धो ममार । अथ तस्मात्तुमुलजनसम्बाधात्प्रदेशात्सुजातः कथंचिदात्मानं विमोच्य पलायितः । तस्मात्सुजातात्प्रावर्ततैको राजवंशः यस्सुचिरं प्रशशास कुंतलराज्यम् ।

अथ मृदुशीला सदाचारकोविदा राजगौरवाभिज्ञा देवी कुमतिर्भोजनाय समवेतान्सर्वानतिथीन् सादरमभोजयत् ।

सुपर्वा राजवल्लभैस्सामंतैश्च सोल्लासं सम्भाषमाणः "किमसौ मे प्रियमित्रं भासुरकिश्चिरयति ? को वा भवेद्विलम्ब हेतुः" । इति तस्यासान्निध्येन चिन्तां नाटयन् भोजगोष्ठ्या विजहार । तत्समये सुपर्वणो भटैर्घातितोसौ भासुरकः पिशाचतामापन्नस्त-द्गृहं प्रविश्य वेत्रासने निषसाद पुरा सुपर्वा पिशाचान् निर्भयम-सकृत्प्रत्यक्षेण दृष्टवानपि एतद् घोराकृतिमवलोक्य भयातिरेका-द्विवर्णवदनस्संवृत्तः । पिशाचदत्तदृष्टिरितिकर्तव्यतामूढोऽपगत-पौरुषावष्टम्भस्स्तब्धो बभूव । शून्यं वेत्रासनं सभय बद्धदृष्ट्या वीक्षमाणं नृपमेव पश्यंतस्तस्य देवी इतरे राजन्याः परिवारश्च असौविक्षिप्तचित्ततामवापेति मेनिरे । अथ देवी भर्तारमुपगम्य रहस्येवमुवाच । आर्यपुत्र ! भ्रान्त इव लक्ष्यसे । तस्यां रात्रौ धनिक वधोद्यतस्य तव शून्येन्तरिक्षे यथा कृपाणदर्शनं भ्रान्त्याऽभूदद्यापि सैव भ्रान्तिस्ते मनः कलुषयति । एवं व्या-कुलीभवितुं नार्हसि स पिशाच अगत्य यत्र निषण्णस्तस्मात्प्र-देशान्न तिरोदधे तद्दर्शनात्सुपर्वा अतिभीतस्सदस्यैस्सह सलप-न्नपि अनवहित आसीत् । अर्थयुक्तैरपि भयविह्वलै-र्वचोभिः पिशाचेन सह बभाषे । वधरहस्यं प्रकाशीभवेदिति भीत्या देवी "एवं विधेन व्याधिना सुपर्वा मुहुः पीड्यत इति व्यपदिश्य सत्वरं सर्वानतिथीन् स्वगृहान्प्रेषयामास । सुपर्व-णस्तस्य भार्यायाश्च निद्राराला भीषणैस्स्वप्नैर्व्याहन्यत भासुरकस्य

वधादधिकतरं तत्पुत्रस्यापसरणं तयोर्मनः अव्यधत यतस्स इतः परं राजवंशस्य प्रवर्तयिता भविष्यति । स्वपुत्रान् राज्यात्प्रच्यावयितुं शक्नुयात् । इति चिंतया तौ दंपती मनस्स्वास्थ्यं न लेभाते ।

अथैवं गच्छति काले सुपर्वा पुनर्डाकिनी सविधं गत्वा स्वभाविष्यज्जीवितं सुखदं दुःखदं वा भवेदिति ज्ञातुं निश्चिकाय कचिदरण्ये अन्विष्यान्विष्य कस्यां चिद्गिरिगुहायां मनुष्याणां भाविशुभफलज्ञानाय मन्त्रैराक्षसान्वशीकर्तुं कस्मिश्चिन्मायातं त्रोक्त घोरकर्मणि व्यापृतास्ता ददर्श । तत्कर्मनिर्वर्तनाय तंत्रोक्तानि वक्ष्यमाणान्युपकरणानि ताभिस्संपादितानि । मण्डूकः । तैलपायिकाः । काकोदराः क्षुद्रगोधानयनं । श्वजिह्वाक्ककलासजंघा । उलूकपक्षः पाठीनस्यशल्कानि । वृकस्य दंष्ट्रा मकरस्योदरं डाकिन्या मृतकलेबरं अजाप्लीहा इत्येतानि सर्वाणि पृथुशरावजले निधाय वह्निना श्रपयित्वा गाढतप्तं तच्छरावं मर्कटरक्तेन शीतलीचक्रुः । पुत्रादिन्यास्सूकर्याश्शोणितमस्मिन शरावे पुपुरिरे । घातकलगुडनिष्ठ्यूतवसामनले प्राक्षिपन् । एतैः मायाकर्मभिस्स्वपृच्छानामुत्तराणि दातुं राक्षसीस्स्वायत्ताश्चक्रुः ।

अथ ता डाकिन्यस्सुपर्वाणं वीक्ष्यैवमूचुः राजन् अद्य एते पिशाचा भवत्पृच्छानां सम्यंच्युत्तराणि दातुं समर्थाः

तान् पृच्छ ततस्सुपर्वा स्वयमध्यक्षितेभ्यस्तद्घोराभिचारकर्मभ्यो भीतिमनाप्नुवन्नुवाच क ते पिशाचाः तानहं द्रष्टुमिच्छामि ततस्ताभिराहूतास्त्रयः पिशाचास्तस्य पुरतः प्रादुर्बभूवुः तेषां प्रथमस्तं नाम्ना आहूय "राजन्! मलयनरपतावप्रमत्तो भव" इत्याह सुपर्वा तेनोपदेशेन संतुष्ट आसीत् यतस्समखदर्पेण मलयाधिपतिना बद्धवैरः ।

द्वितीयो रक्ताक्तस्य शिशोराकारमुद्वहन् सुपर्वाणमिदमूचे सुपर्वन्! मनुष्यान्माभैषीः न कोपि योनिजः त्वा प्रधर्षयितुं शक्तः साहसिकः धैर्यवान् स्थिरधीश्च भव इति तच्छ्रुत्वा सुपर्वा इत्थमाचक्रंद "मखदर्प! सदर्पो भव चिरं जीव किमहं त्वत्तो बिभेमि तथापीतः परं त्वयि द्विगुणतरमप्रमत्तो भविष्यामि त्वा यमक्षयं प्रापय्य निर्भीको वज्रनिर्घोषेणाप्यनुपहता निद्रामनुभवामि" ।

•तस्मिन्नस्तपे निष्क्रान्ते तृतीयो मकुटमंडितार्भकाकृतिर्वृक्षपाणिस्सन्नदृश्यत अथ सोपि सुपर्वाणमालोक्य "उपजापेभ्यो न भेतव्यमिति तं समाश्वास्य प्राह "यावद्बुरणग्रामतरुगहनं सेनाधनाद्रेरुपरि नागच्छति तावद्रिपुभिर्न विजेष्यसे इति" सुपर्वा "साधूक्तम् कोवा अरण्यमुन्मूल्य धरण्यां संचारयितुं शक्नुयात् अहं पुरुषायुष जीवीभविष्यामि दारुणाकांडमृत्युना नापाच्छिद्ये किंत्वेकं ज्ञातुमिच्छामि तन्मे कथय

यद्यस्ति ते चातुर्यं किं कदापि भासुरकस्यापत्यं मद्राज्यमपहरिष्यति" इति पृच्छति सुपर्वणि तच्छरावो भूमौ निममज्ज गीतध्वनिरश्रूयत अष्टराजप्रतिबिंबान्यस्य निकटे दृष्टानि तेषु चरमो भासुरकः बह्वीनामितराकृतीनां प्रतिबिंबानि धारयद्दर्पणमेकं हस्ते गृहीत्वा रुधिरदिग्धांगस्सुपर्वाणं वीक्ष्य सयत्नेनं तेभ्योऽदर्शयत् अथ सुपर्वा मदनंतरमेते भासुरकस्य पुत्रा मद्राज्यं पालयिष्यंतीति जज्ञौ अथ ता डाकिन्यः मधुरगीतस्वनैः नर्तनैश्च सुपर्वाणं नंदयित्वा तिरोदधिरे एतत्सर्वं मनस्याकलय्य सुपर्वा अशुभपर्यवसायीति मेने ।

डाकिनीगुहाभ्यंतराद्विनिष्क्रम्य सुपर्वा स्वगृहं गच्छन् "मलयाधिपो मखदर्पस्सुपर्वाणं राज्यात्प्रच्याव्य राज्यार्हं रुचिकं धनिकस्य प्रथमपुत्रं राज्येऽभिषेक्तुमिच्छया युद्धसन्नहनायांगदेशं गतवानिति वार्तां शुश्राव ।

एतद्वार्ताश्रवणेन क्रोधाविष्टस्सुपर्वा मखदर्पस्य 'दुर्गमवस्कंद्य तेन गृहपरित्यक्तान् शिशून् जायां च निषूद्य तावता अविरतक्रोधो दविष्ठानपि तद्बन्धून्निजकृपाणधाराजले निमज्जयामास ।

सुपर्वण एवंविधैः क्रूरकर्मभिस्सर्वे राजवल्लभास्तस्मिन्नपरक्ता बभूवुः तेषां समर्थाः केचन अभिषेणनं करिष्यतो रुचिकमखदर्पयोः पक्षं समाश्रिताः अपरे सुपर्वणोभीतास्स्वयं

संग्रामे अप्रविष्टा अपि रहसि तयोर्विजयमाचकांक्षुः क्रमेण तस्य शौर्यं प्रतापश्च क्षयमीयतुः सर्वाः प्रकृतयस्तं दिद्विषुः न कोपि तस्मिन्प्रीतिं गौरवं वाऽदर्शयत् स सर्वेषा शंकास्पदमासीत् मृतस्य धनिकस्य प्रजानुरागायाभ्यसूयत नेतः परं सधनिकश्शस्त्रविषादिनावास्वदेशीयाभ्यसूयया वा वैदेशिकसैन्यसमूहेन वा न बाध्यते केवलं स द्रोहपरैरेव विनाशितः ।

अथैवं गच्छति काले दुस्स्वप्नभीतस्ससुपर्वा यस्या उत्संगे शिरो निधाय शयितुमभ्यस्तस्सा भर्तृवृजिनकर्मफलभोक्त्री देवी लोकनिन्दां सोढुमसहमाना विषपानेनात्मानं व्यापादितवती ।

एवं स सुपर्वा मित्रबन्धुसुहृत्परिजनादिना परित्यक्त एकाकी बभूव प्राणनिरपेक्षो मृत्युमभ्यलषत् यथारुचिको महत्या सेनया तमभियोक्तुं प्रत्यासीदत्तदा प्राग्भवं धैर्यं स्थैर्यं चावलम्ब्य दंशितस्सायुधस्संग्रामं प्रविश्य मर्तुमियेष ।

''अपरं च डाकिनीना मृषावचनानि दृढं विशश्वास "न कोपि योनिसम्भूतस्त्वा विजेतुं शक्नोति यावद्भरणारण्यं सेनाधनाद्रि नोपगच्छति तावत्त्वं शत्रुभिरजेय" इति ताभिरुक्तं "यथाभरणारण्यस्य सेनाधनाचलोपसात्तिरसंभाव्या तथा शत्रुभिर्मत्पराजयोऽप्यसंभाव्य" इति स मेने एवं पिशाचवचनप्रत्ययादात्मानं निरपायं मत्वा सर्वसैन्योपरोधसहमात्मीयं दुर्गमशिश्रयत् शत्रोरागमनं प्रतिपालयन्नासीत् ।

अत्रान्तरे भयकम्पिताङ्गो विच्छायवदनस्स्वयं दृष्टमपि वाचा बहिर्निवेदयितुमशक्त इव भासमानः कश्चिद्वार्तायनस्समागत्य शिरोनिहितांजलिस्तस्मै सशपथं व्यजिज्ञपत् । "महाराज ! सेनाधनाचलमारुह्य अधोवीक्षमाणेन मया सेनाधनकुधराभिमुख भरणारण्यस्य चलनं दृष्टमिति" । सुपर्वा सकोपं मृषावादिन् ! किंकरापशद ! किं मृषोद्यानि भाषसे पश्य ! इदानीं त्वां शूलमारोपयामि अथवा यदि त्वदुक्तं सत्यमपि न तन्मे गणनीयम्" अधुना सुपर्वा नष्टधृतिस्संदिग्धार्थे भूतवचने संशयालुरभूत् यावद्भरणारण्यं सेनाधनाद्रिं नोपसर्पति न तावत्तस्य भीतिः इदानीं तत् संचचाल तथापि स इत्थं मनस्यचिन्तयत् "यदि पिशाचेनोक्तं वचस्सत्यं भवति तर्हि सन्नद्धो नैस्त्रिंशकश्च भूत्वा सेनामुखं प्रवेक्ष्यामि अत्र स्थातुं वान्यत्र पलायितुं वा नोत्सहे नातः परं मे जिजीविषा" एवं जीविताशां छित्वा उपरुद्धनिजदुर्गाणा रिपूणामभिमुखं जगाम सन्देशहरेणाध्यक्षीकृतमरण्यचलनरूपाद्भुतमित्थं व्याख्यातं रुचिकस्स्वसैन्येन साकं भरणारण्यं समया आगच्छन् दक्षस्सेनाधिपतिरिव शत्रुभ्यस्स्वसैनिकान्निगूहितुं वृक्षविटपान् खंडयित्वा एकैकां शाखां करेणावलंबितुं सर्वान्पदातीनाज्ञापयामास हस्तगततरुशाखाप्रच्छादिताना भटानामभियानं दूराद्दृश्यमानं सत् वार्ताहरस्य मनस्यरण्यचलनभ्रांतिमुत्पाद्य भयमजनयत् एवं डाकिनीवचसामर्थस्सुपर्वणा अन्यथा गृहितः एवं नष्टस्तस्यैकः प्रत्ययालंबः ।

इदानीमुभयोः पक्षयोस्समवर्तत घोरस्संग्रामः तत्र केचन मित्रशब्दव्यपदेशिनस्सुपर्वणः पक्षमवलंब्य कृतसहाया अपि सुपर्वणि जातविद्वेषा रुचिकमखदर्पयोर्विजयमाशसन् तथापि स्वपक्षीयैरकृतावष्टम्भस्तीव्रकोपोद्दीपितो निजपराक्रमानुरूपं स्वदोर्दंडप्राचंड्यं प्रकटयन् कृपाणविक्षेपेणाभियोक्तॄन् तिलशः खंडयन् मखदर्पमभिपपात। तं वीक्ष्य सुपर्वा "मखदर्पेत्वयाऽप्रमत्तेन भवितव्यमिति" डाकिनीकृतमुपदेश स्मृत्वा तस्मात् न्यवर्तत। प्रथनभूमौ तं चिरायान्विष्यान्विष्यालभमानोऽसौ मखदर्पस्तं वीक्ष्य युद्धायाजुहुवे अथ सिंहशार्दूलयोरिवोदभूदतिरौद्रो द्वंद्वसंस्फोटः मखदर्पस्तत्कृतस्त्रीशिशुवधकथामुद्घाट्य तमवाच्यवचनैर्निनिन्द। तमुद्दिश्येदमाह रे रे कुलपांसन! स्त्रीशिशुहत्या महापातकिन् नृशंस! इदानीं मदक्षिगोचरो भूत्वा सजीवः कथं गमिष्यसि एष न भवसि" ततस्सुपर्वा "न कदापि योनिजात्ते मरणं संभवेत्" इति डाकिनीवचन स्मरन् मखदर्पमिदमाह "मखदर्प! वंध्यदर्पोसि यथा तव निस्त्रिंशेन वायुरच्छेद्यः तथा अहमपीति मन्यस्व। देवतावरप्रसादान्न कोपि नारीसंभूतः पुरुषो मयि प्रहर्तुं शक्नुयात्"। मखदर्पः "अरे जाल्म! वरबले भग्नाशो भव। नाहं मखदर्पो नारीप्रसूतः मज्जननप्रकारः पृथग्जनजननाद्विभिन्नः अकाले जननीगर्भादाकृष्टोहं त्वया सेवितो वेताल एव जानातीममर्थम्।"

अथ सुपर्वा चरमप्रत्ययाधारोपि नष्ट इति निश्चित्य भयाद्वेपमान इदमब्रवीत् "दग्धा भवतु ते जिह्वा यामामेवं-ब्रूते परातिसन्धानपराणां भूतानां सन्दिग्धार्थानि वचांसीतः परं न कोपि प्रत्येतु । यतस्ते प्रथमं स्ववचोभिरस्माकमाशाजन-यित्वा अंततोऽस्मान्भग्नाशान्कुर्युः नाहं त्वया योत्स्ये" ।

मखदर्पः तर्हि चिरं जीव भयंकरदर्शनं राक्षसमिव त्वां पश्यामः कस्मिंश्चित्प्रसिद्धतले फलकमेकं निधाय तस्मिन् "अस्मान्नृशंसतरो नास्ति लोके" इत्यक्षराण्यारोपयामः ।

अथोवाच लुप्तधैर्यस्सुपर्वा "यवीयसो रुचिकस्य पाद-पीठेऽवनतमूर्धा मन्दभाग्यो हतजीवितं धारयितुं नोत्सहे । प्राकृत-जनगर्हां सहमानो रुचिकदत्तपिंडोपजीजी कथमहं जीवामि । भरणारण्ये सेनाधनाद्रिमागतेपि अयोषित्संभूते त्वयि प्रतियो-द्धर्यपि प्रयतिष्ये विजयाय" एवं क्रोधोद्दीपितः प्रलपन्ससंरम्भं मण्डलाग्रमाकृष्य मखदर्पे पपात । सोपि तं चिरं योधयित्वा शिरो निकृत्य नूतनभूभर्त्रे रुचिकायोपहारीकृतवान् । एतावंतं कालं द्रोहचिन्तापरायणेन सुपर्वणापहृतराज्यो दैवोपहतो रुचिक इदानीं नवोदितश्शशाङ्क इव प्रकृतिभिरभिनंद्यमानोदयस्सर्वेषां मनांस्याह्लादयंश्चिरपरित्यक्तं पैतृकं राज्यासनमारुह्य रुचिरगुण-वशीकृतनिखिलजनश्चिरं कुन्तलान्प्रशशास ॥

सुपर्वचरित्रं समाप्तम्

---

## 6. All's well that ends well.

## (सुखान्तं सर्वं सुखम्)



1. Bertram = भरतः—राजिलदेशप्रभुः.
2. Rousellon = राजिलदेशः.
3. Lafen = लापकः.
4. King of France = कुलूतदेशाधिपतिः—चित्रवर्मा.
5. Helena = तरल्लिका—भरतस्यप्रिया
6. Gerard de Narbon = सुसिद्धिः—कश्चिद्भिषक्—तरल्लिकायाःपिता.
7. Paris = परेशनगरी.
8. Florence = फलारण्यपुरम्.
9. Diana = नितम्बवती.

# ॥ सुखान्तं सर्वं सुखम् ॥
## (ALL'S WELL 1HAT ENDS WELL)

आसीत्पुरा भरतो नाम कश्चित्सामन्तो राजिलदेशे। तस्मिन् राज्यधूर्वहनानर्हबाल्यवयसि स्थिते तस्य पिता देवभूय गतः। धुर्यधार्यं राज्यभारं दम्ये आत्मन्यारोप्य मंत्रिणां सहायेन कथंचित्प्रजाः पालयति स्म। तत्पितृसखस्तत्काले स्वतन्त्रप्रभुत्वविराजितः कुलूताधिपतिश्चित्रवर्मा स्वामित्वस्य वृद्धस्य राज्ञस्सुशीलस्य निधनवार्तां श्रुत्वा तत्प्रीत्या तत्पुत्रेपि प्रसादसुमुखस्तं बालं भरतं स्वसंरक्षणे निधाय वर्धयितुं मनसि संकल्प्य स्वनगरं प्रति तमानेतुं निजामात्येष्वन्यतम वृद्धं लापकनामानं प्रेषयामास।

अथ मातृगृहे वर्तमानं तं भरतं चित्रवर्मणो निकटं निनीषुराजागाम मंत्री लापकः। तत्काले वर्तमानानां सर्वेषां राज्ञां चित्रवर्मणो निरंकुशप्रभुत्वान्न कोपि तस्य शासनमतिवर्तितुं प्रबभूव। कदाचिदननुभूतपुत्रविरहदुःखा भरतमाता विमलापुत्रस्य विदेशगमनेन नवीभूतनाथव्यापत्तिशोका भर्तुस्सद्यो मरणादिव दुःखार्तापि राजशासनस्यानुल्लघनीयतया एकं दिवसमपि गृहे तमासयितुमशक्नुवन्ती सद्य एव तस्य सर्वं प्रास्थानिकं सज्जीकर्तुं भृत्यानादिदेश। भर्तृवियोगशोकेनाकस्मिक-

पुत्रप्रवासेन च द्विगुणीकृतशोकभारं वहन्तीं भरतजननीं तत्कालोचितदुःखोपशामकैरालापैः परिसांत्वयन् लापकोराजवल्लभसुलभां मृदुमधुरवचःपरिपाटीमाटीकमान इदमवोचत् । आर्ये ! अस्मन्महाराजश्चित्रवर्मा सर्वेषु दयार्द्रहृदयः । विपन्नानुकम्पी । गुणपक्षपाती । धार्मिकश्च । निजापत्यमिव रक्षेत्तव पुत्रं।स इदानीमस्माकमभाग्यतया केनचिद्व्याधिना पीड्यते । स क्षेत्रियव्याधिरिति भिषग्वरैर्निरूपितः । राज्ञश्चित्रवर्मणोऽनुल्लाघस्थितिं तन्मुखाच्छ्रुत्वा भरतमाता विमला भृशं व्यथिता सती तदानीमात्मानं वरिवस्यमानायाः कस्याश्चित्कुलकुमार्यास्तरङ्गिकाभिधानायाः पिता सुसिद्धिर्यद्यजीष्यत् तर्हि भवतश्चित्रवर्मण उपतापं द्रुतं प्रत्यकरिष्यदिति मनसि चिन्तयामास। ततस्तरङ्गिकां लापकाय दर्शयन्ती तत्संबंधिनीं कथां विस्तरतः कथयित्वा सुगृहीतनामधेयस्य सुसिद्धेरगदंकारप्रकांडस्यैषा दुहिता । निर्याणसमयेऽस्याः पिता "एषा भवत्या पुत्रीनिर्विशेषं प्रीत्या द्रष्टव्या" इत्युक्त्वा मह्यमर्पितवान् । अधुना मया संरक्ष्यते । इयं सुशीला गुणवती सर्वं सद्गुणजातं पितुरधिगतवतीत्यवदत् । एवं विमलया तरङ्गिकागुणेष्वभिवर्णितेषु तस्याः पार्श्वे निषण्णा तरङ्गिका त्रुटितहारलता गलितमुक्ताफलभ्रांतिं जनयद्भिः स्थूलाश्रुबिंदुभिर्भुवं समानदुःखामिव कुर्वन्ती पितरं संस्मृत्य मुक्तकंठं रुरोद । विमलया निवार्यमाणा रोदनाद्विरराम ।

अथ पादयोः पतितमापृच्छमानमर्भकमुत्थाप्य समाश्लिष्य मूर्ध्न्युपाघ्रायाशिषः प्रयुंजाना शोकातिरेकसंस्तम्भितवाग्वृत्तिः लापकस्य हस्ते तं समर्प्य इत्थमवादीत्। "आर्य! अकृतविद्यः क्षीरकण्ठः खल्वयं डिम्भकः अनभिज्ञो गहनस्य राजसेवाधर्मस्य तदिमं सम्यक् शिक्षयेति।" भरतस्तरङ्गिकामालोक्य "सुखमेधि त्यज शोकं। यथाममाम्बा मत्प्रवासदौर्मनस्येन न पीड्येत तदा तां समाश्वासयन्ती भव"। इत्यब्रवीत्। सापि तस्मिंश्चिरान्निभृतस्नेहबद्धं मनो धारयन्ती तद्विरहमसहिष्णुः पितृमरणदिवस इव विललाप। प्रेष्ठस्य पितुराकारविशेषमपि विस्मृत्य विगलितवेद्यान्तरं भरतमेव चिंतयन्ती तन्मयीबभूव। कुलूतदेशवासिभ्यस्सर्वेभ्योपि भरतमुत्कृष्टकुलप्रसूतंज्ञात्वा तस्मिन्गाढानुरागमुवाह।न तरङ्गिकापितरौ विशिष्टवंशोत्पन्नौ। मुहुर्मुहुस्तत्कुलशीलवयोरूपगुणाकृष्टचित्ता दुर्लभवस्तुप्रार्थनाकदर्थितं मनो विनिदन्ती कथं तादृशं भागधेयं मम मन्दभागिन्या इदि मेने। तस्य विरहात्साअनल्पाश्रुपूरितेक्षणा आधिकलुषीकृतचित्ताऽनवरतं तमेव दध्यौ। भरतस्य प्राप्तौ निराशा सवृत्ता। चित्रफलके तं लिखित्वा कुवलयदलदीर्घलोचनं तन्मुखं अपहासितमृगराजमध्य तन्मध्यं धिकृत कंदर्पशरासनं तद्भ्रूयुगं विजिताङ्गिकुलद्युति तत्केशपाशं चानिमेषदृष्ट्या निदध्यौ।

तरङ्गिकायाः पिता सुसिद्धिर्बाल्यात्प्रभृति तीर्थाद्भिष-क्छास्त्रमधीत्य रोगनिदाने रोगप्रतीकारे च प्रभूतानुभवं लब्ध्वा स्वयं परिक्लृप्तान्यौषधानि विहाय मरणसमये स्वदुहित्रे न किमपि ददौ। तेष्वौषधेषु लापकोक्तस्य चित्रवर्मणो व्याधेर-प्यमोघप्रतीकार इति सर्वैरगदंकारैरभिनंदितं किंचिदौषधमा-सीत्। लापकेन वर्ण्यमाना चित्रवर्मणो रुजां श्रुत्वा तरङ्गिका मुहूर्तं विचित्य तद्भेषजं स्मृत्वा अस्य प्रयोगेण राज्ञ आमयं निवारयितुं बद्धाशा कुलूतराजधानीं परेशनगरीं गतुमभिल-लाष। सर्वैराजभिषग्भिरचिकित्स्योयमिति निर्धारितं रोगं प्रतिकर्तुमेषा अशिक्षिता बाला शक्नुयादिति केन संभाव्यते।

यदि सा अनुज्ञायेत चिकित्सितुं कार्यसिद्धौ तस्या दृढप्रत्यय आसीत्। तस्मिन्काले वर्तमानानां सर्वेषां भिषजां मौलिभूतस्य स्वपितुरपि कीर्तिमंतरिक्षगतसर्वग्रहशुभवीक्षणो-त्तेजितस्यास्यौषधस्य प्रभावेणातिशेतुं राजिलदेशप्रभोर्भरतस्य राजलक्ष्म्यास्सपत्नीभवितुं च शक्नुयामिति मेने।

परेशनगरीं गतस्य भरतस्य नातिदीर्घे काले गते एक-दा कश्चिद्भृत्य आगत्य विमलामिदमाह। देवि! एकान्ते स्थित्वा तरङ्गिका आत्मगतं यत्किंचिद्भाषमाणाद्य मया दृष्टा। श्रुतेभ्यो वचोभ्यस्सा भरतानुरक्तहृदयेति ज्ञायते। तद्दर्शनाय परेशनगरीं गंतुकामेव। अथ सा विमला तरङ्गिकामानयेति

तद्भृत्यमादिदेश । भृत्यमुखाच्छ्रुतया तरङ्गिकाकथया विमला स्ववल्लभे स्वानुरागोत्पत्तिदशां स्मृत्वा मनसीत्थमचिंतयत् । "मम यौवने एवमेवाहमुत्कंठिता आसम् । कामो नाम यौवनकुसुमस्य कंटकं । यौवने प्रायशस्सर्वोजनस्स्खलितानि कुर्वते । तत्काले कामो दोष इति नाज्ञायि । एवं तस्यां स्वयौवनकृतदोषाश्चितयंत्या प्रविवेश तरङ्गिका । ता दृष्ट्वा विमला प्राह तरङ्गिके जानास्यहं ते माता ।

तरङ्गिका—अंब ! त्वं मे पूज्या स्वामिनी ।

विमला—त्वं मे दुहितासि । अहं ते माता कि मद्वच-नेभ्यश्शकितेव वेपमाना विवर्णा भवसि ।

तरङ्गिका—आत्मगतं किज्ञातोनया मदनुरागो भरते । इति भीता तरङ्गिका ता पुनराह । आर्ये क्षमस्व मा न त्वमंबा मे । न राजिलदेशाधिपो मे भ्राता ।

विमला—तरङ्गिके तथापि त्वमसि मे धर्मपुत्री । मातृदुहितृशब्दौ त्वामाकुलयतः तरङ्गिके कि मत्पुत्रेऽनुरक्तासि ।

तरङ्गिका—सभयं देवि क्षमस्व मां । विमला पुनः पुनस्तामन्वयुक्त ।

तरङ्गिका—आर्ये कि न ते प्रीतिस्तस्मिन् ।

विमला—तरङ्गिके । मा संवृणु भावबन्धं । सर्वैर्विदित-एव सः । ततस्तरङ्गिका विमलायाः पादयोः पतित्वा स्वानुराग-

वृत्तिमभ्युपजगाम। ह्रीभयाभ्यामाक्रान्ता तां क्षन्तुं प्रार्थितवती। आदित्यविषयकज्ञानं विना आदित्योपासक इव अधमकुलजाहं कुलोत्तुंगं त्वत्पुत्रं कामयमाना जिह्रेमि। सतुमदनुरागंनजानातीति परस्परभागधेयवैषम्यप्रतिपादकैर्वचोभिः प्रत्यषेधत्।

विमला—तरङ्गिके परेशनगरीं गंतुमभिलाषस्ते मनसि वर्तत इति मया श्रुतं कि तत्सत्यम्।

तरङ्गिका—लापकेनोक्तं राज्ञो व्याधिं श्रुत्वा तत्र गतुं मे मनस्साभिलाषं।

विमला—किं निमित्तं तव परेशनगरगमनं। सत्यं ब्रूहि।

तरङ्गिका—सप्रश्रयं त्वत्सूनोरस्मत्स्वामिन उपदेशेन राज्ञश्चित्रवर्मणो व्याधि प्रतिकर्तुं तत्र गंतुमिच्छामि। अन्यथा परेशपुरी। राजा चित्रवर्मा। औषधप्रयोगश्चेत्येतत्सर्वं मम बुद्धिं कथमारोहेत्। ततो विमला तरङ्गिकयाभ्युपेतं सर्वं श्रुत्वा अनुमतिनिषेधान्यतरवचनमप्यनुक्त्वा सुसिद्धेरौषधस्य पटिष्ठता ज्ञातवती "मरणसमये त्वत्पित्रा दत्ते नागदेन चित्रवर्मणो व्याधि चिकित्सितुं किं शक्नोषीति तरङ्गिकां पुनः पुनरन्वयुंक्त। पितृमरणसमये तद्विषये आत्मना कृता प्रतिज्ञां स्मृत्वा विमलापरेशनगरं गंतुं तरङ्गिकायै अनुज्ञामदात्। पुष्कलं पाथेयं विश्वास्याननुरूपांश्चानुचरांश्च दयया तस्यै ददौ।

"गम्यतां विजयायेति" विमलादेव्या प्रयुक्ताशीस्तरङ्गिका परेशनगरीं प्रतस्थे। कामपरवशया अचतुरयाऽनया कन्यया चिंतितोऽयमुपायो राज्ञः प्राणान्संरक्षितुं तस्या भाग्यानि संवर्धयितुं समर्थ इति विमला ज्ञातुं न शशाक।

किन्त्वीश्वरस्य संकल्पः अघटितघटनापटुः खलु। अथ तरङ्गिका परेशनगरीं प्राप्य चिरन्तनसुहृदो राजवल्लभस्य लापकस्य पुरुषकारेण राजसान्निधिमगात्। निजौषधमाहात्म्यं तस्य पुरत उपवर्ण्य "इदमौषधं महाराजेनावश्य पातव्यम्। द्वित्रदिनाभ्यन्तरे भवच्छरीरगतं व्याधिं निरन्वयं विनाशयिष्यतीति। देवपादाभ्यां शपे। इत्यवादीत्। एवं स शपथमुक्तोपि स राजा औषधे तस्यावचसि च विश्वासाभावात् तदौषधं पातुं वा तस्य गुणं परीक्षितुं वा नाङ्गीचकार। तदा तरङ्गिका राजानं सधैर्यमिदमुवाच। "महाराज! अहं तावत् चिकित्सातंत्रे जगत्प्रथितयशसः भिषक्छिखामणेस्सुसिद्धेर्दुहिता तरङ्गिका नाम। मम पितुर्निखिलचातुर्यसारसर्वस्वेन घटितमिदं महार्घमन्यत्रालभ्यमौषधं पातव्यं। यदीदं दिनद्वयाभ्यंतरे भवतः समग्रारोग्यस्थितिं संपादयितुं मोघीभवति तर्हि अहं शीर्षच्छेद्या भविष्यामीति। अथ राजा कथं चित्तदौषध शक्तिपरीक्षणायानुमेने। नृपो दिनयुगान्ते निरामयता न लभते चेत्तरङ्गिका व्यापादनीया। यदि तीर्णप्रतिज्ञा भवति स्वपुत्रान्विहाय कुन्तलदेश-

स्थितानामभिरूपाणामशेषाणां यूनां मध्येयं सा गृणीते तं तस्याः पतिं कर्तुं राजा प्रतिशुश्राव । पितृसंकलितौषधप्रभावस्तरङ्गिकां न भग्नमनोरथां चकार । असमाप्ते दिनद्वये राजा नीरोगस्संवृत्तः । अथ राजा भृशं संतुष्टान्तरंगः स्वराष्ट्रे स्थितान् सर्वांस्तरुणराज कुमारान्स्वभवने समागमय्य तेष्वात्मानुरूपमेकं युवानं वरीतुं तरङ्गिकां समादिक्षत् । सापि पतिं वरा तत्र समवेतान्सर्वान् राजपुत्रान्परितो विलोक्य तत्संघे भरतं प्रेक्ष्य तदभिमुखीभूत्वा "अयमेव जनो मेऽनुरूपो दयित इति तत्कंठे वरणस्रजमासज्य शिरसि घटिताञ्जलिरिदमुवाच । "प्रभो अहं त्वां पतिं वृणे" इति वक्तुं न प्रधृष्यामि । किन्त्वितः परं ममात्मात्मीयौ भवदधीनं कर्तुं मेऽभिलाष इत्येव विज्ञापयामि ।

राजा तथा चेत् भरत ! गृहाणेमाम् । इयं ते कलत्रम् । आत्मना दत्तां राज्ञापारितोषिकीकृतां तां स्वीकर्तुं भरतस्संशयान इदमवादीत् । स्वामिन् ! इयं कस्यचिद्दुर्गतस्य भिषक्पाशस्य तनया । मत्पित्रा पोषिता इदानीं मज्जननीं किंकुर्वाणा मद्गृहे वर्तते । कथमस्याः पाणिं ग्रहीष्याम्यनर्हायाः । तरङ्गिका भरतस्य प्रत्यादेशपरुषाणि वचांसि निशम्य राजानं प्राह । महाराज स्वस्ति भवते । भवानुल्लाघ इत्यहं परितुष्टास्मि । राजा तु भरतस्य तरङ्गिकाप्रत्याख्यानं न ममृषे । यतस्स्वसामन्ताना विवाहे कलत्राघटनं कुंतलदेशाधीश्वराणामधि-

कारेष्वेकतमः । तस्मिन दिनएव भरततरङ्गिकयोर्विवाहस्सम-वर्तत । अयं विवाहो बलात्कृतत्वाद्भरतस्यासुखप्रदो बभूव । चिरकांक्षितं भर्तारं बहुश्रमेण लब्धवती तरङ्गिका भर्तृवाल्लभ्य-मलभमाना भग्नमनोरथा बभूव । तस्या भरतस्यानुरागमुत्पा-दयितुं न कुतलेशः प्रबभूव । विवाहानंतरं नृपास्थानीं परित्य-ज्यान्यत्र गन्तुमना भरतो राज्ञोऽनुज्ञामधिगन्तुं तरङ्गिकामचो-दयत् । यथाभिलषितं देशं गंतु राज्ञा तावनुमतौ । अथ तर-ङ्गिका वीक्ष्य भरतस्सनिर्वेदमिद बभाषे । अयि ! बलात्कृतोऽ यमुद्वाहो न मे रोचते चित्तास्थैर्यं च जनयति । तस्मादितः परं मया निषेविष्यमाणः पन्थाः मा ते मनसि कोपं जनयतु । परित्यक्तुमिच्छोस्तस्याशयं ज्ञात्वा सा वराकी दुःखसतप्ता संजा-ता । ता स्वमातृपार्श्वं गंतुं न्ययुंक्त । दयारहितस्य तस्येममा-देशं श्रुत्वा तरङ्गिका विलपन्ती भरतमाह । "आर्यपुत्र ! भवदाज्ञाविरुद्धं न किमपि वक्तुं शक्नोमि । सर्वदाहं तव पाद-पद्मोपजीविनी । विधेयास्मि भवत्किंकरी । किंतु मम भाग-धेयानि दुष्टग्रहबलेनान्यथाकृतानि । एवं सप्रश्रयं सानुनयंत-योक्तान्यक्षराणि तस्य चेतसि पदं न चक्रुः । स तस्यां दयालेशमपि नादर्शयत् ।प्रस्थानसमये वक्तुमुचितमुपचारवचन-मप्यनुक्त्वा परित्यज्य गतः ।

अथ तरङ्गिका पुनर्विमलानिकटमाजगाम। परेशनगरीप्रस्थानस्य प्रधानप्रयोजनं साधितवती। राज्ञश्चित्रवर्मणः प्राणान् ररक्ष। राजिलदेशप्रभोर्भरतस्य पाणिं जग्राह। तथापि भृशं विषण्णा असमाहितचित्ता श्वश्रूनिलयं प्रतिनिववृते। अत्रांतरे भरतः प्रियायै लेखं प्रेषयामास। तरङ्गिका तु तल्लेखं दृष्ट्वा विदीर्णहृदया संजाता। विमला तां वीक्ष्य स्वपुत्रेण सानुरागं वृतामिव कुलीनामिव सादरं गृहे निवेश्य पोषयंती समाश्वासनपरैर्वचोभिरनुनिनाय। किंतु विवाहदिवस एव विरक्तस्य नृशंसस्य भरतस्य परित्यागेन व्रणितहृदयायास्तस्यामनस्स्वास्थ्य मापादयितुं सा नाशक्नोत्। प्रायशो लोके नारीणां भर्तृपरित्यागदुःखादधिकतरदुःखस्याभावात् विमलायास्सर्वप्रयत्नेनाप्यनुपजातहृदयनिर्वृतिस्तरङ्गिका इदमवोचत्। आर्ये! गतो मे जीवितेशः। न कदाचिदप्यत्रायाति। ततस्तस्य लेखमुद्राट्य एवं वाचयतिस्म। ममाङ्गुलीतोऽङ्गुलीयकमविमोच्यमधिगंतुं शक्नोषि यदि तदा मां भर्तारं व्यपदिश किंतु तदेतिशब्दस्थाने "न कदापीत्यक्षराणि निवेशयामि" अहो हृदयमर्मच्छेदकानि वचनानीति।

विमला—वत्से! समाश्वसिहि समाश्वसिहि। त्वमेव मे वत्सा भरताच्छतगुणं वरिष्ठं भर्तारमर्हसि। इति दयमानमनाः सांत्ववचनैस्स्नुषायादुःखोपशांतिं कर्तुं प्रयतमानापि

विफलोद्यमा बभूव। तरङ्गिका भर्तृप्रेषितां पत्रिकामसकृत्पठन्ती तत्र "यावज्जीवति मे कलत्रं तावत्कुंतलैः किं कार्यं ममे"ति वाक्यं मुहुर्मुहुर्दृष्ट्वा सोरस्ताडं परिदिदेव। "किमित्थमेव लिखितं वास्यां पत्रिकायाम्" इति विमला तरङ्गिकां पप्रच्छ।

तरङ्गिका—आर्ये! ओमित्येवोत्तरं तपस्विनी तरङ्गिका ददाति।

अथापरेद्युस्तरङ्गिका गृहे ना दृश्यत। आकस्मिकादर्शने हेतुं विवृण्वती तरङ्गिका गृहपरित्यागानन्तरं विमलायै लेखं विससर्ज। यस्मिन् सा एवं न्यवेदयत्। मन्दभागिन्या मम हेतो-रार्यपुत्रः स्वदेशं स्वजनं परित्यज्य दीर्घप्रवासक्लेशमप्यगणयित्वा देशांतरं गतः। तदहमपि तदपराधं प्रमार्ष्टुं कात्यायनीभूत्वा काषायवासिनीयात्राप्रसंगेन विदेशं प्रस्थिता। द्वेषपात्रं ते जाया स्वगृहं परित्यज्य गता। न कदापि निवर्तते। इति त्वत्सूनुर्विज्ञापयितव्यः इति।

अथ परेशनगरीं विहाय गतो भरतः फलारण्यपुरं प्राप। तत्र तद्देशाधिपतेस्सैन्येऽधिकारिपदमलभत। निजभुजदंड-विक्रमेण संग्रामेषु परमुत्कर्षं लेभे। "त्वज्जायागृहान्परित्यज्य देशान्तरं गता। नेतः परं तत्सान्निध्यपीडा ते न भवती"ति स्वमात्रा विमलया प्रेषिता वार्तां श्रुत्वा भरतस्स्वदेशाभिमुखः प्रतस्थे। तदा तरङ्गिकापि यात्रिकवेषोपलक्षिता तन्नगरमाजगाम।

गुरुतीर्थसेवार्थं गच्छतां सर्वेषां तीर्थयात्रापराणां फलारण्यपुरं मार्गमध्ये स्थितत्वादवश्यं गंतव्यं। तत्रत्या काचिद्धार्मिकी विश्वस्ता तीर्थाटनं कुर्वतामन्नपानादिदानेन सत्करोतीति वार्तां श्रुत्वा तरङ्गिकापि तत्र तां द्रष्टुं गता। सा्येना दृष्ट्वा सादरं स्वागतं व्याहृत्य सुप्रसिद्धे तन्नगरे यद्यदपूर्वं रमणीयं वस्तु तत्तद्दर्शनेन मनो विनोदयितुं मया सह शकटमारुह्यागम्यतामिति तरङ्गिकां निरबध्नात्। राज्ञस्सैन्यावासमपि ते द्रष्टुमिच्छा यदि तत्रापि त्वां नेष्यामि। तत्र त्वद्देशीयः कश्चिद्भरताह्वयो भुजदंडविक्रांत्या संग्रामेषु लब्धकीर्ती राज्ञो बहुमानपात्र द्रक्ष्यसीत्यबोचत्। तच्छ्रुत्वा तरङ्गिका निजदयितावलोकनाशातरङ्गितहृदया तामनुगन्तुं मनो दधे। या चानुगता राजकटकं प्राप्य पुनर्भर्तृमुखपंकजावलोकनसुखमनुभूय भृशं जहर्ष रुरोद च।

विश्वस्ता। किं नासौ चारुदर्शनः। तरङ्गिका। सुष्ठु रोचते मे अस्य रूपम्।

तयोः पथि गच्छंत्योस्सा वाचाटा विश्वस्ता भरतसंबंधिनीमेव कथामकथयत्। तस्य विवाहप्रकारः भार्यापरित्यागः तया सह संबंधं परिहर्तुं सैन्यप्रवेशश्चेति सर्वं वृत्तातं तरङ्गिकायै आचख्यौ। सा तत्सर्वं वर्ण्यमानं स्वदुर्जातं क्षांत्या सावधानतया चाशृणोत्। अथ सा विश्वस्ता तरङ्गिकावृत्तांतकथनं परिसमाप्य

भरतकथा प्रस्तुवंती अंतरा कथातरमारभत । तत्कथान्तरश्रवणेन तरलिका गाढमाक्षिप्तचेतास्संजाता । यतो भरतस्तदुहितर्यनुरक्तोऽभूदिति वार्ता श्रुत्वा शोकविदीर्णहृदयाऽभूत् ।

भरतो राज्ञा बलात्कारेण कृतं विवाहमनिच्छन्नपि नानुदीर्णकामवृत्तिः । यतः फलारण्यपुरे वाहिनीपतिपदवीग्रहणात्प्रभृति तरलिकातिथ्यकारिण्यास्तनयायां नितंबवत्यभिधानायां बद्धभाव आसीत् ।

प्रतिनिशं तद्रूपलावण्यवर्णनगर्भाणि गीतानि गायन् तन्निलयं गत्वा स्वमनोरथपूरणाय प्रार्थया चक्रे । सर्वास्मिन्गृहजने प्रसुप्ते भरत एकान्ते तां द्रष्टुमभिललाष। अपि त्वेषा नितबवती भरतं कृतदारपरिग्रहं ज्ञात्वा तस्य प्रार्थनां प्रत्याचख्यौ । यत इदानीं विधिवक्रतया निस्स्वयाऽपि दूरदर्शिन्या विवेकिन्या कुलीनया स्वमात्रा सम्यक् शिक्षिता संवर्धिता च । सा विश्वस्ता स्वपुत्रिकाया इमां गुणसम्पदमत्यर्थं श्लाघमाना एतद्वृत्तांतं तरलिकामब्रूत ।

• • भरतस्तस्या विधवायाः पुत्र्यामनुरक्त इत्याकर्ण्य भृशं दुःखितापि एतद्वृत्तान्तश्रवणेन पर्युत्सुकमानसा तरलिका प्रथमप्रयत्नवैफल्येनाभग्नोत्साहा सती पराङ्मुखं स्वदयितं पुनरधिगंतुमेकमुपायमालुलोचे । सैवाहं दैवोपहता भर्त्रा परित्यक्ता तरलिकानाम्नीत्यात्मानं तस्यै न्यवेदयत । नितम्बवतीवेषं धृत्वा भर्तारमुपेत्य तेन संभाषितुं वाञ्छति मे मनः । एतत्कार्यनिर्वहणायानुज्ञायतामयं जन इति ते उभे प्रार्थितवती । पत्युरंगुलीयकाधिगम एव समागमस्य प्रधानं प्रयोजनमित्य-

बोधयत् । यतस्तदंगुलीयकं यदि तयाधिगम्येत तदा तां भार्यात्वेन स्वीकरिष्यामीति भरतेन पूर्वं प्रतिश्रुतमासीत् ।

एतत्कार्यं साधयितुमावां बद्धपरिकरे इति तरलिकायै नितंबवती तन्माता च प्रत्यजानीताम् । ताभ्यां किंचिद्धनं दास्यामीति तरलिका प्रतिजज्ञे । तद्दुरवस्थावलोकनेन ते जातानुकंपे तस्मिन् दिवसे तरलिका मृतेति वार्तां सर्वतस्सचारयामासतुः भरतोपि प्रथमकलत्रनिधनवार्तां श्रुत्वा "इतः परं कलत्रांतरपरिग्रहाय निश्शंकोस्मीति" मन्वानो नितंबवतीमुद्वोढुं निरचिनोत् । अस्यामेव निशायां मत्सविधमागंतव्यमिति नितंबवती भरताय वार्तां प्रजिघाय ।

अथ नीलकंठकठसच्छविभिस्तमोभिर्व्याप्ते जगति भरतो नितंबवती गृहं गत्वा तस्याश्शयनागारं प्रविश्य निगूढं स्थितः। ततो नितंबवतीवेषधारिणी तरलिका तत्र समुपास्थिता । नितंबवतीं बुद्ध्वा तेनोक्ता विविधा विस्रम्भालापाश्चित्राः कथाश्च तरलिकाश्रोत्रं मनश्च नितांतं समनन्दयन् । भरतस्तस्यां संजातप्रीतिः "प्रिये! नाहं तवान्यः नापि त्वं मम । सर्वदा त्वयि बद्धानुरागोऽस्मीत्यवोचत् । न कदापि त्वां परित्यजेयमिति प्रतिजज्ञे । तत्सर्वमात्मविषये मृषा भविष्यतीत्यमन्यत तरलिका ।सैवेयं मम पूर्वजाया तरलिकेति भरतो ज्ञातुं नाशक्नोत् । तस्याश्चातुर्यमपि न विवेद । वेद चेत्तस्यामेतादृशीमवज्ञां नाकरोदेव । अनुदिनसंदर्शनेन तस्यास्सौंदर्ये विस्मयो मंदतां भेजे । सा तस्य सान्निध्ये प्रत्यभिज्ञानभिया निरंतरं बद्धमौना सती तदाज्ञावचनेषु प्रत्युत्तराण्यददतीव भासमाना गाढानुराग पूर्वि-

का भक्ति दर्शयामास । तस्माद्धेतोस्ता तरङ्गिकेति ज्ञातुं न शशाक । तन्निशायां तरङ्गिकायाः प्रथमसमागमो भरतस्य मनसि दृढलग्नस्सन् तस्या भागधेयस्य पतिप्राप्तेस्तत्कृतोपायसिद्धेश्च मूलकारणमभूत् । "त्वमेव मे भार्या भवितुमर्हसीति" । यथा सशपथं भरतोऽवादीत्तथा सा नानाविधोपचारैर्वाङ्मधुरिम्णा तमरंजयत् । अङ्गुलीगतमंगुलीयकं प्रीति चिह्नतया दातुमयाचत । सोपि यथाभिलषितं तदंगुलीयकं तस्यै ददौ । सा पुना राज्ञा तस्यै पारितोषिकीकृतमन्यदंगुलीयकं तस्मै अदात् । ततस्सा महति प्रत्यूषे भरतमपसर्तुमादिदेश । मातृगृहाभिमुखस्सतस्मिन्नेव क्षणे संप्रतस्थे ।

स्वचिंतितकार्यस्य संपूर्णसिद्ध्यै सहायस्यावश्यापेक्षितत्वात्तया सह परेशनगरीमागंतु नितंबवतीं तन्मातरं च तरङ्गिका प्रार्थयत् । तेऽपुभे ताप्रार्थनामगीकृत्य तरङ्गिकामनुजग्मतुः । तासु तिसृषु परेशनगरीं प्राप्तासु राजा भरतमातर विमलां द्रष्टु राजिलदेशं प्रयात इत्यश्रावि वार्ता । ततस्तरङ्गिकाप्यतिजवेन राजानमन्वियाय । अद्यापि राजा पूर्णारोग्यमनुभवतिस्म । स्वोल्लाघत्वस्य हेतुभूताया तरङ्गिकाया तस्य कृतज्ञता तथारूढमूलाऽभवत् । यथा भरतमातरं विमलां दृष्ट्वा "आर्ये! तव स्नुषा महार्घं रत्नमिति विश्वसिहि वैधेयस्त्वत्तनयस्त्वबालिश्येन नष्टरत्नोऽभूत् । स राजा तरङ्गिकामरणवार्तां श्रुत्वा कुररीव विलपंतीं विमलां दृष्ट्वा प्राह "भद्रे सर्वं क्षातं विस्मृतं च मया ।" तत्र स्थितस्सत्स्वभावो वर्षिष्ठो लापकः । अवज्ञया विस्मृता तरङ्गिकेत्यसहमानोऽब्रवीत् । "अस्ति ममापि काचि-

द्विवक्षा । अत्र भवति महाराजे मातरि प्रियतमाया च भरतेनापराद्धम् । यतस्सर्वजनलोचनलोभनीयसौंदर्या निखिलजनश्रवणपेयवागमृता स्वगुणसंपदाकृष्टबंधुजनहृदया प्राणवल्लभा परित्यक्ता"। ततो राजा प्राह "साधु—मन्त्रिबृहस्पते ! साधु नष्टवस्तुनश्श्लाघास्मृति मधुरा करोति । तत्र स्थितं भरतंमत्सविधमानय" । सोपि राज्ञः सान्निधिमुपेत्य तरङ्गिकाविषये आत्मना कृतानपराधान् राज्ञे निवेद्य दुःखितोऽभूत् । राजा तु मृतं तत्पितरं श्लाघनीयचरिता तन्मातर विचिंत्य तस्य सर्वानपराधान् चक्षमे। पुनस्तस्मिन्प्रसादाभिमुखोऽभूत् । तरङ्गिकायै प्राभृती कृतामूर्मिका भरतस्यांगुल्यां दृष्ट्वा नृपः कोपोपरक्तमुखचंद्रो बभूव । महापदमापन्ना राज्ञे स्वयमिदं न प्रेषयामि चेन्न कदापीदमाभरणं परित्यजामि। हे लोकपाला भवंतस्सर्वेऽत्र साक्षिणो भवंत्विति तरङ्गिकायाः प्रमाणोक्ति राजा सस्मार । तरङ्गिकायै मया दत्तमिदमंगुलीयकं त्वया कथ लब्धमिति राज्ञा पृष्टो भरतः "कयाचिद्युवत्या गवाक्षाद्बहिर्विक्षिप्त मयाधिगतं, परिणयदिवसादारभ्य तरङ्गिकाया मुखं न कदापि मया दृष्टमित्यनुपपन्नमकथयत् राजा तरङ्गिकाया भरतस्याप्रीतिं ज्ञात्वा "नृशंसोयमिमा वराकींकदापि प्राणैर्वियोजयेत् इति भीतोस्मि न जाने किं प्रतिपत्तव्यमत्रेतिचिंतया दूये" इति वदन् राजा भरतं जीवग्राहं गृहीतुं भटानादिदेश । अत्रांतरे नितंबवती माला सह तत्रागत्य राज्ञ इत्थ व्यजिज्ञपत् "महाराज भरतो मां परिणेतुं प्रतिजज्ञे । तत्प्रतिज्ञा निर्वोढुमिदानीं स त्वया बलात्कर्तव्य

इति प्रार्थये इति" राज्ञा पृष्टो भरतः "न कदापि मया तथा प्रतिश्रुतम्" इति प्रत्याचख्यौ। ततो नितंबवती स्ववचनप्रामाण्य-समर्थनाय तरङ्गिकया दत्तामूर्मिका राज्ञेऽदर्शयत्। विवाहप्रति-ज्ञासमये आवा परस्परमंगुलीयविनिमयमकरवावेत्यवोचत "तया कथितस्याङ्गुलीयकाधिगमवृत्तांतस्य भरतकथितादत्यंत-भिन्नत्वात् तद्विषये संशयालू राजा तामपि गृहीतुं भृत्यानाज्ञप्त-वान् यदि तावुभौ अंगुलीयकाधिगमस्य तत्वं न प्रकाशयेता तदा व्यापादनीयौ इत्याज्ञापयामास। ततस्तदंगुलीयकस्य विक्रेतारं स्वर्णकारमानेतुं स्वजननी अनुज्ञायतामिति नितंबवती राजानं प्रार्थितवती। राजाप्यनुज्ञा ददौ। सा विधवा बहिर्गत्वा तस्मिन्नेव क्षणे तरङ्गिकया सहाजगाम ततो विमला स्वपुत्रस्योपस्थिता-मापद ज्ञात्वा बाष्पायमाणलोचना भार्याहननशंका सत्यं भव-तीति बिभ्यती तत्र जीवन्तीं तरङ्गिका दृष्ट्वा आनंदपरवशतया जडीबभूव। राजापि ता तरङ्गिकेति ज्ञात्वा आनंदातिशयेन सैवासौ तरङ्गिकेति प्रत्येतुमशक्नुवन्नाह "मयेदानीं पुरतो वीक्ष्य-माणेयं सत्यं भरतजाया तरङ्गिका"।

तरङ्गिका आत्मनोनभ्युपपन्नजायात्वं दर्शयन्ती "महा-राज! नासौ तरङ्गिका। अपितु तस्याः प्रतिबिंबभूता।

भरतः—महाराज! क्षमस्वोभावित्याचुक्रोश। भरत प्रति तरङ्गिका। "आर्यपुत्र! तस्या निशायामस्यावरवर्णिन्या

वेषं धृत्वा त्वया संगतवत्यां मयि भवानपूर्वदयातरंगितहृदय आसीः । पश्येमं त्वया लिखितं लेखम् । पुरा सविषादं पठितं लेखमिदानीं सोल्लासं वाचयंती इदमाह "मदंगुल्या इयमूर्मिका यदा त्वया लप्स्यते तदा भवसि मे जायेति खलु त्वयोक्तम् । तस्या रात्रौ त्वमेव मह्यं दत्तवानसीममंगुलीयकम् । किं न भवान्मदीयः । इदानीं त्वं द्विधा लब्धोसि" । भरतः । "तस्यां निशि मया सगतवती योषा अहमेवेति । यदि किंचित्प्रमाणं दर्शयसि तदा त्वं मे अनुरागास्पदं भवसि" ।

नेदं दुष्करं ममेत्युक्त्वा तरलिका मात्रा सह नितंबवतीमाहूय राजसन्निधिमानिन्ये । ततस्ते उभे सर्वमेतद्वृत्तांतमावाभ्यामध्यक्षीकृतमिति निगदंत्यौ राजानं व्यश्वासयताम् । एकाकिन्यास्तरलिकाया विपत्समये सहायमाचरितवत्या नितंबवत्यास्सद्वृत्तत्या परं मुदितो राजा केनचिद्रूपवताऽभिजातेन यूना तामपि योजयितुं प्रतिशुश्राव । राज्ञामुपकर्त्रीभ्यः प्रमदाभ्यो दातुमुचित उपहारोऽयमेवेति तरलिकायाश्चरित्रेण सूचितम् । एवं पितृदायः दैवानुकूल्येन तरलिकायै उचितं फलमदात् । इदानीं सा भरतस्य प्रियतमा राजिलदेशस्य राज्ञी चाभूत् ॥

सुखान्तं सर्वं सुखं समाप्तम् ॥

---

## Taming the Shrew—(चंडीदमनम्).



1. Katharine, the Shrew = चंडीधूमिनी—श्रीदासस्य ज्येष्ठपुत्रिका.

2 Baptista = श्रीदासः

3 Padua = सौराष्ट्रदेशः

4. Petruchio = पिशंचितः—धूमिन्याः पतिः.

5 Bianca = कांतिमती—श्रीदासस्य द्वितीयपुत्रिका.

6 Vincentio = विशाखः—कश्चिद्वृद्धः कांतिमत्याः श्वशुरः.

7. Lucentio = सुमित्रः—श्रीदासस्य द्वितीयजामाता

8 Hortensio = हारधनः—ऊढभार्योऽयमपरोवरः.

## ॥ चंडीदमनम् ॥

## TAMING THE SHREW

आसीत्पुरा सौराष्ट्रेषु श्रीदासो नाम कश्चिदिभ्यः। अभूत्तस्य ज्येष्ठादुहिता धूमिनी नाम। सा दुर्निग्रहचित्तवृत्तिः वामशीला। सुलभकोपा परुषभाषिणी। सा क्रोधनेति तद्देशे प्रसिद्धिमगमत्। तत एवैना तत्रत्येषु युवजनेषु न कोपि परिणेतुमुदसहिष्ट। तत्पिता यदि प्रथमं ज्येष्ठाया धूमिन्या वरलाभो भवेत्तर्हि कनिष्ठासुखेन भर्तारमधिगच्छेदित्याशयेन कनिष्ठा कान्तिमत्याख्यामुपयन्तुमागतान्बहून्वरान्विफलमनोरथांश्चक्रे। ततस्स सर्वजननिंदापात्रमभूत्। एव गच्छति कालेऽथकदाचित्पित्रंचितो नाम कश्चित्कुलपुत्रो युवा विवाहार्थं काचित्कन्यामन्वेष्टुं सौराष्ट्रानायातः। तत्रत्यजनेभ्यो धूमिन्या कोपशीलत्वादिदोषजातं श्रुत्वापीतरयुवान इव निरुत्साहतामनवलंब्य तस्या रूपसम्पदे धनसम्पदे च स्पृहयालुर्विवाहानन्तरं कर्कशत्वमपनीय शनैस्साधुवृत्ति शिक्षयित्वा विनीता कुर्यामित्यालोच्य तामुद्वोढुं निश्चिकाय। पित्रंचितइवनकोप्यन्यस्तस्या दमने भगीरथप्रयत्नान्कर्तुं समर्थ आसीत्। यतस्सोपि धूमिनीव चित्तसमुन्नतिमान्। रसज्ञो वैहासिकश्चतुरो ऋजुशीलः क्रोधाविष्टचित्तं प्रकृतिमानेतुं निपुणः। स्वयं न कदापि कोपक-

लुषीकृतस्वांतो भवति । कार्यवशाद्यदाकदापि कृत्रिमकोपं वहति स्वारोपितमनोविकृति चिन्तयित्वा आत्मानमात्मनैवोपहसति । धूमिनीं विवाह्य तां वशीकर्तुं साधनान्तराभावात्ततोपि प्रचंडतराकारमुदवहत् ।

एतादृशः पित्रंचितो धूमिन्या रूपलावण्यादिक जने-भ्यश्श्रुत्वा तां पाणिगृहीतीं कर्तुं विरोधननगरीतस्समागतोस्मि । "भवत्पुत्रिका द्रष्टुमनुज्ञा मे देही"ति तत्पितरं ययाचे । स तु तां भर्त्रा योजयितुमिच्छन्नपि पित्रंचितस्य प्रार्थनां नाभ्युपगच्छेदिति संदिदेह । यतस्तस्या वक्रस्वभावस्सार्वजनीन एव । एकदा तस्यास्संगीतोपाध्यायो "मच्छिष्या धूमिनी विस्वरं जगाविति मयोक्ते वीणामादाय मा तताडेति पितृचितमकथयत् । तदुदन्तं श्रुत्वा तमुपाध्यायं प्राह । अहो अतिधीरा त्वच्छिष्या । अतएव तां परिणेतुं मे निर्बंधः । मुहूर्तं तया विस्रब्धमालपितुमिच्छामीति । अथ पित्रंचितस्तज्जनकमुद्दिश्य "आर्य ! अहं द्रुततरं स्वस्थानं गंतुमिच्छामि । त्वद्दुहितुरनुकूलमुत्तरं लब्धुं त्वरते मे मनः । प्रतिदिनमत्रागंतुं नाहं शक्नुयाम् तर्हि सकृत्त्वत्पुत्रिकां द्रष्टुं तामत्राकारय । अपि जानासि मे पितरं सइदानीं मृतः । सर्वस्यापि तदीयविभवस्याहमेव स्वामी । यद्यहं त्वत्तनूजां परिणेष्यामि कियद्यौतकं तस्यै दातुं प्रभवसी"त्यवदत् ॥

ततश्श्रीदासस्स्वमरणसमये विंशतिसहस्रनिष्कान्निज - राज्यस्यार्धभागं च दातुमन्वमन्यत । कियद्यौतकं दास्यसीति वचनमकामुकोचितमित्यमंस्त । ततश्श्रीदासः "पित्रंचित इति काश्चिद्युवा त्वां वरीतुमागत इति" पुत्रिकायै निवेदयितुं तत्सविधं गतः ॥

अत्रांतरे पित्रंचितोमनस्येवमचिंतयत् । "केन प्रकारेण प्रार्थयितव्या सा । किंवा ब्रुवे तस्या अग्रतः । यदि सा अत्राग-च्छेत्तदा सप्रगल्भं मम भावं दर्शयिष्यामि । यदि परुषवचनै-र्मामधिक्षिपति तदा अहो अवधीरितविपंचीकलनिस्वनस्ते कंठध्वनिरिति ब्रूयाम् । यदि मयि भ्रुकुटीं बध्नाति तदा शरच्चंद्रमरीचिविकासितनीलोत्पलसदृशी ते दृष्टिरिति वदिष्यामि । मा वीक्ष्य यदि जोषमास्ते तदा तस्या वावदूकता स्तोष्यामि । यदि सा मामपसरेति वक्ष्यति तदाहं क्षणमवस्थातुं प्रार्थितइव तुष्टस्सनं तामभिनन्दामि" । इत्येवं चिंतयति तस्मिन् ततो नेपथ्याविराजमाना भर्तृदारिका धूमिनी तत्रागता । तामवलोक्य पित्रंचितस्सबहुमानमाह । धूमिनि ! स्वागतं भवत्यै । धूमिनी एतत्सभाजनं नाभिनंदंती साक्षेपमाह । जना मा धूमिनीति व्यवहरंति । एतन्मृषोद्यम् । जनास्त्वां चंडीति वदंति । न मेऽत्र विश्वासः । प्रतिपुरं स्तूयमानं ते सच्चरित श्रुत्वा त्वामु-पयन्तुमागतोस्मि ॥

अथ तयोर्विचित्राः क्रोधशांतरससंमिश्रितास्सलापाः प्रावर्तन्त । सा स्वार्जितां चंडीत्वख्यातिं परुषवाक्यैस्तस्य पुरतः प्रकटीचकार । सतु तस्या वाङ्मधुरिमाणमेवाधिकतर तुष्टाव । अंते तत्रागच्छंतं तत्पितरमवलोक्य कार्यनिष्पादनत्वरया पित्रंचित एवमाह । प्रिये धूमिनि ! इतः परमस्माद्व्यर्थसम्भाषणाद्विरमाव । त्वत्पिता त्वा मह्यं दातुमन्वमंस्त । यौतकमपि ते दातुं निरचिनोत् । किं त्वमिच्छसि वा न वा मां परिणेतुम् । इदानीं श्रीदासः प्रविष्टः । तं दृष्ट्वा पित्रंचितः प्राह । आर्य ! त्वत्कुमारी मयि दयावती । अचिरादेव मम पत्नी भवितुं प्रत्यश्रृणोत् ।

धूमिनी तद्वचनं श्रुत्वा भृशं क्रुद्धा "अद्यैव तं वरं शूलाग्रमारोपितं पश्येयम् । तादृशायोन्मत्तायास्मै पिता मा मा ददातु" इत्युच्चैरारटन्ती तं पित्रंचितं निरभर्त्सयत् । न तस्या वचांसि गणनीयानीति तज्जनकमुक्त्वा आर्य ! श्रीदास ! तव पुत्री मां विवोढुमनिच्छन्तीव बहिर्दृश्यमानापि अंतर्मध्येव बद्धभावा पाणिग्रहणाय सोत्कंठा चेति वदन् तामुद्दिश्य । प्रिये ! देहि मे त्वत्करपंकजस्पर्शं । विवाहमहोत्सवे तव धार्याणि महार्हाणि दुकूलवासांसि भूषणानि क्रेतुमद्यैवासन्ननगरीं गमिष्यामि । बंधुजना आमंत्रयितुं पितरं बोधय । यत्ते रोचते तत्सर्वमहमानेष्यामि । सकृच्चुम्बनदानेन मां कृतार्थय ।

आगामिनि शुक्लचतुर्दशीदिनेऽस्मत्परिणयो भविष्यतीत्युक्त्वा स्थलान्तरं गतः ।

अथ निर्दिष्टविवाहदिवसे समागते विवाहायावश्यक-सामग्री सर्वा सज्जीकृता । निमंत्रिता बान्धवाश्चागत्य वरागमनं प्रतिपालयंतोऽतिष्ठन । एव स्थिते धूमिन्यत्रागत्य "एतत्सर्वं पित्रं चितो मत्परिहासायाकरोदिति रोदितुमारेभे । अथाजगाम पित्रंचितः । किंतु तेन वध्वै दातु प्रतिज्ञातं वस्त्रभूषणादिक नानीतं । सोपि वरार्हवेषेण नालंकृतः । चिकीर्पितगुरुकार्ये अश्रद्वान इव मलिनचीवरखंडपरिधानो ददृशे । तथैव तद-नुचरोपि । तयोर्वाहावप्यसंगतवेषोपेतौ । आप्तैर्बंधुजनैश्च बोधि-तोपि पित्रंचितः परिच्छदपरिवर्तन कर्तु नैच्छन् । धूमिनीमहं परिणयामि । नतु वसनानी ति जगाद । वेपपरिवर्तने तेन सह विवादो निष्फल इति बुद्ध्वा सर्वे बान्धवा गुरुजनाश्च वधू-वरावादाय देवतायतनं जग्मुः । अद्यापि पित्रंचितस्तादृशीमु-न्मत्तस्थितिमेवावलम्बे । "किं धूमिनीं परिणेतुमिच्छसि" इति पुरोधसा पृष्टः "बाढमि" त्युच्चैरुद्घोषयत् । तत्रत्याना सर्वेषा विस्मयाय पुरोहितहस्तात्पुस्तकं प्रभ्रंशया चकार । कराद्भ्रष्टं पुस्तकं पुनरादातुं तस्मिन्नवनते यथापुस्तकमधः पतेत्तथा गाढमुष्टिप्रहारं दत्तवान् । "नूनमयमुन्मत्तीभूत" इत्यमंसत जनाः । धूमिनी वरस्य चेष्टितानि दृष्ट्वा भयेन चकम्पे । शुभकर्म-

णि निष्ठांगते सर्वेषु बांधवेषु विवाहमंटपावस्थितेषु पित्रं चितस्सुरामानेतुं भृत्यं समादिदेश। "बंधुजनस्य नीरोगतामभिवांछन्निमां सुरां पिबामीति" वदन्नपिबत्। "क्षुत्क्षामकंठो देवालयाधिकारी पिबंतं मां यत्किंचिद्याचमान इव प्रतीयमानत्वादहं तथाऽकरवमिति" वदन् पानचषकस्याधोलंबमानमेकं मांसखंडं तस्य मुखे प्राक्षिपत्। न कुत्रापि दृष्टस्तादृगुन्मत्तः। चंड्यास्स्वजायाया दमने स्वचिंतितोपायं सम्यक् निर्वोढुमेवेमां रौद्रतामास्थितः। श्रीदासो महाविभवेन दुहितुर्विवाहमहोत्सवं निर्वर्तयामास। अथ पित्रंचितो देवसदनात्प्रतिनिवृत्याऽद्यैव वधूं स्वगृहं नेष्यामी"ति स्वोद्देश व्यवृणुत। किंतु तच्छ्वशुरस्य निवारणोद्यमः धूमिन्याः कोपवचनानि च पित्रंचितं स्वनिश्चयात्प्रच्यावयितुं न शेकुः। भर्तुर्जायाया पूर्णाधिकारोऽस्तीति प्रतिपाद्य तामतित्वरया स्वगृहं निनाय। एतत्प्रयोजनापेक्षयैव संपादिते कृशाश्वे भार्या मारोप्य स्वयमपि तादृशमेव वाजिनमारुरोह। कचित्कंटकपाषाणादिविषमितपथेन कचिद्नाऽऽयान पंकदुस्तरमार्गेण च तौ दम्पती दीर्घमध्वानं जग्मतुः। यदा यदा धूमिन्यारूढोऽश्वस्खलितपदोऽभूत्तदा तदा लगुडमादाय पदात्पदमपि चलितुमशक्तं तं तपस्विनं गाढं प्रजहार। अथ पित्रंचितस्स्वहयं भटं च परुषवाक्यैस्तर्जयन् दूरमध्वानं गत्वा स्वनिलयं प्राप। भार्यामप्यत्यादरेण स्वसद्मनि

प्रावेशयत् । "अस्या निशायामभ्यवहारो विश्रातिश्च मास्ता-मि"ति निरणैषीत् । सूदैर्भोजनासनानि निहितानि मृष्टान्नानि पर्यसेव्यंत । तत्समये पित्रंचित आगत्य प्रतिभोजनपात्रं यत्किंचिदवद्यं निरूप्य तत्स्थंमांसादिकं पादेन निरास्थत् । भोजनपात्राणि दूरतः परिहर्तुं भृत्याना-ज्ञापयामास । सुष्ठुपक्वमन्नं न भक्षितव्यमिति धूमिन्या-एव प्रीत्यै एतत्सर्वं कृतमित्यवदत् । धूमिनी क्षुत्पीडिता सुष्वाप (न तल्पं सुष्ठु विरचितमिति तल्पाधिकृतान्भृत्यानु-पालभत पर्यंकाभावाद्धूमिनी वेत्रासने निद्रामवाप) वधूपर्यंका-विन्यासाद्भृत्येभ्यः प्रकुपितस्य भर्तुर्गर्जनैस्सा भग्ननिद्रा बभूव । प्रीतिवचनानि भाषमाणः पित्रंचितोऽपरेद्युरपि तथैवाकरोत् । बुभुक्षिता सती यदा धूमिनी भोक्तुं निषण्णा तदा तत्पुरो विन्यस्तपात्रस्थितं सर्वं रुचिरान्नं दुष्टमिति वदन्भूमौ चिक्षेप । ततो बुभुक्षिता धूमिनी रहस्येकमन्नकबलं दातुं सेवकानयाचत। ते तु स्वामिनोपजप्ताः "अस्मद्भर्तुराज्ञा विना न किमपि कर्तुं वयं समर्था इति प्रत्यूचुः । ततो धूमिनी "हंत ! अनशना-न्मा मारयितुमेवासौ जग्राह । मम पितृगृहमागताः क्षुधार्ता-बहवोऽतिथयो रुचिरान्नैस्तर्पिताः । अहमपरिचिता याच्ञायाः । अशनाभावादहमवसन्ना । निद्रादरिद्रता च गमिता । शिर-श्शूलमपि जायते । त्वयि प्रीत्यैव सर्वमेतत्करोमीति वदति ।

तदेव मामधिकतर संतापयति । एव तस्या मनसि शोचंत्यां पिलंचितः प्रविवेश । आहाराभावात्सुतरा परिक्षीणा माभू-दिति मत्वा स्वल्पमन्नमानीयावदत् । प्रिये पश्य कथमिद भवत्यै रोचते । मया स्वयमिदमोदनमपाचि । अनेन कर्मणा मयि भवत्या कृतज्ञया भवितव्यमिति मन्ये । कथं प्रिये बद्ध-मौनासि । त्वद्वागमृतं पिबतु मे श्रोत्रं किमिदं भवत्यै न रो-चते । तदा अहं व्यर्थश्रमोऽस्मि । ततस्तद्भोजनपात्रमुत्सार-यितुं किंकरानादिदेश ।

क्षुत्पीडावशान्निर्वापितगर्वा धूमिन्यन्तःक्रुद्धापि प्रियमेव-मवादीत् । आर्य पुत्र ! तत्तथा तिष्ठतु ।

भार्यां ऋजुमार्गमानेतु पित्रंचितेन चिंतित उपायो न केवलमयम् । किंतु सत्यन्ये । स धूमिनीमेवमाह । या का-चित्स्वल्पाप्युपकृतिरभिनंद्यते लोके । तथैव मदीयाप्युपकृति-स्तव भोजनात्पूर्व सम्मानमर्हति । तच्छ्रुत्वा धूमिनी अनिच्छ-त्यपि । "आर्यपुत्र ! धन्यास्मी"त्यवदत् प्रिये ! अनल्पां पुष्टिं ते तनोत्ययमाहार इति वदन् स्वल्पमेवान्नमत्तुं ता न्ययुंक्त पिलंचितः ॥

प्रिये मधुवद्भोग्ये ! कौशेयवासोभिस्स्वर्णालंकारैर्दुकूल-कंचुकैश्शिरोवेष्टनैश्चालंकृतावावा त्वत्पितृभवनं गमिष्याव इत्युक्त्वा ता प्रत्याययितुं कंचित् क्षुद्रपण्याना विक्रेतारं वणिजं

तुन्नवायं च समाहूय कानिचिद्वासांसि क्रीत्वा तं सौचिकं सेवितुमन्वयुंक्त । अत्रांतरे अस्या अर्थसौहित्योत्पत्तेः प्रागेव पित्रंचितस्तद्भोजनपात्रमुत्सारयितुं किंकरमादिश्य धूमिनीमप्राक्षीत् "प्रिये भवत्या किं भक्षितम् इति" अथ सौचिकः प्रविश्य "आर्यमिश्रैः प्रशंसिताकारं शिरोवेष्टनमिति ब्रुवन्पुरो निहितवान् । तद्दृष्ट्वा पित्रंचितो नवीकृतकोपः परुषं गर्जने साटोपमिदमाह "अरे सौचिक! नेदं सुष्ठु रचितम् मूषिकाकृति प्रापितं नेदं शिरसः पर्याप्तम् गृहं नीत्वा इतः पृथुलतरं कृत्वा आनय ।

धूमिनी—इदं मे रोचते । सर्वास्साध्व्यः एतादृशमेव शिरोवेष्टनं धारयन्ति पित्रंचितः । यदा त्वमपि साध्वी भविष्यसि तथैवेदंः धारयिष्यसि ।

अथ धूमिनी स्वीकृताहारबलेन नवीकृतसत्वा भर्तारमाह । "आर्यपुत्र! अस्मिन्विषये किंचिद्वक्तुं ममानुज्ञा दातुमर्हसि । नाहं बाला । नाहं शिशुः मद्यथेष्टभाषणं त्वत्तोऽधिकतरा अपि श्रोतुमसहन्त । यदि मज्जल्पितानि श्रोतुं न सहसे तदा पिधेहि ते कर्णे ।

पित्रंचितो भार्यायाः परुषाणि वचांसि श्रोतुमसहिष्णुरासीत् । तया सह वाक्कलहादयमेव साधीयानुपाय इति निश्चित्य इदमुत्तरमदात् ।

प्रिये ! यदाह भवती तत्सत्यम् । क्षुद्रं तच्छिरोवेष्टनं । न सम्यग्विरचितं । यद्भवत्यै न रोचत इति—तन्ममेष्टं ।

धूमिनी—आर्यपुत्र ! त्वदिष्टानिष्टाभ्या न मे किंचित्प्रयोजन । इष्टं ममेदं शिरोवेष्टनं । अहमिदमेव वांछामि नान्यत् । ”

ततः पित्रंचितस्तस्या वचनस्यार्थमन्यथा गृह्णण इव प्राह । किं चंडातक्यपि द्रष्टुमिच्छसीति । ततस्सौचिकस्स्वस्यूतं रुचिरमर्धोरुकं तस्यै दर्शयामास । अर्धोरुकं वा शिरोवेष्टनं वा सा नेच्छतीत्यभिप्रायेण पित्रंचित“स्तदप्यसारं खलु हा देव दयानिधे—कंचुकहस्तश्शतघ्नीनाम्नीमिव दृश्यते । ” इत्यब्रवीत् । सौचिकः । स्वामिन् ! एतत्कालिकनिर्माणविधानमवलंब्य निर्मीयतामिति खलु भवता आज्ञप्तम् ।

धूमिनी—इतो रमणीयतरं न कदाचिन्मया दृष्टम् । अलमेतत्पित्रंचितस्य । क्रीतवस्तुजातस्य मूल्यं वस्त्रवणिजे सीवनमूल्यं सौचिकाय च रहसि दापयित्वा स्वापराधं क्षम्तामिति संप्रार्थ्य सर्वश्राव्यं भीषणवचोभिस्तर्जयित्वा तौ गृहाद्बहिः निष्कासितवान् पित्रंचितः ।

अथ धूमिन्यभिमुखो भूत्वा प्राह । प्रिये ! एहि । इमान्येव क्षुद्रवसनानि वसानौ त्वत्पितृगृहं गच्छाव इति ।

यावन्मध्याह्नभोजनवेला नातिक्रामेत्तावच्छ्वशुरनिवासस्थानं गंतव्यमस्माभिः तस्माज्जविष्ठा वाजिनः पल्याणबंधादिना सज्जीक्रियंतामित्यश्वपालानादिदेश । एतत्प्रत्यूषे नोक्तं पित्रंचितेन । किंतु गगनमध्यमध्यारूढे मयूखमालिनि किंकरेभ्यः स्वप्रस्थानमाचख्यौ । धूमिनीभर्तुः प्राचंड्येन भूयिष्ठं वशीकृतापि किंचित्स्वप्रागल्भ्यमाविष्कुर्वाणा इदमूचे । आर्यपुत्र ! तत्रास्मद्गमनात्पूर्वमेव रात्रिर्भविष्यति । कथं गंतुं शक्नुयाव । इदानीं द्विवादनसमयः । स्वोक्तं प्रतिविषयं यथा सा अंगीकुर्यात्तथा सा विधेया कर्तव्या इति पित्रंचितस्याभिप्रायः । कालचक्रस्यापि नेतृत्वं वहन्निव सूर्यस्य गतिमपि निरोद्धुं प्रभुरिव "अस्मत्प्रस्थानात्प्राक्कालो न गच्छति—स्थाणुरेव भवति । प्रिये—मया यदुच्यते यत्क्रियते तत् सर्वं खंडयसि । नाहमद्य गमिष्यामि । मदनुमतिमेवानुरुध्यति कालः । इत्यवोचत् ।

अथापरस्मिन् दिने धूमिनी भर्त्रा नूतनशिक्षितविनयमार्गमनुवर्तितुं बलात्कृता । यावत्सा भर्तृव्यावृत्तमप्रवृत्तिविषयीकृतं प्रातिकूल्यइति शब्दमपि विस्मृत्य पूर्णवशवर्तिनी न भवति तावत्ता पितृगृहं नेतु पित्रंचितो नैच्छत् । तयोः प्रस्थितयोरपि "महत्यातपपीडा" इति सूचनादेव मां मध्यमारात्पुनर्गृहं प्रेषयेदिति सा अभिमेत् ।

एवं प्रकाशमानोयं चन्द्रएव न तु सूर्यः । तथाऽहं शपे इत्यवदत् । पुनस्स्वगृहं प्रतिनिवर्तमान इव ददृशे । धूमिन्यपि प्राक्तनचण्डीत्व विहायेदानीं विनयनम्रा गृहीणी बभूव । भर्तृ-गदितं श्रुत्वा मार्गमध्ये गच्छंती भर्तारमेवमाह । "आर्यपुत्र पुरस्ताद्गच्छावः । एतावन्तं दूरमागतास्स्मः । मार्गशेषमुत्त-रावः । गगनाभोगे प्रकाशमानोयं भवतु पद्मबान्धवः कुमुद-बांधवो वा यत्ते रोचते तदस्तु । जंगमादीपवर्तिर्भवतु । यथा ते छंदः तथैव ममापि प्रतिभाति" । इति । पित्रंचितोऽयं चंद्रएवेति तामभ्युपगमयितुनिश्चित्य पुनरवदत् । प्रिये! अयं चंद्र इति ब्रवीमि ।

धूमिनी—आर्यपुत्र! अहमपि जाने अयं चंद्रएवेति

पित्रंचितः—प्रिये! सर्वलोकमित्रं मित्रः खल्वयम् । चन्द्र इत्यसत्यं वदसि ।

धूमिनी—बाढं सूर्य एव । यदा त्वया प्रत्याख्यायते तथा स सूर्यो न भवति । भवान् येन केन चिन्नाम्ना यन्नि-र्दिशसि तत्तदेव भवति । धूमिन्या अपि सततं तथैव ।

एवं तौ प्रस्थातुमुपचक्रमतुः । एतस्या नम्रता स्थिरी-कृता वा न वा इति परीक्षितुं मार्गमध्ये समुपस्थितं कंचन स्थविरं दृष्ट्वा युवतिमिव त संबोध्य "भद्रे! सुप्रभातमस्तु ते ।

प्रियां वीक्ष्य प्राह। अयि प्राणवल्लभे! एतस्या अक्षियुग्मं पश्य। नीलोत्पलद्वंद्वमिव भाति। किं कदापि दृष्टा एतादृशी सुंदरी। पश्य गंडफलकयोः कान्तिम्। इत्युक्त्वा पुनस्तं जरठमुवाच। सुंदरि पुनस्ते सुदिनमिच्छामि। पुनर्जायामाह। दयिते! तस्या सौंदर्यप्रलोभिता सकृत्ता परिष्वजस्व"।

भर्त्रा साकल्येन वशीकृता धूमिनी भर्त्राज्ञां तस्मिन्नेव क्षणे अन्वतिष्ठते। पतिरिव धूमिन्यपि तं प्रवयसमुवाच। प्रमदोत्तमे! लावण्यवति! रुचिरासि। मधुरदर्शनासि। कुत्र गच्छसि। त्वदावासः कुत्र। एतादृशरूपवत्या भवत्या अपत्यवंतौ ते पितरौ धन्यौ। पित्रंधितः। प्रिये नोन्मत्तासि। अयं पुरुषः। जराजीर्णांगः। पलितमौलिः। वलिव्याप्तमुखः। कि नारीति मन्यसे।

धूमिनी—वृद्धं प्रति आर्य क्षमस्व मां। आदित्यप्रभाप्रतिहतचक्षुस्तया मम सर्वो जीवलोकः पीतवर्ण इवाभाति। इदानीं त्वन्मुखं विशदतरं पश्यामि। भवान्वृद्धोसि। मम स्खलितं क्षमस्व अर्हन।

पित्रंधितः—साधो! तात! ते गंतव्यप्रदेशं वक्तुमर्हसि। त्वमप्यस्माननुसृत्यायास्यसि चेत् त्वत्सहवासेन वयं हृष्टा भवेम।

वृद्धः—आर्यौ! परिहासशीलौ! अतर्कितोपनतेन भवत्समागमेन भृशं विस्मितोऽस्मि । विशाखनामाहम् । पाटलपुरे वसंतं मम पुत्रं द्रष्टुं गच्छामि ।

ततः पित्रंचितआह । अयं स्थविरश्श्रीदासस्य द्वितीयां दुहितरं कान्तिमतीनाम्नीमुद्वोढुनिश्चितवतो सुमित्राख्यस्य पितेत्यहं जानामीति । ततो महाविभवेन प्रवर्तयिष्यमाण तत्पुत्रस्य विवाहमहोत्सवं तस्मै वृद्धाय कथयित्वा पित्रंचितस्तं समनन्दयन् । तत एते त्रयस्सानंदं पथि सम्भाषमाणाश्श्रीदासस्य गृहं प्रतस्थुः । तत्र सुमित्रकांतिमत्यो विवाहमहोत्सवं द्रष्टुकामास्सर्वे बन्धुजनास्समवेताः । ज्येष्ठदुहितुर्धूमिन्या विवाहस्य पूर्वमेव वृत्तत्वादिदानीं कनिष्ठायाः कांतिमत्या विवाहाय श्रीदासोऽप्यनुमेने ।

अथ धूमिनीपित्रंचितयोर्विवाहमंटपिकायामुपविष्टयोस्सतोः पुत्रीजामात्रोरागमनेन द्विगुणिताह्लादो वार्तानुयोगादिना तमभिनंद्य सुतां वीक्ष्य मुमोद ।

ततस्सुमित्रः कांतिमतीं परिणिनाय । तत्र हारधनोनामापरो वरः अचिरात्कृतदारसंग्रहस्समायातः । एतावुभौ सुमित्रहारधनौ पित्रंचितभार्याया धूमिन्या वामशीलतामुद्दिश्येषत्परिजहसतुः । विधिवक्रतया पित्रंचितेन वृता कन्या

त्वविधेया ताभ्यां घृते कन्यके सुघृत्ते विधेये इति संहृष्टाविव सुमित्रहारधनावदृश्येताम् ।

पित्रंचितो भुजानयोस्तयोर्वध्वोर्यावदागमनं तयोः परिहासं नाजीगणत् । तच्छ्वशुरश्श्रीदासोपि तयोः पक्षमेवालंब्य ज्येष्ठजामातरं अवज्ञातवान् । तत्पत्नीभ्यामिदानीमज्जायैवाधिकतरं विधेयेति पित्रंचितेनोक्ते सति धूमिन्याः पितेदमाह । "पुत्रक ! पित्लंचित ! तिसृणां मत्पुत्रीणां त्वद्भार्यैका वक्रशीला अविधेयेति वक्तुं बिभेमि ।

पित्लंचितः । नेति ब्रूयाम् । युष्मत्प्रत्यायनार्थं सत्यं ब्रवीमि । तासां तिसृणां वधूनां मध्ये या भर्त्रा आहूता कालविलंब विना अत्रागमिष्यति तद्भर्ता निर्दिष्टं पणं इतरस्माद्गृह्णातु । इति । इतरावप्येतदंगीचक्रतुः । यतस्तौ दुर्दान्ताया धूमिन्यास्स्वस्वजाये अधिकतरमाज्ञानुवर्तिन्याविति दृढप्रत्ययवंतौ । पणं विंशतिसुवर्णपरिमाणं निश्चिक्युः । ततःपित्रंचितः प्राह । कियदेतत् । एतावन्मूल्यमहं गृहकपोतिकायां वा कौलेयके वा न्यसेयं मद्गृहिण्यास्तु एतस्माद्विंशतिगुणाधिकं इति । अथ सुमित्रहारधनौ तं पण शतसुवर्णैरवर्धयताम् । तेषु सुमित्रः प्रथमं स्वजायामानेतुं भृत्यं प्राहिणोत् । स द्रुततरं प्रतिनिवृत्याकथयत् । स्वामिन् । देवी मन्मुखेन भवंतं विज्ञापयति । गृहकर्मण्यग्रास्मि । आगंतुं नावकाशोऽस्ति मे । क्षाम्य-

त्वार्यपुत्र आज्ञोल्लंघनम् । पिवंचितः । कथं किमुक्तवती सा । गृहकार्यपरतया नागंतुं शक्तास्मीति । किमिद कळत्रोचित-मुत्तरम् ।

एवं ब्रुवाणं पित्रंचितं वीक्ष्य “धूमिनी इतोपि परुषतरं प्रत्युत्तरं न प्रेषयति चेद्वरमित्युक्त्वा ते सर्वे तं परिजहसुः । साम्प्रतं हारधनस्य वारस्समायातः ।

हारधनः—रे भृत्य ! मद्भार्यामुपेत्य “तव भर्ता सकृच्छीघ्रमागंतुं त्वां प्रार्थयत इत्युक्त्वा तामानय । पित्रंचितः अहो कि प्रार्थयितव्या ।

हारधनः—अवश्यमायास्यति । त्वज्जाया तु प्रार्थना-मपि नांगीकरोतीति बिभेमि । किंत्वसौ सुशीलस्स्वामिनीं विनैवागच्छंतं किंकरमुद्वीक्ष्य विवर्णवदनो भूत्वा तमप्राक्षीत् । कुत्र मे भार्या । किं नासावायाता ।

भृत्यः स्वामिन्—देवी विज्ञापयति । “आर्यपुत्रो यत्किंचिन्मनसि निधाय मां परिहसितुमाकारयति । ततो नाहमागच्छेयम् । स एवात्रागच्छत्विति”

पिवंचितस्तच्छ्रुत्वा “प्रतिकूलतरमुत्तरमिति” चुक्रोश । ततस्स निजकिंकरमाहूय एवमुवाच । “भद्र ! मद्भार्यानिकटं गत्वा तामेवं ब्रूहि । देवस्त्वा सत्वरमागंतुमाज्ञापयतीति ।

अथ सेवकवचनश्रवणसमनंतरमेवोत्थाय तेन सहागच्छन्तीं धूमिनीं ददृशुः । तत्पिता श्रीदास आगच्छति धूमिनीत्याजुघोष अथ सा प्रविश्य धवलधवलाभिः कटाक्षवीक्षणझरीभिर्दयितमासिंचंती अवोचत् । आर्यपुत्र ! केन नियोगेन मामनुगृहीतुमाकारितवानसि । कृत्या त्वद्भगिनी । हारधनस्य जायाच । ते उभे संलापकोष्ठे स्थित्वा वह्निना शीतबाधां निवारयतः ॥

पित्रंचितः । गच्छ ते अप्यत्रानय । ततस्सा अधरस्पंदनमप्यकृत्वा तत्क्षणमेव भर्त्राज्ञां परिपालयितुं तद्वधूद्वयानयनाय तत्र जगाम ।

सुमित्रः—इदम् महदद्भुतं ।

हारधनः—ममापि तथैव प्रतीयते । मूर्तोऽद्भुतरसः ।

पित्रंचितः—विग्रहवती शान्तिः ॥

श्रीदासस्स्वसुताया मे तादृशगुणपरिवृत्तिं विचिन्त्यानंदपरवशः प्राह । वत्स ! पित्रंचित ! भद्रमस्तु ते । पणं जितवानसि । यतस्सा स्ववक्रशीलतां परित्यज्यैकस्मिन्नेव जन्मन्यन्येवाभूत् । ततस्तस्यै अपरं विंशतिसहस्रपरिमाणं धनं यौतकं दद्याम् ॥

पित्रंचितः इतस्सुष्ठु तरं पण जेष्यामि । तस्या नूतनाधिगतसुवृत्तमितोऽधिकतरं प्रदर्शयेयम् । इतराभ्यां सह

प्रविशन्तीं धूमिनीं दृष्ट्वा पश्यत । कथं सा गच्छति । स्वानुशासनेन बंदीकृते इव स्थिते त्वाद्विधेये जाये कथमत्रानयति । धूमिनीं प्रति । प्रिये ! अल्पमूल्यमसारं तच्छिरोवेष्टिनं धारयितुं नार्हति भवती । तदधःक्षिप । धूमिनी सद्यएव तदधः अपातयत् । ततो धूमिनी पातिव्रत्यधर्मान्सविस्तरं उपपादयितुं भर्त्रा पित्रंचितेन समादिष्टा निरर्गलवाग्विभवेन तत्रत्यानां सर्वेषां विस्मयायोपन्यास्थत् । धूमिनी चंडीति पूर्वप्रसिद्धिमपहायेदानीं परमसाध्वी भर्त्रनुव्रतेति प्रख्यातिमभजत् ॥

चंडीदमनं समाप्तम् ॥

---

## 8. Measure for Measure.

## ( कृत प्रतिकृतिः )



1 Vincentio = विजयसेनः—वियन्नगरी.

2. Angelo = प्रभंजनः—राजप्रतिनिधिः.

3 Escalus = अस्खलितः—कश्चित्प्रभुः.

4 Claudio = कलादः—ईशबलायास्सोदरः.

5. Lucio = लासकः—कलादस्य मित्रं.

6. Isabella = ईशबला.

7. Mariana = सुवदना.

8 Juliet = मंदारिका.

# ॥ कृतप्रतिकृतिः ॥

## (MEASURE FOR MEASURE)



आसीच्चतुरुदधिमेखलावलयितमहीमण्डलमण्डनायमाना निजविभवाधरीकृतराजराजपुरी वियन्नगरीनाम काचित्पुरी । तां शशास शांतमनाः क्षमागुणप्रधानो विजयसेनो नाम कश्चित्पार्थिवसत्तमः सः क्षमी परहिंसापराङ्मुखतया स्वप्रजासु दण्ड्यानपि नादण्डयत् । तस्य क्षान्त्या लब्धावकाशास्तत्प्रजाराजशासनान्युल्लंघयामासुः ।

विशेषेणासीदेकं राजशासनं । यस्यास्तित्वमपि प्रजाभिर्विस्मृतप्रायमभूत् । राजापि न कदाचित्स्वपरिपालनकाले तच्छासनमन्वतिष्ठिपत् । विधिवदपरिणीतया योषिता यो जीवेत्सवंध्यो भवत्यनेन शासनेन । राज्ञः क्षमाशीलतया विवाहविध्यनुष्ठापकपदाधिकृतश्च तच्छासनमुपेक्षां चक्रे । ततस्सर्वे तत्पुरवासिनः कन्यापितरो राजसन्निधिमागत्य "राजन् ! अत्रत्या युवानः अस्मत्कन्यकाः धनेन रूपेण वा प्रलोभ्य ता अपहृत्य तासां चारित्रं दूषयंति ता अपि तत्सहचरीभूय तैस्सह जीवंती" त्यनुदिनं सविलापं विज्ञापयामासुः । ततो भूवल्लभः प्रजासु बहुलीभवन्तीमिमामपथप्रवृत्तिं जनमुखा-

न्मुहुर्मुहुश्श्रुत्वा मनसीत्थमचिन्तयत् । तैक्ष्ण्यमवलंब्य सुप्रजा क्रूरदंडविधानेन विना न पार्यतेऽसौ दुर्नयो विनिवारयितुम् । अहं तु प्रकृत्या मृदुः आनृशंस्यपरः । यदीदानीं मया हठात्तिग्मताऽस्थीयते तदा प्रकृतिप्रकोपो जायेत । ततो मम प्राणानभिद्रुह्येयुरिति दीर्घमालोच्य राज्यतंत्रनिष्णाते प्रजा-दोषदमनपटिष्ठे कस्मिंश्चित्पुरुषे राज्यभारमारोप्य तीर्थयात्रा-व्यपदेशेन कंचित्कालं प्रोषितो भवितुं निश्चिकाय ॥

आसीदस्मिन्नेव नगरे प्रभञ्जनो नाम कश्चित्पुरुषप्रकाण्डो जितेंद्रियस्स्वनियमैस्सदाचारैश्च ऋषिप्रधामगात् ॥

असौ विजयसेनमहीपालस्स्वचिन्तितनियोगभरं वोढु-मयमेव दक्ष इति मत्वा प्रधानामात्यं सुबुद्धिनामानमविलंबित-माहूय तस्मै स्वाशयं व्यवृणोत् । अथ सोपि राजानमुपेत्य निटलतट घटिताञ्जलिरित्थं व्यजिज्ञपत् । "भूवल्लभ ! सर्वस्यां वियत्पुर्यां यः कश्चिद्देवपादाना बहुमानपात्रं विद्यते यदि स प्रभंजन एवेत्यवैतु स्वामी" एवं मंत्रिसम्मतिं चावाप्य स भूजानिश्शुभेऽहनि प्रभंजनमागमय्य तस्मै स्वचिकीर्षित कथ-यित्वा स्वप्रवाससमये राज्यकार्यावेक्षणायात्मनः प्रतिनिधिं परिकल्प्य तीर्थाटनच्छलेन स्वदेशं विहायान्यं कंचिद्विदेशम-शिश्रयत् । तत्र गणरात्रं नीत्वा यतिवेषाच्छादितनिजरूपः

परैरनभिज्ञातः आत्मनः प्रतिनिधेः प्रभंजनस्य राज्यपालनीं प्रवृत्तिं निभृतं वेदितुं पुनस्तामेव नगरीं रहो निवव्रृते ।

अथ नूतनाधिकारपदवीमारूढस्य प्रभंजनस्यानतीते चिरकाले कलादनामा कश्चिद्युवषिड्गः काचित्तरुणीं पितृभ्या वियोज्य बलादपजहार । ततो नूत्नराजप्रतिनिधेः प्रभजनस्याज्ञयाऽपराधी कलादो राजभटैर्जीवग्राहं गृहीत्वा चारके निक्षिप्तः । चिरादुपेक्षितस्य राजशासनस्य बलेन प्रभंजनः कलादस्य शिरश्छेत्तुमादिदेश । अस्खलितनामा कश्चित्प्रभुः बहवस्तस्य सुहृदो बान्धवाश्च प्रभंजनमुपेत्य "देव! जराभारावनतस्य पलितशिरस्कस्य दशमीस्थस्य अभ्यर्हणीयचरित्रस्य मया पुत्रस्य किं वा द्रष्टव्यमिति गृहे विलपतस्तस्य पितुः कृतेऽस्य प्रथमोयमपराधः क्षम्यतामि"त्यभ्यर्थितवन्तः ।

प्रभंजनः—आर्याः! शृणुत मद्वचनं । यथा फलितक्षेत्रे सस्यरक्षणाय शुककाकादिपक्षिणो वित्रासितुं निवेशितः प्रतिपुरुषः क्रमशो भयापगमाद्वयसा वासयष्टिर्भवति न तु भयहेतुस्तथा राजशासनमपि प्रथममुपेक्षया यदि सम्यक् नानुष्ठाप्यते प्रजा न बिभ्युः । राजदंडभयरहिताः प्रोल्लंघितलोकसेतवस्ताः किं किं न विदध्युः । तस्मादतिक्रान्तराजशासनोयं वराकश्शीर्षच्छेद्य एव । तथा स्मर्यते ।

"राजभिः कृतदण्डास्तु कृत्वा पापानि मानवाः ।
निर्मलास्स्वर्गमायान्ति सन्तस्सुकृतिनो यथा"

अत्रान्तरे कलादस्य मित्रं लासकनामा कश्चित् कारागृहे निगळितं सुहृदं द्रष्टुमाजगाम । तं दृष्ट्वा कलाद अवोचत् ।

"सखे ! आपन्ने मयि दयालुरिमामुपकृतिं कुरु । मद्गृहं गत्वा मत्स्वसारमीशबलां मन्मुखेनैवं ब्रूहि । सा अद्यैव कंचिद्बौद्धविहारं जिगमिषति । ततस्सत्वरं तामुपगम्य ममापतितं दुर्जातं तस्यै व्याचक्ष्व । स्वयं तत्सविधं गत्वा कठोरहृदयं प्रभंजनं "मत्सोदरस्य प्राणभिक्षां देहीति" प्रार्थयितुं तां प्रहिणु । अयस्सारहृदयस्स हि प्रतिनिधिर्मद्भगिन्या रूपरामणीयकेन वाङ्मञ्जिमया चानाकृष्टहृदयो न भवेदिति मे महती प्रत्याशा । दृषत्प्रायस्यापि नरस्य मानसं प्रमदारोदनोच्छूनारक्तनेत्रातगलद्बाष्पोदबिंदुभिः कपोलफलकाभ्यां समंतिम्यतीतिमन्ये" ।

तत ईशबलापि यथा चिंतितं तस्मिन् दिने यत्याश्रमदीक्षां प्रवेष्टुं गुरूपदेशग्रहणाय मठमगात् । शास्त्रविहितां गुरुशुश्रूषां किंचित्कालं कृत्वा तदनुकाषायधारणायार्हा भवेत् । सा तत्र यत्याश्रमधर्मान्मठधर्मांश्च पृच्छन्ती तस्थौ । लासकोपि यतिसदनं प्रविश्य "शमप्रधानानां वशमातिरेधताम्" इति तारस्वेण निजगाद । ईशबला । कोत्र ब्रूते । योगिनी । पुंस-

इव स्वरसंवादः भद्रे ईशबले ! त्वमेव तावद्बहिर्गत्वा जानीहि । कोऽसौ किमर्थमागत इति । मम त्वाश्रमधर्मानुरोधेन न बहिर्गन्तव्यम् । व्रतधारणानन्तरं त्वयापि पुरुषैस्सह न सम्भाषितव्यम् । यदि भाषसे मुखं न प्रदर्शय । यदि मुखं प्रदर्शयसि मौनमातिष्ठ । एकमक्षरमपि नोदीरयेत् ।

ईशबला—भवतीना योगिनीना स्वातंत्र्यं नास्ति ।

योगिनी—किं नेद पर्याप्तम् ।

ईशबला—अथकिम् । साहमितोऽधिकस्वातंत्र्याभिलाषिणी ब्रवीमि । किंतु योगिनीसमयो तीव्रसंयमान्वितो भवेदिति मदाशयः । पाणितलेन कवाटं ताडयतः पुरुषस्य कंठध्वनिः पुनरश्रूयत ।

योगिनी—इतो गत्वा कवाटमपावृणु । प्रत्युत्तरं देहि ! तत ईशबला करेण कवाटमपावृत्य लासकं वीक्ष्य आर्य ! "स्वस्ति भवते । वर्धतां भवान्" इति बभाण ।

लासकः—सभक्त्युन्मेषं । तस्यास्सविधमुपसर्पन् । आर्ये स्वस्ति भवत्यै । भवती ईशबलेव दृश्यसे । कमनीयकपोलपाटलत्विषा त्वमपि नावरेति तर्कयामि । एतन्मठस्य नूतनशिष्या तपस्विनः कलादस्य स्वसा ईशबलाख्या काचिदत्र वर्तत इति मया श्रुतम् । दयया मां तस्या अन्तिकं प्रापय ।

ईशबला—आर्य! तपस्विशब्देन तस्मिन्भयशंकि मे मनः। किं तस्य। स्पष्टतरं ब्रूहि। सैवाहमस्मीशबला तद्भगिनी।

लासकः—भद्रे सुरूपे! तवभ्राता मन्मुखेन तव कुशलमनुयुंक्ते। स इदानीं बन्धनागारे निक्षिप्तः।

ईशबला—हाधिक् हाधिक् महती विपदापतिता मे भ्रातुः। किं तेन कृतं येन बन्धनं नीतः।

लासकः—त्वत्सोदरः कन्यामदूदुषत्। "ईशबला सा मे पितृष्वस्रीया मन्दारिकेति बिभेमि" मंदारिकेशबलयोर्वस्तुतः परस्परबंधुत्वं नासीत्। किंतु बाल्ये पाठशालायामध्ययनकाले संजातदृढतरमैत्रीवशादीशबला ता मन्दारिका ममेयं पितृष्वस्रीयेति व्यवहरतिस्म। सा कलादानुरक्तेतीशबला जज्ञौ। तदनुरागेणैवायमिमामवस्थां प्रापित इति मनस्यचिन्तयत्।

लासकः—सैवास्य व्यसनहेतुः। मे भ्राता तामुपयच्छतु लासकः। तस्यापि सएव संकल्पः कलादस्तां प्रीतिपूर्वकं उद्वहत्येव। किंत्विदानीं राजप्रतिनिधिः प्रभंजनस्तं कन्यादूषणेन राजशासनमुल्लंघितवानिति क्रोधेन तस्य वधदंडमाज्ञापयत्। तस्मात्त्वमधुनैव क्षिप्रं तदन्तिकं गत्वा यदि तं सपादपतनं नानुनेष्यसि कलादस्य जीविताशा दत्तजलांजलिर्भवेत्। तदर्थमेवात्र समागमनम्। इमां वार्तां तव श्रावयितुं त्वद्भ्राता प्रेषितोस्मि।

ईशबला—तं वधदंडान्मोचयितुं का शक्तिरस्ति मे। कठिनहृदयं प्रभंजनं करुणार्द्रचित्तं कर्तुं नाहमलं इति शंके।

लासकः—आर्ये कृतं शंकया। शंका तावत्कार्यघातिनी। तद्भयादनुद्योगिनामस्माकं श्रेयो भनक्ति। प्रभंजनस्य वेश्म गच्छ। सोरस्ताडं विलपन्तीभिरबलाभिरभ्यर्थ्यमाना देवता अपि प्रसीदेयुः किं पुनर्मनुष्याः।

ईशबला—प्रयतिष्ये किमहमिदं कार्यं कर्तुं शक्नुयां वा नवा। इमं वृत्तांत मठाध्यक्षायै योगिन्यै निवेद्य तदनुज्ञामवाप्य सत्वरं प्रभंजनस्यांतिकं गमिष्यामि। कार्यस्य सिद्ध्यसिद्ध्यौ त रात्रावतगमयिष्यामि।

एवमीशबला योगिन्यनुज्ञया मठात्प्रचलिता प्रभंजनावसथं गत्वा तदंघ्रियुगले चात्मानं पातयित्वा कुररीव विलपन्ती मुक्ताफलस्थूलैरश्रुबिंदुभिस्समानदुःखामिव मणिकुट्टिमभुवं कुर्वाणा इदमवोचत्। "आर्य! अहं काचिदर्थिनी दुःखिता। यदि देवपादाना चित्तं मयि किंचित्प्रसादोन्मुखं मत्परिदेवनं श्रोतुमिच्छति तर्हि विज्ञापयामि।

प्रभंजनः—भवतु किं प्रार्थ्यते। किं वा ते दुःखकारणं।

तदा ईशबला सोदरस्य उपप्लवं वर्णयित्वा यथाप्रभंजनस्य मनः करुणया द्रवीभवति तथा दीनवाग्भिर्भ्रातृप्राणपरिरक्षणाय

तमनुनिनाय । प्रभंजनस्तस्या दीनालापान् श्रुत्वा प्राह—सुभ्रु! किमहं करवाणि । नास्त्यत्र प्रतीकारः । तव सहजन्मा वधाय निर्दिष्टः । हंतव्य एव । कि न जानीषे "सर्वस्वकृतमुक्पुमान्" इत्याभाणकम् ।

ईशबला—अहो राजशासनपारुष्यम् । अहो राजदण्डस्य न्याय्यता । का गतिरिदानीम् । नष्टो मे भ्राता । स्वस्ति भवते । साधयाम्यहमित्युक्त्वा सा प्रस्थिता । तस्या अनुयायी लासकः प्राह ।

आर्ये! नालमेतावता । मा विरमोद्यमात् । पुनरायाहि तं प्रसादयितुम् । यावत्त्वयि प्रसाद न करोति तावत्तं न जहाहि । त्वं सप्रागल्भ्य स धैर्यं वक्तुमक्षमेव लक्ष्यसे । इति ।

ततः परेद्युरीशबला पुनस्त समेत्य निजललाटपरिचुम्बिततदंघ्रिद्वया भ्रातृभिक्षा बिभिक्षे ।

प्रभंजनः—नूनं स वध्यः अतीतः कालः । किमहमिदानीं कुर्याम् ।

ईशबला—आर्य । शृणु मद्वचनम् यथाभूतानुकम्पा महतां महत्वमावहति न तथा शस्त्रदंड मकुटकौशेयादिकं । प्रभंजनः । अपेहि वाचाटे अपेहि ।

एवं प्रभंजनेन निरस्यमानापि सा पुनः पुनस्तं प्रार्थयमाना पुनराह । यदि मे भ्राता कलादस्त्वामिव राजप्रतिनिधिपदे

निवेशितो भवेत् । त्वमपि स इव बंधनागारे कृतापराधतया निक्षिप्तो यदि भवेत् । तदा मदग्रजो भवानिव एतादृशीं कठिनचित्ततां न वहेत् । त्वा मत्पदे मा त्वत्पदे निवेशयितुमीश्वरं प्रार्थये । तथा दैवेन परस्परव्यत्यासे कृते किमेवं भवेत् ।

प्रभंजनः—प्राड्विवाकत्वबंदीत्वयोर्यदंतरं तत्ते ब्रवीमि। शृणु सुन्दरि । स्वस्था भव । त्वद्भ्रातृवधे राजशासनमेव कारणं नत्वहम् । ममानुजो वा तनूजो वा प्रियबंधुर्वा भवतु । यो ह्यपराधी स निहंतव्य एवेति मे निश्चयः ।

श्वः प्रगे स वध्यस्थानं नेष्यते । ईशबला । किं श्व एव घानिष्यते । हंत आकस्मिकोयं वधः । मुच्यतामसौ । नासौ मर्तुं सज्जः । सूदा अपि महानसे नाकाले मृगपक्ष्यादीन्विशंसन्ति । सर्वभूतान्तरात्मनीश्वरे यादृशी बुद्धिरस्माकं तादृशी बुद्धिस्तच्छरीरभूतेषु भूतेष्वपि कर्तव्या । बुद्ध्या सम्यग्विचार्यताम् । बह्वोऽप्यमुमेवापराधं कृतवंतो मम भ्रातृवन्न कोपि वधाय निर्दिष्टः त्वमेव तच्छासनानुष्ठापने प्रथमः । सएव तत्फलानुभवितॄणामादिमः । तव हृदयं पृच्छ । मत्सोदरापराधं जानीहि । प्रायशो लोके सर्वो जनो निसर्गत एवेंद्रियलौल्यपरवशः कृत्याकृत्यविचारविधुर इन्द्रियास्वैरपथे नीयते इत्यमुमंशं सम्यग्विमृश्य परित्रायस्व मम भ्रातरम् । एवं तस्याश्चरमोक्तिभिः प्रभंजनोऽत्यर्थं द्रवीभूतहृदयोऽभूत् । सोपि तद्रूपचेष्टा

वाग्विलासवागुरासु हरिणायमानचित्तवृत्तिर्वशिनां धुरि स्थितोपि प्राकृतवदाविर्भूतकुसुमचापचापलेन निर्मथिताविवेकः कथंचिदात्मानं संस्तम्भयितुमीशबलायाः पराङ्मुखोऽभूत् ।

ईशबला—आर्य मा विमुखोऽभूः । इतस्तावद्दृष्टिं विकिर किमुत्कोचं ते दास्यामि ।

प्रभंजनः—सविस्मयमात्मगतम् । कथमियमुत्कोचं दित्सति मे ।

ईशबला—दास्यामि ते तादृक्पारितोषिकाणि येष्वीश्वरोपि त्वया सहांशभाग्भवति । न तु हिरण्मयानि दृषन्मयानि वा । अपित्वीश्वरश्राव्यास्सत्याः प्रार्थनाःश्वस्सूर्योदयात्प्राक् ।

प्रभंजनः—बाढम् । एवमस्तु । श्वः प्रातरागच्छ । इत्युक्त्वा तां विससर्ज ।

साप्येतावता "ममाक्रोशेनासौ दयार्द्रचित्तस्सन्सद्यो हननमकृत्वा श्वस्सूर्योदयपर्यन्त मम भ्रातृजीवनस्यावधि दत्वा पुनरायाहीत्युक्तवान् । तावन्मे शुभतरं । श्वः कठिनस्वभावं तं मद्वचोभिर्मार्दवमानेष्यामी"त्याशया संतुष्टहृदया निजगृहं गच्छन्ती परावृत्य प्रभंजनं दृष्ट्वा आर्य ! परमेश्वरेण रक्षितस्सुखमेधि चिरम् । इत्युक्त्वा निजगृहमगात् ।

प्रभंजनस्तद्वाक्यानि श्रुत्वा मनसीत्थमवोचत्।

"तन्वंगि ! पंचबाणबाणविक्षतोऽहं त्वत्तएव रक्षणमिच्छामि। नत्वन्यतः। उत्पन्नेंद्रियक्षोभाद्भीतः पुनर्विवेकमवष्टभ्य। किमेष विकारो मामवस्कन्दति। अविषयोस्मि विषयचापलस्य धिङ्मामपथप्रवृत्तम्। कथमहं तस्यामुदीर्णरागवृत्तिः। कथमुत्पन्नस्तद्वाक्यश्रवणाभिलाषो मे पार्वणशर्वरीश्वरनिभं तन्मुखमद्यापि मे नेत्रपर्वाचरति। किमेष स्वप्नः आहोस्विज्जागर्मि। पुनस्सविवेकं निगृहीतोऽसि भो अनंगहतक। बुद्धा ते शाम्बरी। अनंगस्यापि ते प्रज्ञोन्मेषस्सर्वेषामुपरि वर्तते। यमिनं मामनिर्जित्य त्व शूरो न भवसि। यथा धीवरो बडिशे वर्षाभ्वीमासज्य मत्स्यान् गृह्णाति तथा त्वमपि योषिदामिषं प्रदर्श्य पुरुषझषान् गृह्णासि। न जातु स्त्रिया प्रलोभितपूर्वं मे मनः। किमिदानीमेषा योषा नदीकूलमिवापगारयो मे चित्तं शनैराकर्षति। यावदद्य स्त्रीषूत्कंठितान्पुंसो दृष्ट्वा एते चपलाः परमनिकृष्टा इत्यवाजानाम्। इतः पूर्वः पिहितद्वारामेकामवृत्तिरधुना विवृतद्वाराऽजनि।

अथ तन्निशायां स नूत्नकामुकस्संकल्पतूलिकया अभित्तिचित्रकर्म कुर्वाणः जजागार। कारागृहनिगळितात्परेद्युर्हनिष्यमाणात्कलादादधिकतरां वेदनामियाय। कलादस्तु कृतमरणोद्योगस्तद्रजनीं सुखं सुष्वाप।

अथ यतिवेषधारी राजा जयसेनो शृंखलासदानितचरणयुगलं कलादं दृष्ट्वा "भो युवन्! कृताघेभ्यः पश्चात्ताप एव प्रायश्चित्तमिति वदंति विपश्चितः। तस्मात्कृतपापो भवानपि पश्चात्तप्तो भवतु। ध्यायस्व तमेव भगवन्तं निखिलजगत्कारणम्। इति मोक्षोपायमुपादिक्षत्। प्रभंजनस्तु वीतनिद्रः प्रसह्येशबलायाश्चारित्रदूषणमकार्यमिति निषेधबुद्ध्या हातुं वा कामपरवशतया उपादातुं वा परिच्छेदमलभमानोऽपरिमेयमनोवेदनामन्वभूत्।

अंततस्तां साध्वीं सच्चरित्रात्प्रच्यावयितुमेव निश्चिक्ये। नाहमुत्कोचमादास्यामीति प्रतिज्ञा कुर्वन्नपि भ्रातृविमोक्षणरूपमुत्कोचं तस्यै दत्वा ता वशीकर्तुं निश्चितवान्।

अथ प्रातः पुनरागतामीशबलामवलोक्य प्रभंजनस्तामेकाकिनीं रहसि निशीथे स्वनिकटमागंतुमभिललाष। एकान्तस्थितामिदमाह। "रंभोरु यथा मन्दारिका युष्मद्भ्रातरं सफलप्रार्थनं चकार तथा त्वमपि मन्मनोरथं पूरयसि चेद्विमुंचामि तव भ्रातरं। त्वद्दर्शनात्प्रभृति त्वयि गाढमनुरक्तोस्मि। तस्माद्यथा मन्दारिका सर्वं गुरुजनं वंचयित्वा निशीथे पंचशरमात्रसहाया कलादसविधमभिससार तथा त्वमप्यस्यां रात्रौ निभृतपदसंचारमागंतुमिच्छसि चेदक्षतः कलादो भवेत्।" तद्वचांसि श्रुत्वा ईशबला येनापराधेन मद्भ्राता अनेन वध्यो

भवति तमेवापराधं कर्तुमसावुद्युंक्ते इति नितांतं विस्मिता प्राह। "आर्य। मत्सोदरप्राणरक्षणे यावती ममास्था तावती मम चारित्ररक्षणेपि। यद्यहं व्यापादनीया भविष्यामि तदा कशाभिघातचिह्नानि पद्मरागमणीनिव शरीरे धारयामि। एतादृशशीलभ्रंशात्प्राग्गुणः खट्वामिव मरणशय्यामारोढुमिच्छामि। मम मनःपरिशुद्धिपरीक्षणाय भवतैवमुक्तमिति मन्ये।"

प्रभंजनः। शृणु सुन्दरि! सत्यमभिलषति मे मनस्त्वाम्। विश्वसिहि मद्वचन। ईश्वरेण शपे। तादृशहेयकर्मसमर्थनाय ईश्वरशब्दं प्रयुंजानं प्रभंजनमवलोक्य ईशबला भृशं रुष्टा तमाह। धिक्त्वां नृशंसं दुर्विनीतं। तृणपिहितकूपसदृशोसि। कथं न जिह्रेषि तादृशमकीर्तिकरं कर्म कर्तुमिच्छामीति वदन। त्वं धर्मध्वज इति नाहं जाने। दृढव्रतः प्रजाहितरतस्सानुक्रोशो जितेंद्रिय इति राज्ञा स्वपदे निवेशित'इति जनमुखाच्छ्रुत्वा भवंतं प्रार्थयितुमागता। एवं करिष्यसीति न ज्ञातं मया। क्षान्तस्त्वत्सोदरापराध इति पत्रिकां विलिख्य नददासि चे दिमां त्वद्दुष्प्रवृत्तिं सतां मध्ये उद्घोषयामि।

प्रभंजनः—ईशबले जल्पाकि! अह कामुक इति ते वचनं कश्श्रद्दधाति। अकलंको मच्छीलचंद्रः। निरवद्यस्सदाचारः। कर्कश आत्मसंयमश्च। त्वया मयि पातितं

मिथ्यापवादं कः प्रमाणयति । यदि त्वं मच्छन्दानुवर्तिनी मां रमयसि विमोक्षयिष्याम्य ते भ्रातरं । नोचेत् श्वएव शूलमारोपयिष्यते । त्व तावद्यथेष्टं जल्प । मत्कल्पितकपटप्रबन्धेन मय्यारोपितमवर्णं परिमार्ष्टुं शक्नुयाम् । श्वः प्रत्युत्तरं देहि मे । इदानीं साधय । ”

अथ ईशबला “कस्य पुरत एतन्निवेदयामि । एवं प्रभं जनो मयि क्रूरनिश्चयस्संवृत्त इत्युक्ते को मा विश्वसेत् । इति ” ब्रुवंती भ्रातरं दिदृक्षुर्बन्धनागारमुपससाद । तत्र भ्रातरं कलादं अस्मै मोक्षधर्मानुपादिशन्तं यतिवेषधारिणं राजानं च ददर्श । मंदारिका च तत्रैवान्यस्मिन्नपवरके राज्ञा कलादवदुपादिश्यमाना ददृशे। तावुभावपि तेन राज्ञा सम्यग्बोधितौ स्वकृतापराधौ निंद्य इत्यभ्युपेयतुः । तयोः कामुकयोर्विशेषतो मंदारिका अश्रुपर्याकुलेक्षणा अयशोभाजनमात्मानं विनिदन्ती स्वापराधमभ्युपगम्य “अहमेव कलादादधिकतरं गर्हापात्रमस्मि संजाता । तस्यानार्य प्रार्थनां प्रीत्या अंगीकृत्य तन्मनोरथपूर्तिं निरवर्तयम् । प्रथमत एव मया तत्प्रार्थना निषिद्धाते चे दियं दुर्दशा मम नापतेदेव । ”

तत ईशबला कलादाध्युषितं चारकभागं प्रविश्यात्रत्यानां सर्वेषां शिवमस्त्वित्यब्रवीत् । यतिवेषधारी राजा तद्वचो

निशम्य कः कोत्र भोः इत्यब्रवीत्। ईशबलां विलोक्य। प्रविश वत्से । स्वागतमस्तु ते ।

ईशबला—भगवन् ! कलादेन सह द्वित्राणि पदानि संभाषितुमनुज्ञां देहीति याच्यमानो राजा तामनुमेने । तदनु तयोस्संकथा रहसि श्रोतुमभिलषन् स राजा काराध्यक्षानुमत्या परैरलक्षितस्तत्पर्यन्त एव तस्थौ ।

कलादः । भगिनि ! किमभून्मत्सन्देशार्थः । अपि लब्धस्समाश्वासनहेतुः ।

ईशबला—सज्जो भव स्वर्लोकप्रस्थानाय । श्वः प्रातरेव त्रिदशालयं प्रस्थाप्यसे ।

कलादः किं नास्त्यत्र प्रतीकारः ।

ईशबला—अस्ति किं चित् । यदि तदनुजानासि चारित्रभ्रंश एव पर्यवस्येत् । वज्रलेप इवायं कळंक आसप्त पूरुषं न मुंचति नः कुलं ।

कलादः—भगिनि ! न चेद्रहस्यमाख्याहि मे वक्तव्य-मर्थं । स्पष्टतरं ।

ईशबला—भ्रातः ! त्वत्पुरतो वक्तुं बिभेमि । कम्प-तीव मे गात्रम् । निष्कळंकशीलसम्पदो जरत्तृणलघीयः क्षण-भंगुरं जीवितं त्वन्मतेऽधिकतरमिव प्रतिभाति किं त्वं मर्तु-

कामोसि । प्रायशो लोके सर्वप्राणभृतां जीविताशा गुर्वी । मरणसमये महासत्त्वराशिरपि यावतीं यातनामनुभवति तावतीं क्रिमिरपि ।

कलादः । किं मामेवं ह्लेपयसि । एवं विधेषु प्राणसंकटेषु कुसुमसुकुमाराङ्ग्याः प्रमदायाः परिच्छेदं कलादस्स्वीकरिष्यतीति किं तर्कयसि । प्रियामिवोपगच्छामि मृतिम् ।

ईशबला—इदानीं मद्भ्रातृसदृशं ब्रूषे । विमलयशसो मातृपितुरनुरूपः पुत्रोसि । नूनं म्रियस्व कलाद ! । धर्मध्वजस्यास्य राजप्रतिनिधेः प्रार्थना मयानुवर्तितापि त्वामयं विमुंचतीति किं मन्यसे । यद्यय वधदंडो मय्यापतेत्तदा त्वद्रक्षणाय तृणमिव मत्प्राणान् दद्या ।

कलादः—प्रियभगिनि ! भृशमनुगृहीतोस्मि । महान्प्रसादो मयि त्वया दर्शितः ।

ईशबला—भ्रातः श्वो मर्तु सज्जो भव ।

कलादः—निधनं तु मनुष्यस्य महद्भयं जनयति ।

ईशबला—चारित्रध्वंसः कुलपुत्राणां जीवितं जुगुप्सिततरं करोति ।

एवं स्वसृ वचांसि श्रुत्वापि कलादो मरणभयविधुतहृदयसार इतिकर्तव्यतामूढः प्राणपरीप्सया आचक्रन्द ।

भगिनि ! मां संजीवय । जिजीविषुरस्मि । भ्रातृत्राणाय कृतस्येनसोपि पुण्यफलमेव विदध्यादीश्वरः ।

ईशबला—अरे रे कृतघ्न । कुलपांसन ! आत्मगौरवावमानिन् भगिनीमानहानेर्निजप्राणांस्त्रातुमिच्छसि । धिक्त्वामनात्मनीनम् । त्वं मद्भ्राता सद्वृत्त इत्येतावन्तं कालं व्यश्वसम् । स्वजनव्ययेनापि भगिनीमानरक्षणमेव कर्तव्ये कथमेवं विपरीतमाचरसि । शृणु ईशबले मद्वचनं इति स्वप्राणरक्षणलोलुपे कलादे कंचिदन्योपायं वक्तुमुपक्रमति राजा तत्र प्रविश्य प्राह । कलाद ! युवयोर्भ्रात्रोस्संकथा एकांतस्थितेन मया श्रुता । न कदाचित्प्रभंजनस्त्वत्सोदरीं दूषयितुममंस्त । अपितु तस्या मनः पारिशुद्ध्यं परीक्षितुमेवमुक्तवान । एषा तु विशुद्धचरिता । स्वप्रार्थनाप्रत्याख्यानेन परं हृष्टवान । भवेत् । मासौ त्वा क्षमत इति संस्थाः । ततो भगवद्गुणानुसंधानेनैवामुमवशिष्टमल्पकालं यापय । प्रतीक्षस्व मृत्युम् । अथ कलादो जातानुशयः प्राह । मद्भगिन्याऽहं क्षंतव्यः । नाहमितः परं जीवितुमुत्सहे । एवं कलादो निजापराधं वि चिंत्य लज्जाविषादाक्रान्तमानसो बभूव ।

अथ सराजा ईशबलायाः पुरतः क्षणं स्थित्वा तस्या अस्खलितसच्चरितं श्लाघमान इदमाह । त्वादृशः प्रकृतयो

लोके रूपाविसंवादिगुणा भवंति । यत्राकृतिस्तत्रगुणा इति लोकोक्तिस्त्वय्यन्वर्था ।

ईशबला—हन्त । अनेन दुष्टप्रतिनिधिना सत्यसन्धो राजा कथं वंचितः । यदि निवर्तते स्वदेशं प्रथममहमेव तन्निकटं गत्वा तस्य दुष्टस्य सर्वादुश्चेष्टास्तस्मै निवेदयामि करिष्यमाणं प्रभंजनस्य दोषोद्घाटनमिदानीमेव कुर्वाणा ईशबल तं राजेति नाजानात् ।

राजा—एतावता नायमतिदोषी भवेत् । एवं स्थिते सतीदं सर्वं मिथ्यापरिकल्पितमिति प्रभंजनस्त्वदभियोगं निराकरोति । तस्मात्त्वमीशबले मदुपदेशं सावधानं शृणु । येन त्वं मंदभागिन्या मन्दारिकायास्सर्वलोकश्लाघनीयामुपकृतिं कर्तुं मृत्युमुखात्त्वद्भ्रातरं विमोचयितुं आत्मनो विशुद्धशीलं रक्षितुं प्रोषितं राजान तोषयितुं च शक्नुयाः

ईशबला-ऋते अकार्याद्यद्यदुपादिश्यते तत्सर्वं कर्तुमुत्सहे।

राजा—सत्यधनास्सदा धैर्यशालिनो भवन्ति । ते न कुतोपि बिभ्यति । वत्से शृणोषि सुवदनां नाम प्रधारकस्य भगिनीम् । यस्संग्रामकोविदस्समुद्रे निमग्नो ममार ।

ईशबला—आर्य श्रुता मया सुवदनेति । तां साध्वीति जना व्यवहरन्ति ।

राजा—इयमेव प्रभंजनस्य धर्मोदारा इति विद्धि। अस्या भ्राता प्रधारको विवाहदत्तं यौतकधनमाहरन् प्रवहण-भंगेन मध्येसमुद्रं निममज्ज। पश्य—अस्यास्सुवदनायाः कियतीगरीयसी विपदापतिता। न केवलं भ्रातृवियोगः भर्तृ-वि योगोपि समभवत्। तस्या भर्ता यौतकद्रव्यनाशं मनसि निधाय तच्चारित्रे मिथ्यापवादमारोप्य ता तत्याज। एवमियम-नाथा संवृत्ता। प्रभंजनस्यान्याय्यनिर्दयत्वेनैतयापि भर्तरि वीता-नुरागया भवितव्यम्। किन्तु न तथा प्रत्युत। तस्या भर्तृप्रेम-नदीपात्वस्थप्रतिबद्ध नदीस्रोतइवोत्कूलितमभूत्। एवमुक्त्वा स राजा स्वचिंतितोपायं तस्यै विशदतरं व्याचचक्षे। ईशबले! त्वं तावदद्य निशीथे प्रभंजनसकाशमभिसर। यथेष्टं मा निर्वि-शेति वद। अनेनोपायेन त्वदग्रजन्मनोऽपराधं प्रभंजनः क्षमेत। तमः पिहितदिङ्मुखेऽर्धरात्रे सुवदना ईशबलावेषं धृत्वा संकेतस्थानं प्राप्य प्रभंजनं रमयेत। सोप्यंधकारे तामी-शबलेति विश्वसेत्। वत्से! एतावत्कर्तुं माभैषीः। प्रभंजन-स्तस्याः पतिः। चिरवियुक्तयोर्दम्पत्योरेवं संयोजने न कोपि दोषः।

अथेशबला राजोक्तं सर्वमुपदेशं सम्यगवधार्य यथादिष्टं कर्तुं प्रतस्थे प्रथमं सा स्वाभिप्रायं निवेदयितुं सुवदनासविधं जगाम। अयं यतिवेषधारी राजा पूर्वमेनां दुःखभागिनीं सुव-

दनां सकृद्दृष्टवान् । दुःखोपशामकवचनैस्तां समाश्वासयन् तन्मुखेनैव तस्या दुरवस्थां शुश्राव । साप्ययं परमधार्मिकस्तीर्थभूत इति तस्मिन् राजनि जातभक्तिरेतत्कार्यं तदुपदेशानुरोधेन कर्तुमन्वमंस्त ।

तत ईशबला प्रभंजनस्यावसथं गत्वा तस्मै संकेतं दत्वा ततः प्रतिनिवर्तमाना राजाज्ञया सुवदनागृहमियाय । तत्र स्थितो राजा तां दृष्ट्वा प्राह । युक्तकाले समागतासि । प्रतिनिधिसकाशे का वार्ता । तदा ईशबलाकल्पितोपायनिर्वहणविधा राज्ञे एवमेवमिति कर्णेऽकथयत् । प्रभंजनस्य गृहपर्यन्तसीम्नि प्राचीनीकृतेष्टकानिर्मितभित्तिपरिवेष्टितो निष्कुटः यं पश्चिमेन द्राक्षवाटिकास्तिद्वारवती । इमे द्वे कुंचिके प्रभंजनेन दत्ते । अनयोः प्रथीयस्या उपवनद्वारमुद्घाट्यते । कनीयस्या परया गोस्तनीक्षेत्रान्निष्कुटोपस्थायीमार्गोऽपाव्रियते । सूचिभेद्यतिमिरे निशिथे तत्र समागत्य त्वां शब्दापयामीति मया प्रतिश्रुतः प्रभंजनः । मद्भ्रातृप्राणरक्षणं सोपि मह्यं प्रतिशुश्राव । तत्प्रदेशमहं सुष्ठुलक्षयम् । सोप्यतिप्रहर्षेण तन्मार्गं द्विवार ममादर्शयत् ।

राजा—वत्से एतादृशवेषं धृत्वाऽगमिष्यामीति किं नावोचः । यतस्सुवदनापि तद्वेषं धारयेत् ।

ईशबला—न किमप्युक्तम् । निशीथेऽभिसरिष्यामीत्येतावदेवोक्तम् । मुहूर्तमात्रमेव त्वया सह स्थास्यामीति न्यगदम् ।

केनचित्किंकरेणानुयाताऽगमिष्यामीति तमवदम् । मद्भ्रातृ-सकाशं गमिष्यामीति तस्याकथयम् । तस्या उपायनिर्माण-चातुर्येण राजा भृशं प्रहृष्टोऽभूत् । सुवदनां वीक्ष्य ईशबला प्राह । सुवदने तस्य निकटे मौनं भज । तत्सकाशात्प्रत्या-वृत्तिसमये "मद्भ्रातरं मान्यस्मार्षीः" इति मंदं वद ।

अथ तस्या निशायां मदुपदेशमंगीकृत्य मम मानं मद्भ्रातुः प्राणानरक्षदिति कृतज्ञया भृशं हृष्टया ईशबलयाऽनु-याता सुवदना संकेतस्थानमभिययौ । तस्या आगमनमेव प्रती-क्षमाणः प्रभंजनः तस्थौ । राजापि कलादस्य जीविते संशयालु-स्तत्क्षेमविधित्सया बन्धनागारमाययौ । राजागमनं कलादस्य क्षेमं करमभूत् । तत्र नृपो यदि नागमिष्यत् तन्निशि कलादोऽह-निष्यत । राज्ञि बन्धनागारद्वारं प्रविष्टमात्रे स नृशंसो राज-प्रतिनिधिः कलादस्य शिरश्छित्वा श्वः प्रातस्सूर्योदयात्प्रागेव मदन्तिकं प्रेष्यतामिति चारकाधिकारिणे आज्ञापत्रं प्राहिणोत् । किंतु राजा तस्मिन् दयालुस्तदाज्ञाकरणं निवार्य प्रभंजनमति-सन्धातुं पूर्वेद्युश्चारके मृतस्य कस्य चिन्मनुष्यस्य शरीराच्छिर अपाकृष्य प्रेषितवान् ।

पुनरयं राजा यथा प्रभंजनस्याज्ञाकरश्चारकाध्यक्षो जात-विश्वास एतत्कार्यं कर्तुमंगीकुर्यात्तथा चिंतयित्वा राज्ञस्स्वहस्ता-

क्षरैर्विलिखितं तस्यैव मुद्रया मुद्रितमेकं लेखं तस्यादर्शयत्। सतल्लेखं वाचयित्वा "असौ योगी प्रोषिताद्राज्ञः कंचिद्रहस्य-सन्देशं प्राप्यैव एवं कर्तुं मां नियुनक्तीति निश्चित्य कलादस्य प्राणान्नहारितवान्। मृतकल्रेबरान्मूर्धानमपाच्छिद्य प्रभंजनाय प्रजिघाय।

अथ स राजा प्रभंजनाय स्वनामांकितमेकं लेखं प्रेषि-तवान्। तस्मिन्स एवमादिदेश।

"प्रभजन! स्वस्त्यस्तु ते। कैश्चित्कारणैरहं यात्राया व्यरं-सिषम्। श्वः प्रातरेव वियन्नगरी मागमिष्यामि। पुर्या घट्ट-कुटीसमीपे मदागमनं प्रतिपालयंस्तिष्ठ त्वत्तो राज्यधुरं पुनरा-हरिष्यामि। अस्मद्राजा प्रवासान्निवृत्य पुनस्स्वपुरीं प्राप्तः। अद्यप्रभृति स एव राज्यतन्त्रमवेक्षते। ये केचिदनीत्या अन्या-येन वा अधर्मेण वा पीडिता दुःखोपशान्तिमभिलषन्ति ते सर्वे श्वः प्रातरेव राज्ञो नगर प्रथमप्रवेशसमये राजपथे विज्ञापन-पत्रिकाहस्ता राजदर्शनाय समायान्तु" इति पुर्यां सर्वत्रोद्घुष्य-तामिति"

ततस्सा ईशबला महति प्रत्यूष एवोत्थाय भ्रातुः क्षेमं जिज्ञासमाना बन्धनागारं जगाम स्वचिन्तितरहस्यकार्यगोप-नाय "भ्राता ते निषूदित" इति तस्यै निवेदनं वरमिति निश्चि-

त्य तस्या आगमनं प्रतिपालयंस्तत्रैव स्थितः । अथेशबला राजानमासाद्य भ्रातुर्विमोचन पत्रिका प्रभंजनेन प्रेषिता वा नवेति पप्रच्छ । राजा तदुपरि "प्रभंजनस्तव सोदरमस्माल्लोकादमोचयत् । तस्य शिरश्छित्वा राजभटैः प्रभंजनायोपहारीकृतमित्याह । अथाशनिपातनिष्ठुरं तद्वचनं निशम्य ईशबला मूलच्छिन्ना कदलीव भूमौ निपपात । मोहमुपागता च । क्षणान्तरे लब्धसंज्ञा सोरस्ताडं रुरोद । "हा कलाद कलावन । कथमस्तमितोऽसि । वज्रमयहृदयास्मि मंदभागिनी । यन्न विदीर्ये शतधा वियुक्ता त्वादृशप्रीतिभाजनेन सोदर्येण । हा कलाद ! त्वन्मुखचन्द्रविरहितमिदं जगदन्धकारावृतमिव मे प्रतिभाति । प्रभंजन ! प्रभंजन एवासि कलादतरुभंजने । दर्शितस्ते हृदयसारः । बहुनामोपकृतमीशबलायास्त्वया चिरमेधि । राजा । वत्से ! समाश्वसिहि ममाश्वासिहि । किं रोदनेन । एतादृशी लोकयात्रा । जीवलोकं नश्वर इत्यवेहि । अचिरद्युतिचंचला बन्धुसमागमाः । तामेवमाश्वास्य राजा पुनराह । वत्से मारोदीः अचिरादेवैतद्देशस्य पालको विजयसेनस्स्वपुरीं प्रत्यागमिष्यति । तदा तत्पुरतः प्रभंजनेन कृतमन्यायं निवेद्य वैरपारं गन्तुमर्हसि । ततस्तितीक्षस्व कंचित्कालम् । माभैषीः । एवमीशबलामुक्त्वा राजा सुवदनान्तिकमेत्य यथा सा स्वकार्यं निर्वोढुं शक्नुयात्तथा तस्यै इतिकर्तव्यतामुपदिदेश ।

अथ स राजा जयसेनो योगिपरिच्छदं विधूय राजार्ह-स्रग्वासोलंकारैर्भूषितसर्वांगो निजागमनसंतुष्टैर्भृत्यामात्यसुहृज्जनैः प्रत्युद्यातः । वियत्पुरीद्वारमाससाद । तत्र प्रभजनोपि समागत्य राज्यधुर राज्ञे न्यासमिव विधिवत्समर्पयामास ।

अथेशबलापि स्वदुःखप्रतीकारायाभ्यर्थयमाना राजसन्निधिमेत्य एवं व्यजिज्ञपत् । महाराज । धर्मस्वरूप ! विजयस्व । कन्यादूषकस्य कलादस्य भगिन्यहम् । तस्य वधदंडो विहितः । क्षम्यतामसाविति प्रभजनस्य पुरतो मया विज्ञप्तमपि अरण्यरुदितप्रायमभूत् । कथमह तत्रभवन्तं मद्भ्रातृप्राणरक्षणार्थमनुनीतवती । कथं स सर्वां मदभ्यर्थनां निराकृतवान । कथमहं तद्वचसा प्रत्युत्तरमदां तत्सर्वमधुना भवदग्रतो विस्तरेण निवेद्य कि फलम् । महती खल्वियं गाथा । तत्सकलं ह्रीशोकयोः पर्यवस्यति । दुर्विनीतोऽयं प्रभंजनो मामकामयत । यदि त्वं मदभिलषितं न करोषि त्वद्भ्रातरं न मुंचामीति प्रत्युत्तरं दत्तवान् । अयशोदायक ह्रेपकं अकार्य कर्म करणीयं वा नवेति मनसि बहुधा विचिन्त्य अंते सोदरस्नेहपाश भेत्तुमशक्नुवंती मम चारित्रभ्रंशमप्यविगणय्य तन्मनोरथमपूरयम् । तथाप्ययं खलाग्रेसरस्स्वकृतप्रतिज्ञामपि भंक्त्वा तत्प्रातरेव मद्भ्रातुश्शिरो निकर्तुं घातकपुरुषं समाज्ञापयत् । राजा तत्सर्व

वृत्तान्तं श्रुत्वाऽविश्वसन्निवालक्ष्यत । यथान्यायं राजशासनेन दंडितस्य भ्रातुर्वियोगशोकविकारेणाविलहृदया नष्टविवेका इयमीशबला किमप्यसंगतं जल्पतीति प्रभंजनोऽब्रवीत् । ततस्वदुःखं प्रभवे निवेदयितुकामा समाययौ सुवदना ।

सुवदना—महाराज ! प्रभेव भास्करस्य वाणीवार्थस्य प्रभंजनस्यानन्या जायास्मि । ईशबलोक्तं सर्वं मृषोद्यमेव । तस्मिन्निशीथसमये तदाक्रीडे तेनोपभुक्ता तरुण्यहमस्मि नत्वीशबला । यदीदं सत्यं भवेत् रक्षतु चिरं मामीश्वरः । नोचेदत्रैव भूतले गर्तं विरच्य निखनंत्वार्यमिश्राः ।

तत ईशबला स्वोक्तिष्वनृतलेशमपि नास्ति । सर्वं सत्यमिति सशपथं समर्थयितुमयतत । सुवदनेशबले उभे राजकृतोपदेशमनुस्मृत्यैव एवमूचतुः । तदुक्तकथयोर्वर्तमानं परस्परविसंवादं बोद्धुं नाशक्नोत्प्रभंजनः । प्रत्युत तयोरुक्तिविसंवादेनात्मन्यारोपितकलंकोपि प्रमृज्येतेत्याशंसमानः आत्मनो निर्दोषतामभिनयन्निदमुवाच । "एतयोरसंबद्धप्रलापं श्रुत्वा उदेति मम हासः । महाराज । एतयोः परस्परासंबद्धभाषणैस्सत्यं विकृतिमेति मे मनः । नेतःपरं क्षन्तुं शक्यते । कस्यापि प्रेरणया एवमेते प्रलपत इति तर्कयामि अतस्तत्त्वं निरूपयितुं धावति मे मनः ।

राजा—आर्य ममापि तथैव मनसि वर्तते। तत्त्वं विमृश्य योह्यपराधी तं दंडयिष्यामि।

आर्य! अस्खलित! प्रभंजनेन सहितो भवान् य एन-मपवादं प्रभंजने समारोपयत् तं जानातु। एतत्सर्वं तस्य यतेरेवोपजाप इति जनस्संभावयति। तदानयनाय भृत्यः प्रेषितः। तस्मिन्नागते यथाभिरुचितं दंडो विधीयते। कार्यांतरव्यग्रतया मयाप्यन्यत्र गंतव्यम्। ततो मुहूर्तं त्वत्पार्श्वं जहामि। प्रभंजन! त्वं तावदत्रैव तिष्ठ। एतद्वर्ण-स्य तत्त्वमनिरूप्य स्थानान्न चलेः। इत्थमुक्त्वा राजा अन्यतश्च-चाल। तस्मिन्नारोपितमपवादं प्रमार्ष्टुं तमेव प्राड्विवाकं मध्य-वर्तिनं च कृत्वा राजा अन्यतो गत्वा राजवेषं विधूय पुनर्यति-वेषधारी प्रविवेश। अस्खलितप्रभंजनयोः पुरतः तस्थौ। प्रभं-जनो मिथ्याभिशस्त इति मत्वा अस्खलितो यतिमेव मुवाच। भगवन्नेहि। प्रभंजने निन्दामारोपयितुं सुवदनेशबलयोः किं त्वमुपादिशः।

यतिः—राजा क गतः मद्वचांसि तेनैव श्रोतव्यानि।

अस्खलितः—सोप्यत्रैव। वयमेव श्रोष्यामस्त्वदुक्तं।

यतिः—न्यायं विचार्य सधैर्यं वद। विवेकविश्रांतस्ते राजा। यमीशबला अभियुयोज तस्यैव हस्ते तां समर्पितवान्।

परं तु बह्वो दुराचारा दृश्यंते तस्य राज्ये । एवमनेकधा भूपतिं दूषयंतं तं यतिं वीक्ष्यास्खलितः क्रोधाविष्टः "राजनिंदकं त्वां बन्धनागारं प्रेषयामी" त्यभाययत् । तदुपरि राजा तत्र स्थिताना सर्वेषां विस्मयं प्रभजनस्य सम्भ्रमं चोत्पादयन् यतिवेषं परिहृत्य प्रच्छन्नराजभावमात्मानं प्रकाशितवान् । ततस्सर्वे तं दृष्ट्वा सम्भ्रान्ता ।

अथ राजा प्रथममीशबलामाहूय एवमवादीत् । वत्से ! ईशबले ! इत एहि । युष्मद्यती राजा संवृत्तः । बाह्यवेषेणैव परिवर्तनं प्राप्तः नत्वान्तरेण मनसा । तवैवोपकरिष्यामि ।

ईशबला—महाराज—क्षमस्व मा । अहं तव किंकरी । अज्ञातमहाराजभावा भवन्तं प्राकृतं मत्वा मत्कर्मणि नियुक्तवत्यस्मि ।

राजा—ईशबले । अहमेव भवत्या क्षंतव्यः । त्वद्भ्रातरं वधाद्विमोचयितुं नाशक्नुवम् ।

स्वकुत्सितकर्मणा राजा रहस्साक्षी बभूवेतीदानीं ज्ञात्वा प्रभंजनः प्राह । महाराज ! अहमेवात्र पापीयान् । जगतः कर्मसाक्षिणेव मत्कर्मणां साक्षिणि महाराजे जाग्रति सति पापरतिरहं न केनापि लक्षित इति मन्ये । तस्मान्महाराजो मा विपु-

ळीकरोतु ममापयशः । अभ्युपपन्नो मयापराधः । अविलम्बेन वधदंडमेव महाराजं प्रार्थये ।

राजा—प्रभंजन ! सार्वलौकिकस्तेऽपराधः । कलादो यच्छूलमारोप्यते त्वमपि तदेव नेष्यसे । सत्वरं तेन सहगच्छ । सर्वं ते द्रविणजातं त्वज्जाया सुवदना गृह्णातु । साधीयांसं भर्तारमधिगच्छति ।

सुवदना—महाराज नाहमन्यं कामये ।

ततस्सुवदना राज्ञः पादयोः पतित्वा भ्रातृप्राणरक्षार्थै यथेशबला प्रार्थयत प्रभंजनं तथा पतिप्राणभिक्षार्थै राजानं प्रार्थितवती ।

अथ राजा प्राह । कलादस्य कृते प्राणांस्त्यक्ष्यति ते भर्ता तत ईशबला राज्ञः पादयोर्निपत्य यथास्मद्भ्रातरं भवान्पर्येजीवयत्तथा वध्यमेनं प्रभंजनमपि रक्षतु । यदि महाराजः प्रसादोन्मुखः । युष्मत्प्रवासे स चिरं धर्मेण प्रजाः पर्यपालयत् । मद्दूषणोद्योगएव तस्य शीलेकळंकः । तस्मादयमपि जीवतु । अथ राजा सद्वृत्ताया ईशबलायाः प्रार्थनया संतुष्टः कारागारस्थितं कलादमानेतुं भृत्यं प्रेषयामास । सोपि तत्र मृत्युमुखे निपतितोस्मीति विषीदन् स्थितः । जीवति ते भ्रातेति वार्तया

तस्या उत्साहं वर्धयन् ईशबला प्राह । ईशबले यन्मया कलादापराधः क्षान्तः तन्मे धारयसि पारितोषिकम् ।

ईशबला—महाराजः किं मत्तो वृणीते ।

राजा—सुंदरि । किमन्यत्ते पाणिपंकजात् । अद्यप्रभृति त्वं मदीयासि । क्रीतासि मया भ्रातृरक्षणपण्येन । सोपि ममापि भ्राता । इदानीं प्रभंजन आपदुत्तीर्णमात्मानममंस्त । अथ राजा तन्मुखविकासं ज्ञात्वा तं वाचा परितोषयन्नाह । प्रभजन ! इतः परं त्वत्कलत्रे त्वयाऽविच्छिन्नप्रेमबंधेन वर्तितव्यम् । तस्याः पातिव्रत्यमाहात्म्येनैव त्व पुनः प्रतिष्ठितो जीवलाके । इत्यवैहि । सुवदने भद्रमस्तु ते । प्रभंजने द्विगुणा प्रीतिमुद्वह । त्व विशुद्धेत्यहं प्रतिजानीयाम् ।

प्रभंजनः—महाराज ! त्वत्प्रसादेन परमनुगृहीतोस्मि । कथं महाराजो बहिर्भीषणत्वेन प्रतीयमानोप्यन्तः कृपारसघनएव ।

अथ राजा मन्दारिकां विवोढुं कलादं समाज्ञापयत् । ईशबला गुणाकृष्टचित्तस्स्वयं ता परिणेतुं निश्चिकाय । ईशबलाप्यगृहीतवक्त्रावकुंठनव्रतत्वाद्विवाहायाभ्यनुज्ञाता । यतिवेषनिगूढात्मभावेन भूपतिना स्वयमुपकृता ईशबला राजमहिषीत्वरूपमान्यपदवीं प्रति श्रूयमाणा प्रीतिपूर्वकमङ्गीचकार । एवं

साध्वीत्वमहिम्ना वियन्नगरी राज्यलक्ष्म्यास्सपत्नीकृतायास्तस्याश्चारित्रोदाहरणेन सर्वा वियन्नगरीसुन्दर्यः प्राचीनदुराचारं विहाय यथाकालं कुलीनान् यूनः विधिवत्परिणीय तैस्सह गार्हस्थ्यसौख्यमन्वभूवन् । प्रजासु दयापरस्स राजा साध्व्या ईशबल्या सह संगतः तृतीयपुरुषार्थोदधिपारदृश्वा चिरं राज्यं प्रशासत् वागतीतानिर्वृतिमवाप ।

॥ समाप्ता कृतप्रतिकृतिः ॥

---

## 9 Twelfth night
## (द्वादशी रात्रिः)



1 Dramatis Personæ Orsino = आर्यसखः—हेला-नगराधिपतिः.

2. Sebastian = श्रीभासितः लवङ्गिकायाभ्राता.

3 Antonio = अन्तनयः—नौकाध्यक्षः.

4 Olirıea = रत्नमाला

5. Viola = लवङ्गिका.

6. Illyria = हेलानगरम्

# ॥ द्वादशरात्रिः ॥

## TWELFTH NIGHT.



आसीदेकदा कुसुमपुरे श्रीभासितोनाम कश्चिद्युवा लवङ्गिकेति काचित्तरुणी तस्य भगिनी । यमजत्वात्तौ सदृशाकृती । वेषभेदादृतेऽयं पुमानियं स्त्रीतिपृथग्विविच्य ज्ञातुं जना न शेकुः तयोर्जननकाल इव प्राणविगमकालोपि युगपदुपस्थितः । तयोरेकदा समुद्रे नौकया गच्छतोः भग्नः प्रवहणः । तदधिष्ठिता नौका दारुणजंझानित्केरित महातरङ्ग विक्षोभविपर्यस्ता जलधिजलनिगूढगंडशिलाभिघातेन विशीर्णा । पोतस्थजनताया अल्पिष्ठैव सङ्ख्या सजीवा बभूव । नौकाध्यक्षो विपद्विमुक्तकतिपयनाविकसहितः उडुपेन हेलानगरतीरभूमिमाससाद । तैस्सह लवङ्गिकापि क्षेमेण तीरभूमिमानायि । सात्वात्मन आपन्निस्तरणानन्द मप्यधरीकृत्य नष्टं भ्रातरमन्वशोचत् । नौकाध्यक्षो विलपन्तीं ता दृष्ट्वा एवं समाश्वासयत् । " वत्से ! मा विषीद, जीवति ते भ्राता नौकाभङ्गसमये कूपदण्डे दृढतरम् निबद्धे वीचिमालाभिरूह्यमानश्चिरम् मया दृष्टः । अनेन वचसा लवङ्गिका भ्रातृजीवने समुदितप्रत्याशा जहौ चिन्ताम् । स्वस्थानादुन्मूलिता लतेव विदेशे वर्तमाना लवङ्गिका विनोदनो-

पायमलभमाना तद्देशवृत्तान्तम् नौकाध्यक्षमपृच्छत् । नौकाध्यक्षः । अहमेतन्नगरोपशल्यवासी ।

लवङ्गिका—किं नामधेयोऽस्य नगरस्य राजा ।

नौका—उदारप्रकृतिरुदग्रभावः कुलीन आर्यसम्मतोऽन्वर्थसंज्ञ आर्यसखोनाम राजा पालयतीमां पुरीम् ।

लवं—श्रुतोऽसौ मया मम पित्रा बहुशस्स्तूयमानः । तत्कालेप्यपरित्यक्त प्रथमाश्रम इति ।

नौका—अद्यापि तदवस्थ एव स इति तर्कयामि । स्वदेशं विहाय परदेशेष्वाहिंडमानस्य मम मासो यातः । तस्मादस्य वृत्तान्तं सुष्ठु नावगच्छामि । तथापि मया ज्ञातम् किञ्चिद्वच्मि । कतिपयदिनेभ्यः प्रागार्यसखो राजवल्लभस्य भीमवर्मणो दुहितरि रत्नमालाभिधानायाम् बद्धभाव इति जनश्रुतिश्चलिता । प्रायेण लोके महान्तो यदाचरन्ति तदेव मुखरयति पृथग्जनान् । तस्यारक्षणे स्वसुतं नियोज्य पिता पञ्चत्वमगात् । तत्सुतोप्यचिरादेव पितरमन्वयात् । अग्रजपितृभ्यामचिरकाले वियुक्ता रत्नमाला शोकसंविग्नमानसा मनुष्यदर्शनं तत्संवासं च परिहृत्य विविक्ते तिष्ठतीति मया जनमुखाच्छ्रुतम् । अथैतच्छ्रुत्वा लवङ्गिका भ्रातृनाशखिन्नतया रत्नमालया समदुःखा तया सह निवसन्ती स्वायुश्शेषं यापयितुं निश्चित्य पोताध्यक्ष-

मब्रवीत् । आर्य ! कृपया मां रत्नमालायास्सन्निधिं प्रापय । तत्र निवसन्ती तत्परिचर्यया कालं नयामि ।

नौका—आर्ये ! एतदतीव दुष्करम् । सा तु भ्रातृमरणदिवसमारभ्य न कमपि स्वमन्दिरेप्रवेशयितुमिच्छति राजापि तत्रालब्धप्रवेशः ।

ततो लवंगिका पुंवेषधारणेन राजानमार्यसखं कि कर्तुमचिन्तयत् । तादृशे वयसि वर्तमानाया अनुपारूढयौवनायास्तस्याः पुरुषवेषधारणेन बालइति व्यपदेशमवाप्तुं नाश्चर्यमिवाभाति । तथापि विदेशं प्रापिता अनाथा युवतिजनासामान्यरूपलावण्या सा कथमप्यात्मानं निगूह्य रक्षितुं चिंतितवती ।

अथ सा नौकाध्यक्षं सुशीलमार्जवोपेतं जातविस्रंभं विज्ञाय स्वाशयं तस्मै व्यवृणोत् । सोऽपि तस्यास्साहाय्यं कर्तुमंगीचकार । लवंगिका तस्य हस्ते किंचि द्रव्यं दत्वा रागे परिमाणे च स्वसोदरवासस्सदृशानि वासांसि क्रेतुं प्रार्थयत । ततो लवंगिका तदानीतैर्वस्त्रैः पुरुषवेषं विधाय स्वभ्रातेव ददृशे । जनास्तां भ्रान्त्या श्रीभासितइति व्यवजह्नुः सजीवन्समुद्रेलब्ध इत्युपरिष्टाद्वक्ष्यते ।

लवंगिकायासुहृदयं नौकाध्यक्षो वेषेण तां पुरुषं कृत्वा राजसभाया लब्धप्रवेशत्वादिमां "शेखरकनामा कश्चिदयं

बालस्तवोपचरिष्यती"ति राज्ञे विज्ञाप्य उपायनतया तस्मै प्रजिघाय। स राजा तस्य तरुणस्य मुखश्रिया शरीरसौष्ठवेनच विस्मितस्स्वबालकिंकरेष्वन्यतमं चकार। तदेवानया कांक्षितम्। स्वाधिकारसंबद्धेषु कृत्येष्वति जागरूकतया क्षिप्रं निर्वर्तयन् छायेव भूवल्लभस्य पार्श्वमविमुंचन्नियोगकाले "सज्जोस्मि भृत्यः किमाज्ञापयतिदेव" इति वदन् प्रभुचित्तमन्वरजयत्। राजापि तस्य कर्मठतया भृशं हृष्टस्तं सर्वदा स्वपार्श्वचरमकरोत्। राजा शेखरके जात विस्रम्भतया रत्नमालाया स्वानुरागं तस्मै व्यवीवृतत्। सा मत्प्रार्थना मत्कृतोपचाराश्च निराकृतवती। अहं तस्या अननुरूपइत्याह। मम दर्शनादपि जुगुप्सते। किमहं करवाणि मन्दभाग्य इति।

एवं निर्दयायास्तस्या अलाभेनात्यंतं विरक्तोराजोचितान्मृगयादि विनोदान् दूरीकृत्य चिराभ्यस्तां खुरलीमप्युपेक्ष्य एकांते निषण्णः मदनोद्दीपकानि गीतानि निशमयन् मंदमारुतसंचारान्वीक्षमाणो कालं यापयतिस्म। पुरेव विदुषा राजवल्लभानां चगोष्ठीं नाध्यास्त दिवसं शेखरकेण संलपन्नासीत्। तदा असौ शेखरको राज्ञोनर्होनर्मसचिव इति सर्वे राजवल्लभा अमंसत।

रूपवता यूनां भूपतीना सेवाया रूपवत्यस्तरुण्यो नियुक्ता महान्तमनर्थं जनयन्ति। रत्नमालानुरागोन्मत्तेन राज्ञा कथितामात्मनो दशां श्रुत्वा लवंगिकापि समुदीर्णरागवृत्तिः किम-

प्यवस्थान्तरं नीता । एतादृशरूपसंपन्नस्य तरुणवयसोऽसाधा-रणसाम्राज्यभोगलालितस्य नरपतेः प्रार्थना रत्नमाला कथं प्रत्याचख्याविति लवंगिका आश्चर्यमवाप । तत एकदा "प्रव-रगुणविशिष्टे भवति पराङ्मुखी भूतायां रत्नमालायां यद्भवान् स्निह्यतीत्यनुचितमेतदिति राज्ञे अन्यापदेशेन निवेदयितुं निश्चि-त्यशेखरक एकदा एवमाह । "स्वामिन् रत्नमालायां भवानिव भवति या काचित्स्निह्यति यदि भवांस्तस्या प्रति प्रीतिं न करो-षिचेत् नमे त्वयि प्रीतिर्जायत इति किं तां न वदसि ? । अनेन प्रतिवचनेन तयापि संतुष्टया भवितव्यम् । इति । किं त्वार्य-सख एतद्युक्तिं नाभ्युपगच्छन्नाह । " यादृशो ममानुरागोयो-षिति तादृशोऽनुरागः कस्या अपि स्त्रियो मयि जायेतेति न मन्ये । गोष्पदपरिमाणे स्त्रीहृदये ममानुराग समुद्रो न माति । मयि रत्न-मालानुरागस्य तस्यां मदनुरागस्य च महदंतरं विद्धि । ततो लवंगिकाराजोदिते गौरवं दर्शयंत्यपि तत्सर्वं मृषेति मेने । राजा रत्नमालायामिव लवंगिकापि राजन्यत्यंतबद्धभावा बभूव । सा एवमाह । देव ! अहमपि जाने ।

आर्यसखः—शेखरक त्वं कि जानीषे ।

शेखरकः—पुंसि स्त्रियः कियाननुराग उदेष्यति तदहं सुष्ठुजाने ।

वयं तास्विव ता अप्यस्मासु निर्व्याजानुरागा भवन्ति । आसीन्ममैका भगिनी । सा कस्मिंश्चिद्यून्यनुरक्ता ।

शेखरकः—यद्यहं स्त्री अभविष्यम्। तदा आर्येऽनुरक्ताऽभविष्यम्।

आर्यसखः—किमभूत्तस्याः। शेखरकः। सानकदाचित्स्वानुरागमुज्जगार। किंतुकरिदन्तपांडुरकपोलेनाननेन निवेदित दुर्लभानुरागतया कृशांगी कीटदष्टेव लता शनैर्म्लानिमुपगता।

आर्यसखः—किं सा मनसिजरुजया पंचत्वमुपगता। किंतुराज्ञः पृच्छाया लवंगिका नोत्तरं ददौ। आर्यसखे निरूढमात्मनोनुरागं सूचयितुमेतां कथा कल्पयामास।

एवं तयोर्भाषमाणयोराज्ञा रत्नमाला निकटं प्रेषितः कश्चित्पुरुषः प्रविश्योवाच। विजयतां महाराजः। मया तत्र प्रवेशोनालभि। कितुचेत्थ्या सा इमां वार्तां प्रेषितवती। राजा। का सा वार्ता।

पुरुषः—अवधारयतु स्वामी। "वत्सरसप्तकात्प्रभृत्यहमसूर्यम्पश्या आसम्। सूर्यानिलादिभूतैरपि नमे मुखं दृष्टचरम्। मठवासिनीवान्यजनदृक्पातादात्मानं रक्षन्ती मृतं भ्रातरं चिन्तयन्ती केवलमश्रुधारा सम्पातार्द्रीकृतनिजापवरक कुट्टिमा कालं नयामीति।

राजा—लवंगिकां वीक्ष्य प्राह। शेखरक! मम हृद्गतं रहस्यं तव प्रकाशितं। तस्मादत्र त्वं रत्नमालागृहं गच्छ। तत्र

प्रवेशमलभमानोऽपि मा निवर्तस्व । स्थाणुरिव तद्द्वारे तिष्ठ यावत्प्रवेशाधिगमम् । यावन्मम प्रभोस्सन्देशं शृणोषि तावन्मम पादावत्रैवाचलप्रतिष्ठाविव भवत इति तां ब्रूहि ।" लवंगिका । लब्धप्रवेशेन मया सा दृष्ट्वा चेत्ता प्रति किं वक्तव्यं । राजा । तन्निष्ठं मदनुरागं तस्यै विवृणु । तस्यां मत्प्रेमाधिकृत्य चिरं भाषस्व । मम मनसिजव्यथां तत्पुरतो वर्णयितुं त्वमेवोचितः । बालकेन त्वया कथ्यमानं वृत्तांतं सावधानतया श्रोष्यति । वृद्धानां पुरतोजिह्लेति ।

एवं राज्ञा निर्बद्धा लवंगिका कथं चिद्रत्नमालानिकेतनं जगाम । सा तत्पाणिगृहीतीभवितुं स्वाशयं सूचयंती लवंगिकेयं दौत्यमवलंबितुमनिच्छन्त्यपि राज्ञो निर्बन्धेन रत्नमालानिकटं जगाम । तथाप्येतत्कार्यनिर्वहणायोद्युक्ता विश्वासेन तत्कर्म निरवर्तयत् ।

. अथ कश्चिद्युवा त्वद्दर्शनाभिलाषी द्वारदेशमध्यास्त इति भर्तृदारिकायै निवेदयेति लवंगिका चेटीमयाचत । चेटी । इदानीमस्वस्थशरीरास्मद्भर्तृदारिका । स्त्रियं वा पुरुषं वा द्रष्टुं नेच्छति । वयमप्यनादिष्टा नोपसर्पामः ।

शेखरकः—जाने सा अस्वस्थशरीरेति । अत एव तां द्रष्टुमिच्छामीति शेखरकोक्तं सर्वं रत्नमालायै निवेद्य चेटी "तस्य किमुत्तरं दातव्यं । प्रतिषिद्धोऽपि त्वद्दर्शने प्रत्यभिनि-

विष्ट इवाभाति । त्वामदृष्ट्वा न निवर्त इति वक्ति किमत्र प्रतिविधेयम् इति । रत्नमाला । कोयमभिनिविष्टचेता इति मुहूर्तं विचिंत्य तमिहानयेति चेटीमादिक्षत् ।लवंगिकापि चेट्या सह प्रविशन्ती वदने पुरुषाकारमारोप्य प्रभुकिंकरोचितया सभ्यमृदु मधुरवचोभणित्या तां सभाजयन्ती सविनयमिदमाह । हा ! सकलजगन्निर्माणदक्षस्य विधातुश्शिल्पनैपुणी । सौन्दर्येणा प्रतिभासि । ब्रूहि मे सत्यम् किं त्वमेवास्य सदनस्य स्वामिनी । नोचेदिमां सभ्यतरवाणीं प्रयोक्तुं नाहमिच्छामि । रत्नमाला । कुत आगतोसि । शेखरकः । शिक्षितादधिकतरं किंचिदपि वक्तुं न शक्नोमि । त्वत्प्रश्नस्योत्तरं दातुम् । रत्नमाला । किं त्वं वैहासिकः । न हि नाहं तादृक् यादृशं मां मन्यसे । ब्रूहि मे । किं त्वमेव स्वामिन्यस्य गृहस्य ।

रत्नमाला—अथ किम् ।

ततो लवंगिका तस्यै स्वामिनस्संदेशनिवेदनात्पूर्वं स्वसपत्नीमुखसौंदर्यावलोकनायाधिकतरोत्कंठा प्राह । आर्ये सकृन्मुखचंद्रं दर्शय ।

लवांगिकायाः प्रार्थनारत्नमालया न प्रत्याख्याता किंकरवेषनिगूढां तां दृष्ट्वा चक्षूरागमुवाह । रत्नमाला । कस्तव स्वामिनस्सन्देशः । मन्मुखदर्शनेन किं तव । ततो रत्नमालावत्सरसप्तकात्प्रभृत्यवकुंठितं मुखं न कदाचित्परस्मै दर्शयामीति

कृतां प्रतिज्ञां विस्मरन्ती मुखावरणमपावृत्य प्राह । तिरस्करिणी मपाकृष्य चित्रं दर्शयामि । किं नेदं शोभनं ।

लवंगिका—दृष्ट्वा सविस्मयं अहो रूपस्य माधुर्यं । कपोलफलकयोः कान्ति र्निरुपमा । एतादृशलावण्यवत्या भवत्या स्सादृश्यं लोकस्यादत्वा मरिष्यसि चेत् नूनं नृशंसासि ।

रत्नमाला—आर्ये ! नाहं तथा क्रूरा लोको मत्प्रतिकृतिं दधातु । इति चित्रं दर्शयति ।

शेखरकः—अहो प्रत्यवयवसौष्ठवम् प्रत्यग्रविकासितपुंडरीकदळायते लोचने । रागाधरीकृतबिंबफलोऽधरः लावण्यमयी कन्धरा । चद्रसनाभिमुखम् ।

रत्नमाला—किं मां कविरिव वर्णयितुं प्रेषितोसि भवत्स्वामिना ।

लवंगिका—न हि न हि यथादृष्टं ब्रवीमि । गुणाविसंवादिनी ते रूपसम्पत् । मत्स्वामिनस्त्वयि महाननुरागः । तादृशानुरागो न कुत्रापि दृष्टचरः । सर्वदा त्वत्संबंधिनीमेव कथां करोति । नान्यज्जानाति नान्यद्वक्ति । महतीं देवतामिव भवतीं हृदयकमले निधाय ध्यायति । त्वं लब्धासीति मत्वा महता प्रहर्षेणोन्मत्ती भूतो नृत्यति त्वत्पाणिपंकजपरिग्रहालाभकदर्थितो रोदिति । त्वन्निबद्धभावश्शून्यमिव पश्यति जीवलोकं । अत्युष्णदीर्घनिश्वासग्लपित निकुंजोदरपल्लवः प्रत्यग्र-

कल्पितपल्लवशयने उपरि विन्यस्तकर्पूरपरागपटले तुषारजल-स्रुतिशीतलीकृते धारागृहेपि न तापशान्ति मवाप्नोति । ज्योत्स्ना तु केवला दवानलशिखैव । तस्मात्तस्य प्राणरक्षणाभय दाक्षिणाभिक्षणार्थं समागतोस्मि । श्रुत्वा भवती प्रमाणम् ।

रत्नमाला—युष्मत्स्वामी ममाशयं सम्यग्जानाति, । नाहं तस्मिन्ननुरक्ता । अहं तस्मिन्ननुरक्तापि सविगुण इति नाहं ब्रूयाम् । स कुलीनो निर्दुष्टचारित्रश्श्रीमानुदार इति दृढं जाने । जनोपि स विद्वान्मृदुर्दान्त इति कथयति । तथापि नाहमेनं कामये । चिरादेवेदमुत्तरं दत्तं मया ।

लवंगिका—मत्प्रभुरिव यद्यहं त्वय्यनुरक्तस्तदा नक्तं दिवं त्वत्प्रतीहारभूमाववस्थितस्त्वामुच्चैर्नामग्राहमाह्वयन् त्वन्नामांकितानि गीतानि विरच्य निशीथे गायन् पर्वतकंदराणि प्रतिश्रुन्मुखराणि कुर्याम् । तदाक्रोशेन चराचराणि सर्वाणि सत्त्वानि करुणया द्रवीभूतानि भवेयुः ।

रत्नमाला—सर्वं त्वय्युपपद्यते । कस्मिन्वंशे जातोसि । शेखरकः । आसीत्पुरा मे महदैश्वर्यम् । इदानीं रिक्तोस्मि । न तु गुणैः ।

रत्नमाला—शेखरक! गच्छ स्वामिनं ब्रूहि रत्नमाला त्वयि नानुरज्यते इति । स्वामी पुनस्त्वां मा प्रेषयतु । मत्संदेशं श्रुत्वा स किं प्रतिपद्यते तन्मम निवेदयितुमिच्छासि चेत्स्वयमागच्छ । तेन प्रेषितो मा याहि ।

अथ शेखरके रत्नमालामापृच्छ्य गृहान्निष्क्रान्ते सा तदुक्तानि वचनान्यावर्तय देवम् "पुरा धनाढ्य आसम् । गुणैर्न दरिद्रोऽस्मि । अहो तस्य वाग्वैखरी । तन्मुखसौंदर्यं-भावगांभीर्यं । स योग्य इति तर्कयामि । पूर्वं स राजपुत्र आसीदिति मेऽभिप्रायः । कस्मिंश्चिदागन्तुके जने स्वानुरागोत्पत्तिं विचिंत्य रत्नमाला आत्मानं निनिंद । सद्यएव सा किंकरवेषस्य तस्य आत्मनश्च भागधेयवैषम्यमप्यचिंतयित्वा प्रमदाजनस्याभरणायमानां शालीनतामप्यविगणय्य सकृद्दर्शनमात्रप्रणयिनि कस्मिंश्चिदागन्तुके यूनि शेखरके बद्धानुरागा संजाता । तुभ्यमार्यसखे न दत्तामिदमंगुळीयकं प्रमादाद्भवदंगुल्या गळितमिति व्याजेनैकं रत्नांगळीयकं स्वकिंकरहस्तेन तस्मै प्रजिघाय । अनेनांगुळीयकदानेन मद्भावबंधं शेखरको जानातीति अमंस्त । किंतु लवंगिका मनसि जातशंकाऽभूत् । तस्यास्तदानींतनदृग्विलासचेष्टितैः पुरुषवेषधारिण्यां मयि नूनमियमनुरक्तेति लवंगिका मेने । हा कष्टम् तपस्विनी रत्नमाला स्वप्रलब्धकामुकेनेव पुरुषवेषधारिण्या मया वंचिता । नाहं स्त्रीति जानाति । धिङ्मां वंचनशीलाम् । आर्यसखस्य कृते यथाहं व्यर्थं मदनबाधामुद्वहामि तथेयं मत्कृते ॥

अथ लवंगिका आर्यसखसकाशं गत्वा शिरसि विनिहितांजलिस्तत्र वृत्तं सर्वं राज्ञे निवेदयामास । महाराज!

मोघीकृतोऽस्मदुद्यमः । रत्नमाला मया बहुधा बोधितापि युष्मत्प्रार्थना नांगीचकार । नेतः परं दूतप्रेषणेन महाराजेनात्मा क्लेशयितव्य इति संदिष्टं तया । एतच्छ्रुत्वा राजा शेखरक एव क्रमेण तां वन्यगजवशामिव कार्यक्षमा कर्तुं प्रभवेदित्याशया तत्सन्निधिं पुनस्तमेव प्रेषयितुं निश्चिकाय ।

अत्रान्तरे प्रियाप्रत्याख्यानोत्कंठितमात्मानं विनोदयितुमार्यसखः कांचिद्गीति गातुं शेखरकमन्वयुंक्त । शेखरक! व्यतीताया रात्रौ त्वया गीतां गाथां श्रुत्वा भृशं प्रमुदितोऽस्मि । तत्पुनर्गायतु भवान् । सा पुरातनी विशदार्था च । अपरिणीताः प्रमदाः प्रचंडचंडकरसंतप्तांग्यस्तर्कुसाधनेन शणतंतून्सन्तन्वंत्योगायंतीदमेव गीतम् ।

श्लो।। मृत्यो मा जहि निर्घृणाब्जनयना न्यक्कारपात्रीकृतं निर्यात्वद्यममासवो नयत मां क्षिप्रं परेतावनिं । न स्यात्कोप्यनुशोचको मम मृतौ नोवांशभाङ्मे मतः दत्तश्वेतमथाम्बरं न कुसुमं देयं मदीये शवे ॥

अप्रतिकृतानुरागप्रतिपादकं गीतं गायंती लवंगिका तच्छब्दार्थं सम्यग्विचारयंती मुखवैवर्ण्यावेदितगीतप्रतिपादितार्थानुभवागीतप्रतिपादितार्थस्यात्मानमेव पात्रं चकार। आर्यसखश्च तस्याविषण्णदृष्टिं ज्ञात्वा इदमाह ।

शेखरक! भवान्बालोपि किंविषयीकृतोसि कस्याश्चिदृष्टिपातानाम् । किमिदमिंदीवरलोचना दृष्टिनाराचविद्धहृदय इव लक्ष्यसे ।

शेखरकः—अस्त्येतत् ।

आर्यसखः—का सा । कियद्वयस्तस्याः ।

स्वामिन् । तव सवयाः । तवैव तुल्यरूपा । राजा । तच्छ्रुत्वा । अहो किमाश्चर्यम् । अयं बालोपि कस्यांचिद्वर्षीयस्या रूपहीनायामनुरक्तः । इति स्मितमकरोत् । शेखरकवेषधारिणी लवंगिका राजानमेवाभिप्रेतवती । नतु स्त्रियं तादृशीम् ।

पुनर्लवंगिका द्वितीयवारं रत्नमालागृहमगात् । तदा तत्रानायासेन प्रवेशमलभत । स्वस्वामिन्यस्तरुणसुन्दरैस्संदेशहरैः प्रीतिपूर्वकं संभाषंते इति जानंतः किंकरा लवंगिकायां प्रतिहारभूमिं प्रविष्टायां द्वाराण्यपावृत्य सगौरवं रत्नमालासविधं निन्युः । राजपक्षमवलंब्य किंचिद्वक्तुं पुनस्समागतं मां जानीहीति शेखरकेणोक्ते । रत्नमाला प्राह । शेखरक! तत्प्रसंगाद्विरम । तद्विषये त्वया न किमपि मम सन्निधौ वक्तव्यम् । नमयाश्रोतव्यम् । यद्यन्यवार्तां भणसि तदा मम श्रवणयोर्गानादपिमधुरतरं श्रूयते । एवं रत्नमाला तस्मिन्भृत्ययूनि शेखरके स्वानुरागमाविश्चकार । किंतूद्वेगसहकृतामसम्मतिं

शेखरकस्य मुखे दृष्ट्वा प्राह । अहो स्फुरिताधरे तन्मुखे कोप-विकृतिरपि कथं शोभते ।

शेखरकः—त्वद्गात्रस्पृष्टिकया शपे । सत्यं त्वय्यनुरक्ता-स्मि । मदाशयं ते विवृणोमि । अनुरागमपह्नुत्य किं फलं ।

किंतु तस्या अभिलाषो मृगतृष्णिकाजलपानसदृशम-भूत् ।

आर्यसखस्यानुरागप्रकटनाय नेतःपरं त्वदन्तिकमाग-मिष्यामीति ब्रुवाणा लवंगिका तस्यास्सविधं विहाय द्वित्राणि पदानि गत्वा "योषिति न केनापि पुंसाऽनुरक्तेन भवितव्य-मिति" वदन्निरगात् ।

अथ शेखरके रत्नमालागृहान्निर्गते तत्पराक्रमपरीक्षानिक-षायमाणमेकं दुर्जातमापपात । तदित्थम् । रत्नमालां बलात्का-मयमान एको युवा कस्मिंश्चिद्राजभटे यूनि रत्नमालानुरक्तेति ज्ञात्वा शेखरकं पथि दृष्ट्वा "सवायमिति प्रत्यभिजानन् शेखरकं द्वंद्वयुद्धायाजुहुवे। किमिदानीमबला तपस्विनी करोतु । वेषेण पुरुष इव बहिः प्रतीयमानापि अंतरबलाजनोचितं भीरुत्वं कुत्रापैति । कृपाणिकामपि वीक्षितुं बिभेति ।

अथ खड्गमाकृष्य स्वोपरि धावंतं घोरशत्रुं वीक्ष्य भय-कम्पितांगी आत्मनस्स्त्रीत्वं प्रकाशयितुं वरमित्यमंस्त । दैवाल्ल-वंगिकायास्तद्भयमपनीतम् । कश्चिदध्वगस्तन्मार्गेण गच्छंस्तावुभौ

दृष्ट्वा तस्याश्चिरपरिचितस्सुहृदिव तामपायाद्रिरक्षिषुः खड्गोद्यतं तच्छत्रुमिदमाह । " निरपराधमुग्धवयसि स्थितोयं बालकः । यदि तेन त्वय्यपराद्धं तन्ममापराधं गणय । यदि त्वं तस्य विप्रकुरुषे तदा नाहं त्वां मर्षयामि त्वयि शस्त्रं पातयामि । एवं स पथिकस्तच्छत्रोस्तां रक्षित्वा गतः । यावल्लवंगिका अमुं विपन्निस्तारबन्धुं कुशलानुयोगादिना सम्भावयितुमुद्युक्ता तावदेवासौ नगररक्षिभिः पुरुषैरभियुज्यमानो दृष्टः । स लवंगिकां वीक्ष्य त्वद्रक्षणसुकृतस्य फलमिदानीमेव मयानुभूयते । आर्ये ! देहि मे किंचिद्धनम् । यदेतेभ्यो दत्वा संकटे पतितमात्मानं मोचयिष्यामि । त्वत्कृतेऽहं किमपि कर्तुमशक्नुवामिति दूये । संभ्रांत इव लक्ष्यसे । प्रकृतिमापन्नो भव । तद्वचनैर्नूनं लवंगिका विस्मिता तमाह ।

आर्य नाहं जाने भवंत । न भवान्मे परिचितः । न कदाचिद्भवद्धनग्रंथिर्मया स्वीकृता । किंतु सांप्रतं मद्विषये त्वदुपकृतेर्निष्कृतित्वेन मन्निकटे यदस्ति तद्गृहाणेति किंचिद्धनं तस्मै ददौ ।

अथ स पथिकस्तस्यामकृतज्ञतामापादयन् । परुषवचनैर्निर्भर्त्सयन् इदमाह—आर्याः ! पश्यत पश्यत । पुरस्स्थितमिम युवानं । मृत्युमुखे निपतितमेनं पुनर्जीवलोके प्रतिष्ठापितवानस्मि । एतदर्थमेवाहं हेलानगरमागतोस्मिन्नुपद्रवे पति-

तोस्मि । ततो राजभटास्तस्य परिदेवनान्यनाकर्ण्य तत्प्रार्थनामनादृत्य तं जीवग्राहं गृहीत्वा ययुः । तैरपह्रियमाणोऽसौ यावद्दूरं कंठरवश्श्रूयते तावल्लवंगिकां श्रीभासित इति स्वकृतनामधेयेन मुहुराहूयापद्बान्धवं सुहृदं मामेवं परित्यक्तुं न न्याय्यमिति विनिंदन्नेव गतः । ततो लवंगिका, "को वा भवेदसौ? समुद्रे निमग्नः किमयं मे भ्राता । किमयमविज्ञात चरः कोपि वैदेशिकः," इति विकल्प्य निश्चयं नाधिगतवती । किंतु चरमविकल्पएव तथ्यमभूत् । तत्रागत्य लवंगिका प्राणान् रक्षितवान्वैदेशिकोऽन्तनयो नाम कश्चिन्नाविकः । यस्समुद्रजले जंझानिलवेगान्नौकाकूपदंडप्रतिबद्धं श्रमविवशं नष्टप्रायं श्रीभासितं सत्वरं गृहीत्वा स्वनावि निधाय ररक्ष । तत्प्रभृत्यन्तनयश्श्रीभासिते प्रवृद्धस्नेहः क्षणमपि तत्पार्श्वमविमुंचन् यत्र यत्र स गच्छति तत्र तत्र तमन्वियाय । राज्ञ आर्यसखस्य सभां द्रष्टुं कुतूहलेन श्रीभासिते कुसुमपुरीं प्रस्थितेऽयमंतनयोपि तमनुजगाम । कुसुमपुरप्रवेश आत्मनो वधे पर्यवस्यतीति जानन्नपि । एकदा ह्यसौ समुद्रयुद्धे आर्यसखस्य भागिनेयं गाढप्रहारजर्झरितगात्रं चकार । तदपराधादिदानीमयं राजभटैर्गृहीत्वा चारके निक्षिप्तः लवंगिकान्तनयसमागमस्य मुहूर्तद्वयात्प्रागेव श्रीभासितान्तनयौ तीरमगमताम् । नौकाया अवतीर्य कुसुमपुरं प्राप्तौ । कस्मिंश्चिन्मठे वसतिं चक्रतुः । अथ श्रीभासितो नगररामणी-

यकवीक्षाकुतूहली रथ्याः परितः परिभ्रमितुं निर्ययौ । निर्यान्तमेनं वीक्ष्यान्तनयो धनकोशमस्य हस्ते निक्षिप्य "यत्तेऽभिलषितं वस्तु तत्क्रीणीहि आ त्वन्निवृत्ति अहमत्रैव भवंतं प्रतिपालयन् स्थास्यामि" इत्युवाच । तथा निर्दिष्टावधौ श्रीभासितस्यानिवर्तनादंतनयस्तदनुपदं विचेतुं बहिः प्रसृतो मध्येमार्गं तत्समानवेषभाषाकृतिं लवंगिकां वीक्ष्य श्रीभासित इति भ्रांत्या तस्यान्येभ्यस्संभूता परिभूतिं दृष्ट्वा वेगात्खड्गमाकृष्य शत्रोस्तमरक्षत् । धनकोशं च तमपृच्छत् । नाहं जाने तव धनकोशमिति लवंगिका प्रत्युत्तरं ददौ । ततस्सा अकृतज्ञेति निनिंद ।

अथान्तनये निर्गते लवंगिकाशत्रुभ्यः पुनरभियोगमाशंकमाना सत्वर गृहमगात् ।

तस्या नातिदूरं गतवत्यां तदरातिराकारसादृश्यात्पुनस्तामेव प्रतिनिवर्तमानामिवापश्यत् । किंतु नेय पुनस्तेन दृष्टा । अस्या भ्राता श्रीभासितस्तत्रागतः । तं दृष्ट्वा सैव पुनरागतेति तच्छत्रुरमन्यत । इदानीं स श्रीभासितं वीक्ष्य इदमाह । आर्ये! पुनर्दृष्टोसि । एष प्रहरामि । रक्षात्मानं इत्युक्त्वा कृपाणिकया तमविध्यत । शूरश्श्रीभासितोपि गाढप्रहारं दत्वा तद्गात्रात्खड्गमाचकर्ष ।

अथ रत्नमालागृहान्निष्क्रम्यकलहायमानौ तौ दृष्ट्वा न्यवारयत् । सा श्रीभासितं रूपसादृश्याच्छेखरक इति मत्वा तस्य

शत्रुकृताभियोगं शोचन्ती मत्सदनमागच्छेति तमाजुहाव। अतर्कितोपनतेनाज्ञातारात्यभियोगेन यथा विसिस्मिये तथा सौजन्यशालिन्या अस्या युवत्या निमंत्रणेन तथा विस्मितोऽभूत्। तया प्रार्थितस्तद्गृहेऽभ्यवजहार। रत्नमालापि स्वभ्रांतिपरिकल्पितशेखरस्यागमनेन भृशं हृष्टा तेन सह चिरं संकथां चकार। तस्मिन्स्वानुरागं प्रकटीचकार। तच्छ्रुत्वा श्रीभासितस्तस्या अभिलाषं पूरयितुकाम इवात्मानमदर्शयत्। तथापि कथमेवं तस्यामनसि रागो जात इति विस्मितोऽभूत्। लवंगिका अपथप्रवृत्तेत्यमंस्त। गृहे तस्यास्स्वातंत्र्यं गृहकृत्यनिर्वर्तनचातुर्यं भृत्येषु कर्मविभागसामर्थ्यम् च वीक्ष्येयं स्वेच्छाचारिणीति निरचैषीत्। अस्यास्सर्वकार्येषु कामचार एवेति निश्चितवान्। तत्प्रार्थनां चानुमेने। आत्मनि जाताभिमुख्यं शेखरकं विज्ञाय कालविलंबेन तस्य भाववृत्तिर्व्यत्येतीति भिया रत्नमाला अद्यैव सन्निहितस्य पुरोधसस्समक्षमावयोर्विवाहर्निर्वर्तनीय इत्युपक्षिप्तवती। श्रीभासितोऽपि तस्याश्चित्तमन्ववर्तत। अथ निर्वृत्ते विवाहकर्मणि प्रियां कंचित्कालं तत्रैव विहाय स्वाभ्युदयं प्रियसुहृदेऽन्तनयाय कथयितुं तत्सकाशं जगाम।

अत्रांतरे राजा आर्यसखो रत्नमालां द्रष्टुमाजगाम। राज्ञि तद्गृहप्रागणे पादं निहितवति न्यायाधिकारिणोंतनयं संय-

मितकरचरणं कृत्वा राजसन्निधिमानिन्युः । लवंगिकापि तत्र सन्निहिता । श्रीभासितेन सदृशाकारां लवंगिकां तत्र दृष्ट्वाऽयमंतनय आकारसादृश्येन वंचितोऽद्यापि तस्यां श्रीभासित इति भ्रान्तिमविमुंचन् राजानमाह । महाराज ! पृच्छेमं युवानं । कथमहममुं समुद्रे जलोपप्लवाद्रक्षितवानस्मीति । बहुधायं मयोपकृतः । मन्निकटमजहदयं मासत्रयमास्त । इदानीं मयि कृतघ्नस्संवृत्तः ।

अथ स्थैर्यमापन्ना विद्युदिवाभ्रमंडलाद्गृहान्निर्गच्छन्तीं रत्नमालामालोक्य राजा अंतनयवाक्यश्रवणे श्लथादरः प्राह । इत आयात्येषा स्वामिनी । भुवं गता सुरसुन्दरीवाभाति । अंतनय! विरमातः परमुन्मत्त प्रलापात् ।राज्ञा एवं प्रतिषिद्धोप्यन्तनयः "त्रीन्मासानवसन्मन्निकटेऽयं युवा" इति पुनः पुनर्वदन् राजभटैर्दूरमुत्सारितः ।

अथ राजा रत्नमालासदनं प्रविश्य शेखरकेण सह भाषमाणां तामद्राक्षीत् । यावदसौ तत्रातिष्ठत्तावत्साशेखरकेस्वानुरागव्यंजकानि वचासि भाषमाणा आसीत् । क्षुद्रस्त्वकिंकरस्तस्यावल्लभो जात इत्यसूयया राजा शेखरके जातवैरस्तं निरभर्त्सयत् । राजा निष्क्रामन् शेखरक ! मामनुयाहीति " शेखरकमवदत् । तस्मिन्नेव क्षणे क्रोधेन लवंगिकां व्यापादयितुमुद्युजान इवादृश्यततथापि । लवंगिका (शेखरकः) राज्ञि अनु-

रागाद्धैर्यमवलंब्य स्वामिन आनंद वर्धयितुं मरणमप्यनुभवामीति वदन्ती तमन्वियाय । रत्नमाला वल्लभं शेखरकं विहातुमनिच्छन्ती "प्रियशेखरक ! (पुरुषवेषधारिण्यालवंगिकायानाम) कगच्छसीत्युच्चैराघोषयत् ।

लवंगिका—तमनुगच्छामि यः प्राणेभ्योपि गरीयान् । शेखरक (पुरुषवेषधारिणीलवंगिका) आत्मनः प्रिय इति रत्नमालोच्चैराक्रोशन्ती गमनात्तं न्यवारयत् । पुरोधसमानेतुं भृत्यं प्राहिणोत्' ।'मुहूर्तात्पूर्वमयं युवा मत्पुरतएव रत्नमालामुद्वहत्" इत्यब्रवीत्पुरोधाः । "नाहं पर्यणयम् रत्नमालाम्" इति (शेखरकः) लवंगिका प्रत्याचख्यौ । रत्नमाला पुरोहितयोर्वचनं प्रमाणीकृत्य राजा आर्यसखो निजकिंकरेण जीवितादपि स्पृहणीयतरं रत्ननिधिं हारितोस्मीति व्यश्वसीत् । नातीतमनुशोचनीयमिति मन्वानो दुर्विनीता रत्नमालातत्प्रियत्वेन परिकल्पितां शेखरकनामधारिणीं पुरुषवेषांतरितां लवंगिकां चामंत्र्य नेतः परं मदंतिकमागंतव्यमित्याज्ञाप्य राज्ञि प्रतस्थिषति अद्भुतमेकं समपद्यत । अपरश्शेखरकः प्रविश्य "प्रिये ! इत एहीति" रत्नमालामाजुहाव । अयं नूतनशेखरकश्श्रीभासितनामा । रत्नमालाया उद्वाहभर्ता । आकृत्या कंठस्वरेण देहपरिमाणेन वेषसाम्येन तुल्यौ तौ भ्रातरौ परस्परमवलोकयन्तौ परस्परवृत्तांतानुयोगायारेभाते । अद्यापि स्वसोदरश्श्रीभासितस्सजीव इति

लवंगिका न प्रत्येति स्म । पश्यतो मम समुद्रे निमग्नाया भगिन्या लवंगिकाया युववेषेणात्र पुनरागमनं कथं संभाव्यत इति श्रीभासितोऽपि मनसि नालभत प्रत्ययम् । "सैवाहं ते भगिनी पुवेषोपलक्षितायामुदधौ मग्ना मन्यसे" इति लवंगिका दृढतरं श्रीभासितं प्रत्याययत् । यमजयोस्तयोर्भ्रात्रोरत्यततुल्याकारेणाहितायां भ्रान्त्यामेवं निवारिताया पुरुषवेषधारिण्यां स्त्रिया लवंगिकायां पुरुष इति भ्रांत्याऽनुरक्ता रत्नमालां सर्वे जहसुः ।

एव तयोर्यमयोस्त्रीपुंव्यक्ती विविच्य रत्नमाला श्रीभासितं परिणेतुमैच्छत् । अनेन रत्नमालाविवाहेन आर्यसखस्य सर्वे मनोरथाः प्रत्याहताः । रत्नमालागतस्तस्यानुरागो बहुळपक्षशशांक इव क्रमशः क्षीणतामुपययौ । चिराद्दासभूतस्य शेखरस्य स्त्रीत्वप्राप्तिं विचिंत्य राजा मनसि विस्मितोऽभूत् इदानीमासेचनकमुखश्रियः लवंगिकायास्सौंदर्ये लग्नहृदयोऽभूत् । पुरा पुरुषवेषेणैवास्या रूपे हृदयाकर्षके इदानीं नैजरूपेण सर्वातिशायिनी सेति किं वक्तव्यम् । "नाथ! त्वयि मे महती प्रीतिः" इति कतिवारं स्वानुरागं नाविष्कृतवती । तदानीं तत्सर्वं स्वाम्यनुरक्तकिंकरोचितं वचनमित्यगृह्णाम्" न मे तत्त्वग्रहणशक्तिरासीत् तदानीं तयोक्ता बह्व्यो नर्मोक्तयो मम प्रहेळिकानिभा आसन् । इदानीं सम्यग्बुध्यते तदर्थः । इदानीं

मनसि सम्यग्विचार्यमाणा सीव्यंति हृदयमर्माणि ।" इत्येतत्सर्वं-मनस्याकलय्य राजा ता विवोढुं निश्चित्य लवंगिकां यथाभ्यासं "शेखरक" इत्याहूय इदमाह । "शेखरक! त्वं पुरैव सहस्रवार-मुक्तवान्किल । भवानिव नाहं स्त्रियमुद्वोढुमुत्सहे इति"

त्वं सुकुमारशरीरोप्यभिजनवानपि मां चिरं पर्यचरः । यन्मां चिरं स्वामीत्यवोचः तन्मम स्वामिनस्स्वामिनी भवितु-मर्हसीति"

अथ रत्नमाला राजान लवंगिकासंक्रान्तहृदयं ज्ञात्वा तावुभौ स्वगृह नीत्वा पुरोधसं पुरस्कृत्य तयोर्वैवाहिकं कर्म निरवर्तयत् । इतः पूर्वमेव रत्नमाला पाणिं जग्राह श्रीभासितः । एवं यमजौ तौ भ्रातरावेकदिनएव निर्वृत्तपाणिग्रहणमंगळाव-भूताम् । आदौ तयोर्वियोगहेतुः पोतभंगएवदिष्ट्या तदभ्युदय-कारणमभूत् । लवंगिका हेलानगराधिपतेरार्यसखस्य पट्टमहिषी बभूव । श्रीभासितोपि रत्नमालायाः पतिर्भूत्वा चिरं सुखं जिजीव ।

समाप्ता द्वादशी रात्रिः ॥

---

## 10 Comedy of Errors

## ( रूपसाम्यभ्रान्तिः )



Dramatis personæ

1 Cyracuse = सीरदेशः.

2 Ephesus = अबीशदेशः.

3 Acgeon = धनपालः, कश्चिद्वणिक्.

4. Antipholus of Ephesus = अबीशनगरवासी—अतपालः.

5. Antipholus of Cyrocuse = सीरनगरवासी अंत-पालः.

6 Drymio = दामोदरः—अंतपालस्य किंकरः.

7. Adriana = आद्रियाना—ज्येष्ठस्य अंतपालस्य भार्या.

8. Lucia = लासयाना—आद्रियानाया भगिनी.

# ॥ रूपसाम्यभ्रान्तिः ॥

## (COMEDY OF ERRORS)



एकस्मिन्काले सीराबीशदेशाधिपत्योरुत्पन्ने प्रबलपरस्परविरोधे निरमाय्येक क्रूरं राजशासनमबीशनगरे येन सीरनगरवासी यः कोपि वणिगबीशनगरे दृष्टश्चेत् रूप्यसहस्रमात्मविमोचननिष्क्रयं दद्यान्नोचेद्वध्य इति ।

अथैकदा सीरदेशवासी धनपालो नाम कश्चिद्वृद्धवणिगबीशपुरीरथ्यासु पर्यटन् राजभटैर्दृष्टः । दण्डं दातुं वा वधदण्डं प्राप्तुं वा राजसन्निधिं नीतः । दण्डं दातुं तदानीं तस्य निकटे नासीद्धनम् । तस्मात्स वध्य एवाभूत् । राजा तस्मिन्वधदण्डादेशात्प्राक्तच्चरित्रं ज्ञातुमियेष । अबीशनगरं प्रविष्टस्य सीरदेशवणिजो विहितं प्राणहरं दण्डं जानतोऽप्यात्मवधफले तत्रागमने कारणमपि तं पप्रच्छ ।

धनपालः—राजन्नाहं मृत्योर्बिभेमि । दुःखबहुळा ज्जीवितादत्यर्थं निर्विण्णोस्मि । संसारे मदनुभूतव्यसनपरम्पराकथनान्नान्यद्दुःखतरम् । तथापि भवद्भिरहमादिष्टः कथयामि मद्वृत्तान्तं अवहिताश्शृणुतेति कथयितुमारेभे ।

जातोस्म्यहं सीरदेशे । वणिग्वृत्त्या जीवामि । कांचित्सवर्णां कन्यामुपयम्य त्रिवर्गसाधिकया तया सह चिरं गार्हस्थ्यसुखमन्वभूवम् । वणिज्यार्थे विदेशं गन्तुं बलात्कृतोस्मि । कार्यव्यग्रतया तत्र षण्मासान् स्थापितोस्मि । अतः परमपि कंचित्कालं मयात्रैव स्थातव्यमिति ज्ञात्वा मद्भार्यां मत्सविधमानाययम् । सा मदावसथप्राप्त्यनन्तरमसूत यमौ । इदमतीव विचित्रतरंभाति । यथा तौ जनैरयं ज्येष्ठोऽयं कनिष्ठ इति परस्परं विवेक्तुं नशक्यते तथा तुल्याकृती । अपरं च मज्जायायावैजनने मास्येवास्माभिरावसथीकृते बौद्धविहार एवापरा काचिद्वृषलीच सुतयुगमसोष्ट । एतयोर्यमजयोरपि मम सुतद्वयस्येवान्योन्यं निरस्तभेदा एकैवा कृतिः । तत्पित्रोश्शिशुपोषणे शक्त्यभावात्तद्दारकयुगळमहमक्रीणाम् । संवर्धितौ तौ क्रमेण मम डिम्भकयोरनुचरीभवितुं समुचिताविति निश्चित्य तावहं स्वपोषमपुषम् ।

मम सुतौ तु विशेषरमणीयौ । तादृशापत्यलाभान्मज्जायापि भृशं हृष्यतिस्म । मद्भार्या प्रतिदिनं स्वदेशं प्रति निवर्तितुंमा निरबध्नात् । अनिच्छन्नप्यहं मङ्गी कृतवान्स्वदेशगमनाय । दुर्मुहूर्ते वयं नौकामारूढाः । महोदधौ दूराध्वन्यनितिक्रान्ते सर्वप्राणिभयङ्करस्सघृष्टिको जंझानिलः प्रवातुमारेभे । तत्समये नाविकास्त्वन्यथा नौकापरित्राणमपश्यन्तः प्राणपरीप्सया संघशः

प्लवमारुरुहुः । अस्मान्नौकायामेवात्याक्षुः । अस्मदधिष्ठिता नौकाजंझामरुत्प्राचंड्येन कदा शतथा विध्वस्तो भविष्यतीति प्रतिक्षणमबिभेम ।

अथ रोरुद्यमानां मद्गृहिणीं कैशोरवयस्त्वादज्ञातभयनिमित्तान् रुदन्तीं मातरं वीक्ष्य दीनं क्रन्दतश्शिशूंश्च वीक्षमाणस्य मे हृदयं शोकभयानुकम्पाभिः पूरितमभूत् । तद्रक्षणोपायपरिचिन्तनएव मे मनो व्यापृतमासीत् । तदा मत्कनिष्ठं सुतं नौकास्तम्भेष्वन्यतमस्मिन्नेकतोऽबध्नाम् । अन्यस्मिन्पार्श्वे मया सहानीतयोर्यमयोः किंकरबालकयोरेकतरमबध्नाम् । अपरस्मिन् स्तम्भेऽपरौ बालकावपि बद्धुं मम भार्यामादिष्टवानस्मि । एवं सा ज्येष्ठशिशुद्वयरक्षणपरा आसीत् । अहं त्वन्यत्कनिष्ठशिशुयुगळं मद्रक्षणे न्यदधाम् । आवामपि दम्पती पृथग्बद्धबालकयोस्स्तम्भयोरात्मानमबध्नीव । यद्येतदुपायं ना करिष्याम सर्वे वयमनंक्ष्याम । अभ्रंलिहाबीलमहोर्मिपरम्परावेगेन नौका पयोधिजलाप्लुतगण्डशिलायां पातिता अभिघाततैक्ष्ण्येन शतधा शकलीकृता । प्रतनुनौकास्तम्भनिबद्धा वयं स्तम्भान् सुदृढमाश्लिष्य सलिलस्योपरि स्थिताः । दारकद्वयं जागरूकतया रक्षन् स्थितोहं भार्यां परित्रातुं नाशक्नुवम् । सा हि शिशुद्वयेन सहांबुवेगेनान्यत्र नीता । तेषु मम दृक्पथमनतिक्रान्तेष्वेव कारनगरादागतैः कैश्चिद्धीवरै रुडुपंसमारोपिताः । तास्तथासुर-

क्षितान्वीक्ष्याहं स्वस्थचित्तोऽभवम्। तथापि समुद्रतरंगैर्युध्यमान आसम् । वयमपि नाविकैर्नौकायामारोप्य रक्षिताः । ते नाविका मां धनपालं ज्ञात्वा आहारादिप्रदानेन विगतार्तिमकार्षुः अस्मान् सीरनगरतीरं क्षेमेण प्रापयन् तत्प्रभृतिज्येष्ठसुतेन सहिता मद्भार्या किमभूत्कां गतिं प्रपन्ना न जाने । इदानीमवशिष्टएको मत्कनिष्ठपुत्रोऽष्टादशवर्षदेशीयोमातरं भ्रातरं च द्रष्टुं कुतूहली नष्टभ्रात्रा अनेन बालकिंकरेण साकं नष्टौ तावन्वेष्टुं विदेशं गंतुं कृतनिश्चयो मामनुज्ञामपृच्छत् । नष्टयोस्सुतकलत्रयोः प्रवृत्तिं श्रोतुमहमपि पर्युत्सुकोस्मि । तथापि गवेषणार्थं गतस्सोपि विनश्येतेति भिया नाहं तमन्वजानाम् । तथापि स ममाज्ञामुल्लंघ्य विदेशं जगाम । मां परित्यज्य विदेशं गतवतस्तस्यातीतस्सप्तमो वत्सरः । तदनंतरं तं मार्गयमाणोहं पंच समा भूमंडलमभितः पर्यटितवानास्मि नाहं तं समासादितवान् । कंचित्कालं यवनदेशमध्यवात्सम् । पश्चिमसमुद्रतीरेण निजदेशं प्रति निवर्तमान इमामबीशनगरीं प्राप्तोस्मि । मज्जीवितायासप्रबन्धोऽद्यैवास्तामियात् । मत्पत्नीसुतौ च सजीवा इति वार्ता नूनं श्रूयते चेदह सुखेनासून्परित्यक्ष्यामीति ।"

अथ राजा वणिजोऽस्य दुःखबहुळं चरित्रं श्रुत्वा नष्टपुत्रस्यान्वेषणवशात्स्वयमेतादृशमहाव्यसने निमग्नं वणिजमेनमनुकम्प्यावोचत् । "राजकीयशासनमन्यथाकर्तुं मम शक्तिरभ-

विष्यद्यदि अहं त्वाममोचयिष्यम् । राजशासनानुरोधेन वध्यं त्वा नाद्यैवघातयामि । दण्डधनं ऋणरूपेण वा याञ्चारूपेण वा अधिगतु दिनमेकमवकाशो दीयत इति ।

एतदेकदिनावधिदानं धनपालस्य महानुग्रहइव नादृश्यत । तत्राबीशनगरे तस्य न कोपि परिचितो बभूव । तस्मात्तस्य धनदाने शक्तिसम्भावनापि नासीत् । एवं स धनपालो निस्सहायो निरस्तजीविताशश्चाराधिपतिनागृहीतो राजान्तिकादपसारितः ।

अबीशनगरे सर्वोपि जनो ममापरिचित एवेत्यमंस्त धनपालः । कुमारान्वेषणतत्परतया स्वयं प्राणापदमापन्नोऽभूत् । किंतु यमयमन्विष्यति स कनिष्ठो ज्येष्ठश्चोभौ तस्मिन्नेव नगरे आस्तामिति न विवेद धनपालः । तस्य पुत्रावुभौ न केवलमेकाकृती अपित्वन्तपाल इत्येकाभिधौ । बालकिंकरौ द्वावपि दामोदरनामानौ । धनपालस्य कनिष्ठः पुत्रोऽन्तपालोयं पितान्विषेष स बालकिंकरेण दामोदरनाम्ना सह तस्मिन्नेव दिने तामबीशनगरीं प्राप । तस्यापि सीरदेशवैदेहकत्वाज्जनकस्यापतितामापदमेवाप्राप्स्यत् । दिष्ट्या तत्र दृष्टः कश्चित्सुहृत् । "त्वमपि स वृद्धवणिगिव दंडमदत्वा बन्दीकृतो भविष्यसितस्मात्स्वदेशनाम निगूह्य पीडनगरादागतोस्मीत्यात्मानं प्रथयेति यदि नोपादेक्ष्यत् । एवमेव करिष्यामीत्यन्तपालोऽङ्गीकृतवान् ।

स्वदेशीयस्य पुरुषस्योपस्थितं व्यसनं श्रुत्वा देशाभिमानेन भृशमखिद्यत् । किंत्वयं वृद्धस्स्वपितैवेति नमनागपि ज्ञातुं शशाकान्तपालः । (Antipholus of Syramse)

धनपालस्य ज्येष्ठपुत्रः (Antipholus of Ephesus) अबीशनगरवासी अन्तपालस्तत्र विंशतिवर्षाण्युवास । धनिकत्वात्पितृविमोचनाय निष्क्रयधनं सहस्रं दातुं प्रबभूव । पितुः परिचयगन्धोपि तस्य नासीत् । स हि शैशवदशायामेव समुद्रजलनिमग्नोजालिकैरुद्धृतो मात्रा साकं जालिकगृहे निहितः पोषितोऽभूत् । पितुर्वा मातुर्वा स्मृतिस्तस्य नोत्पन्ना । एते मत्स्यजीविन एनमंतपालं कनिष्ठेन दामोदरेण सह रुदंत्या मात्रा वियोज्य दास्यवृत्त्यै विक्रेतुमपजह्रुः ।

अथैतावन्तपालदामोदरावबीशनगराधिपस्य मातुलेन मानपालनाम्ना दाशेभ्यो महता पण्येन क्रीतौ । एकदा समानपालो भागिनेयं द्रष्टुं गच्छन् दारकद्वयमपि तत्र निनाय । अबीशनगरेशो बालमन्तपालं विलोक्य तस्य कमनीयाकृत्या जातप्रीतिश्शरीरसौष्ठवाष्टक्कचित्तः प्ररूढयौवनं तं स्वसैन्येऽधिकृतं चकार । सोपि सेनानेतृत्वे व्यूहरचनायां परं प्रावीण्यमुपगतो बहुषु संग्रामेषु निजदोर्विक्रमेण विजितारिमंडलः प्रथित आसीत् । अथैकदा समुपस्थितेऽसमसमरे स्वशौर्यविभवेन स्वामिनः प्राणान् ररक्ष । परितुष्टो राजा अबीशनगरी-

स्थितां कांचित्तरुणीं धनाढ्यामस्मै दापयित्वा विवाहमकारयत् । पितुरागमनकाले दामोदरेण सेव्यमानो भार्यया सह स तत्रैवोवास ।

अथ सीरपुरीवास्तव्योऽन्तपालस्तु प्राणपरिरक्षणोपायमुपदिष्टवता मित्रेण सह तन्नगरीविशेषदिदृक्षाकुतूहलाकृष्टचित्तो गच्छन्स्वभृत्यहस्ते किंचिद्द्रव्यं दत्वाऽभ्यवहारादिकं कल्पयितुं पथिकविश्रमस्थानं प्रेषयामास ।

असौ दामोदरो मनोज्ञगुणः । सौम्यदर्शनः । परप्रीतिकरः । मंजुभाषी च । यदा यदाऽन्तपालः पितृवियोगखेदेन विषण्णमुखस्समदृश्यत तदा तदाऽसौ निजरसिकतानिवेदकैर्दासे रोचितैः परिहासभाषितैस्तस्य मनो विनोदयति स्म । लोके विद्यमानात्सेवकस्वातंत्र्यादधिकतरं स्वैरसम्भाषणस्वातंत्र्यमन्तपालेनास्मै दत्तं । नष्टयोर्जननीसोदरयोरन्वेषणाय सीरदेशवासी अंतपालो दामोदरं बहिः प्रेषयित्वा एकाकिनश्चात्मनः पर्यटनं चिंतयन्विमनास्स्वगतमाह । "मयाऽन्विष्यमाणौ तौ न कुत्रापि समासादितौ । अन्विष्यतामयातयोः प्रवृत्तिर्लेशतोपि न कुत्रापि ज्ञायते । पारावारे स्वेतरमुदबिंदुमन्विष्यान्विष्य स्वयं विशीर्यमाणो जलबिंदुरिवाहमप्यतिविस्तीर्णे भूतले मातरमग्रजं चान्विष्य व्यर्थश्रमो विनंक्ष्यामि ।

एवं तस्मिन्नध्वखेदखिन्नमात्मानमनुशोचत्युपावर्तमानं कंचित्पुरुषमाराद्वीक्ष्य तुल्याकृतित्वात्तं निजप्रेष्यं दामोदरममन्यत । तस्य द्रुतनिवृत्त्या विस्मयाविष्टः किं कृतवानसि मयादत्तं धनमिति तमपृच्छत् । अंतिकमागतं तं सम्यङ्निरूप्य नासौ मम किंकर इत्यबोधि । असाववीशनगरवासिनोऽन्तपाऽस्य किंकरस्य यमजो भ्राता । द्वावन्तपालौ । द्वौ दामोदरौ च धनपालेन यथोक्तं तथा बाल्यइवाद्याप्यभिन्नाकाराः । तस्मादन्तपालः प्रतिनिवृत्तं त वीक्ष्यायं मम भृत्यो दामोदर इत्यमंस्त । नैतच्चित्रम् । कथं शीघ्रं प्रतिनिवृत्तोसीति तं पप्रच्छ ।

दामोदरः—आर्य! मध्याह्नभोजनाय त्वरितमागम्यतामिति मन्मुखेन देवी विज्ञापयति । आर्य द्रुततरं नागच्छसिचेत् संस्कृतमन्नं शीतलं भवेत् ।

अन्तपालः—अरे किमेभिः परिहासवचनैः । कुत्र न्यस्तं धनं ।

दामोदरः पुनस्तथैव स्वामिनी त्वां भोजनायाह्वयतीति प्रत्यभाषत ।

अन्तपालः—केयं स्वामिनी ।

दामोदरः—किं तथा पृच्छसि । अत्र भवतो जाया । अन्तपालोऽद्याप्यकृतदारपरिग्रहतया दामोदरस्य भाषणाद्भृशं क्रुद्ध इदमाह "रे मूढ यदहं त्वया मुहुरतिपरिचयात्संलपामि

तन्मामेवं यथेष्ट परिहससि । नाहमिदानीं खेलनपरः । कुत्रास्ते धनं वैदेशिकत्वाद्वयमत्रत्येषु न कंचिदपि विश्वसेम। दामोदरस्वामिनः प्रतिवचनं श्रुत्वा सोपि परिहासवचनानि वक्तीति मत्वा आह । देवभोजनसमये मा परिहसितुमर्हसि । नेदानीं । भोक्तु वेलेति त्वा ज्ञापयितुं देव्या प्रेषितोऽत्रागतोस्मि । तच्छ्रुत्वाऽन्तपालस्तीव्रमन्युः परित्यक्तक्षमो दडेनाताडयत्तं । सोपि लगुडप्रहारजर्झरितगात्रो रुदन्गृहाभिमुखं प्रधाव्य "देवि ! अस्मत्स्वामीभोजनाय गृहमागंतुं मया प्रार्थ्यमानोपि नायातः । प्रत्युत कुतो मे भार्येति चावदत् ।

अतपालस्य प्रिया आद्रियाना "नास्ति मे भार्येति" वदतो भर्तुर्गदितं श्रुत्वाऽतिमात्रं चुकोप । सा हि भर्तरि साभ्यसूया मत्तो रूपवत्तरायामन्यस्यामार्यपुत्रो नूनमनुरक्तो भवेदिति जगाद । तदा प्रभृति देवी भर्तुरविनयेन दुर्मनायमाना शुचान्तःपरितप्यमाना भर्तारं निर्दयं विनिंदितुमारेभे । लासिकाभिधया स्वस्रा "अकारणशंकां कोपं च हातुं प्रार्थ्यमानापि सा नांगीचकार ।

सीरनगरवासी अन्तपालः पथिकालयं गत्वा तत्र रक्षितधनं स्वभृत्यं दामोदरमद्राक्षीत् । तत्कृतपरिहासोक्तीर्विचिंत्य तं निर्भर्त्सयितुं प्रवृत्तेऽन्तपालेऽथाद्रियाना तमुपगम्य स्वपतिरेवायमिति मत्वा निश्शङ्कं परुषवचनैस्तं तर्जयामास । "कथ-

मकाण्डे आर्यपुत्र अपूर्व इव संवृत्तः । विवाहात्पूर्वं कथं मय्य-
नुरक्तोऽसि । तादृगनुरागमिदानीं पश्चात्कृत्य कथमिदानीम-
न्यसंक्रान्तहृदय इव लक्ष्यसे । कुतो मयि विरक्तोसि ”
इत्यवदत् । अन्तपाल एतद्वचांसि श्रुत्वा विस्मितः “सुंदरि !
किं वृधापदेशैः । नाहं तव भर्ता अत्रागतस्य मम मुहूर्तद्वय-
मेवाभवत् । नाहं त्वां जाने । नापि त्वं मामिति प्रतिभाष-
माणोप्यन्ततस्तया निर्बध्यमानोऽनिच्छन्नपि तद्गृहगमनाय मन-
श्चकार । आद्रियानया दयितेति तद्भगिन्या भ्रातरित्याहूय-
मानोऽभ्यवहारकृत्यं निरवर्तयत् । चित्रीयमाणहृदयोऽचिंतय-
देवम् । “किमिय मया परिणीतपूर्वा । उताहो मे चित्त-
विभ्रमः । अथवेयं स्वप्नावस्था इति ।” तयोरनुयायी
दामोदरोपि तथैव विस्मितोभूत् । आद्रियानायाः पाचकी
दामोदरसोदरस्य भार्या एनं स्वपतिममन्यत ।

अथ सीरनगरवासिन्यन्तपाले भ्रातृजायया आद्रिया-
नया साकं भुंजाने मध्याह्नसमये किंकरेण दामोदरेण साक-
माजगाम तस्यास्सत्यभर्ता । तथापि न कोप्यन्तःप्रवेष्टव्य इति
स्वामिन्या आज्ञप्ताः किंकराः कवाटं नापावृण्वन् । तदा तौ
स्वनामोच्चार्य “अपाव्रियतांकवाट” इति मुहुर्मुहुररमताड-
यताम् । अंतपालदामोदरावभ्यन्तरएवासाते । एको भुंक्ते
अपरो महानसे वर्तते । कथमपरावंतपालदामोदरौ कुत आ-

यातावित्ति तत्र स्थितो भुजिष्याजनः परस्परममंत्रयन् । मुष्टिघातैर्निर्भिन्नकवाटावपि तौ प्रवेशं न लेभाते । अंतेऽन्तपालः क्रुद्धो निववृते । कश्चित्परपुरुषस्स्वभार्यया सह भुंक्ते इति श्रुत्वा विस्मितश्चाभूत् ।

अथ सीरनगरवासी अन्तपालस्समाप्तभोजनस्सन्नाद्रियानया अद्यापि भर्तृशब्देन व्याह्रियमाणोऽसहिष्णुरस्या निर्बन्धमसहमानो येन केनापि व्याजेन गृहाद्बहिराशु पलायितुमेवेहां चक्रे । पाचक्या भर्तृत्वेनाभिमन्यमानो दामोदरोपि तथा कर्तुमैच्छत् । आद्रियानाया भगिन्या लासिकाया प्रीतिमानप्यन्तपालोऽसूयाविष्टायामाद्रियानायां विरक्त आसीत् । दामोदरोपि पाकशालाया स्थिताया चेट्यामपि विरक्तोऽभूत् । तस्मात्स्वामी भृत्यश्चोभावभिनवकान्ते परित्यज्य । क्षिप्रमन्यत्र गंतुमीषतुः ।

अथ सीरनगरवासी अंतपालो यावद्बहिर्जगाम तावत्पथिकेन चित्स्वर्णकारेण दृष्टः । शिल्पी चाद्रियानेव आकृत्यैक्येन सोऽबीशनगरवासी अंतपाल इति भ्रान्त्या तं नाम्ना संबोध्य कांचित्कनकशृंखलामदात् । ततोऽन्तपालो नेयं मदीयेति ब्रुवंस्ता शृंखलां स्वीकर्तुं नैच्छत् । भवदाज्ञयैव मया कृतेत्युक्त्वा तां कनकमयशृंखला तस्योपरि क्षिप्त्वा यथेष्टं जगाम ।

अथ एषोन्तपालएभिः कर्मभिर्मुह्यमानचित्तो "नेतः परमत्र स्थातव्यं अत्रावस्थानेनाण्वपि क्षेमं न पश्यामि तदितो द्रुततरं पलायनमेव वरमिति" निश्चित्य सर्वं स्वीयपरिच्छदं समुद्रे नौकायां निधेहि" इति स्वभृत्यं दामोदरमादिश्य प्रस्थाने कृतमतिरासीत् । अथ सीरदेशवासिनेऽन्तपालाय दत्तकनकाभरणस्वर्णकारो दत्तपूर्वाय धनाय राजभटैर्निरुरुधे । यदृच्छया तत्रागतमन्तपालं दृष्ट्वा स शिल्पी मया मुहूर्तादधस्ते दत्तस्य कनकसूत्रस्य मूल्यं दीयतामिति पप्रच्छ । "न किमपि मे त्वया दत्तं न किमप्यहं ते धारयामीत्यंतपालः प्रत्याचख्यौ । मया दत्तस्याभरणस्य मूल्यमवश्यं त्वया देयमिति नार्डिधमः न त्वया किमपि मे दत्तं, न किमप्यहं जाने इत्यन्तपालश्च परस्परं चिरं विवादं चक्रतुः । उभयोरपि स्वस्वपक्षएव सत्यइत्यभिनिवेशः । तयोर्भ्रात्रोरन्तपालयोरूपैक्यैन । स एवायमिति भ्रात्या कनकसूत्रं तस्मै अददामिति स निश्चयमुवाच । अंते राजनियोक्ता दातव्यधनप्रत्यर्पणाय तं शिल्पिनं बंधनागारं निनाय । तदानीमेव कलादोपि कनकसूत्रमूल्यायांतपालमपि राजपुरुषैर्न्यरोधयत् । तस्मात्तयोर्विवादपरिच्छेदायोभावपि चारकं नीतौ ।

अंतपालः कारागृहं नीयमानो मार्गमध्ये भ्रातुः किंकरं दामोदरं दृष्ट्वा आकृतिसादृश्यादयमेव मदीयो भृत्य इति भ्रान्त्या "गृहं गत्वा मद्भार्यायै मदुपस्थिता विपत्तिं कथयित्वा

मद्विमोचनाय कनकसूत्रमूल्यं सत्वरमादायागच्छे"ति तं शशास । य इदानीं यस्मिन्गृहे भुक्त्वा निवघृते यत्र न स्थातव्यमिति निश्चित्य शीघ्रं प्रस्थातुं मनो दधे स कथमिदानीं तदेव गृहं गन्तुं मां नियुनक्ति मत्स्वामीति विस्मितो दामोदरः "नौका स्वदेशं गन्तुं सज्जीकृता क्षिप्रमागम्यतां" इति तस्मै निवेदयितुमागतोप्येतन्नियोगं श्रुत्वा तं परिहसितुं नायमवसर इति निश्चित्य तस्य नोत्तरं ददौ । इदानीं प्रतिनिवृत्तोहं कथं पुनस्तद्गृहं गमिष्यामि । यत्र दासबला मा भर्तारमभिमन्यते । तथापि मया गंतव्यम् । भृत्यैस्स्वामिना माज्ञा अवश्यमनुष्ठातव्या । इति मनसि चिंतयन्स जगाम ।

अथाद्रियाना अपेक्षितं धनं तस्य हस्ते दत्तवती । स धनमादायागच्छन्मार्गे सीरनगरवासिनमन्तपालमद्राक्षीत् । अयं स्वामिनोऽद्भुतचेष्टाभिः परं विस्मितोऽभूत् । अबीशनगरेऽन्तपालस्य प्रख्यातपुरुषतया पथि गच्छत्सु जनेषु न कोप्यनभिवादक आसीत् । अधमर्णाः केचित्तस्मै धारितं धनं ददुः । केचित्त निजगृहं प्रति निमन्त्रया चक्रुः । तेनोपकृतपूर्वाः केचन तं ववन्दिरे अबीशनगरवासी अंतपालएवायमिति सर्वे भ्रांतिमवापुः । त्वत्कृते इमानि दुकूलवासांसि क्रीतानीति कश्चित्सौचिको दर्शयित्वा कंचुकविरचनाय त्वद्देहपरिमाणं मे देहीति बलात्कृतवान् । मायिनामिद्रजालिकाना च मध्ये स्थितमिवात्मानममन्यतान्तपालः । बंधनागारं नयतो राजाधिकृतात्कथं

मोचितोसीति दामोदरेण पृष्टा कुशलवार्ताप्यनेन व्यसनेनाकुलीकृतबुद्धि तं न सुखितंचकार। ऋणमपाकर्तुमाद्रियानया प्रेषितं धनमपि न तस्य मनस्तुष्ट्यै। प्रत्युत स्वभृत्यस्य कुशलानुयोगंवा आद्रियानया दत्त धनं वा त व्यामुग्धमकार्षीत्। स मनस्येवमाह। नूनमयं दामोदरोपि मूढो बभूव। वयमपींद्रजाले बंभ्रम्यमाणास्स्मः। एतदाश्चर्यावस्थायां मां रक्षतु कश्चिद्दिव्य इति पर्यदेविष्ट।

अथ काचिद्विदेशीयांगना तत्रागत्य अंतपाल इति तं संबोध्य "परेद्युर्भवान्मया सहाऽभ्यवहृतवान। तदा मह्यं भवान् कनकसूत्रं दातुं प्रतिशुश्रुवान।" इत्युवाच। तच्छ्रुत्वान्तपालो नष्टक्षमस्सक्रोधमिदमाह। "अपेहि मायाविनि अपेहि। ते कनकसूत्रं दातुं न कदाचिन्मया प्रतिज्ञातं। त्वया सह कदाचिदपि मया भुक्तमपि न। इतः पूर्वं त्वन्मुखमपि न मया दृष्टं। एवं सा नारी अंतपालेन निषिध्यमानापि "त्वं मद्गृहे भुक्तवानसि भोजनसमये कनकशृंखलां मह्यं प्रत्यश्रौषीः। इत्यभिदधौ। अंतपालस्त्वेतत्सर्वं निराकृतवान। तथापि सा तादृग्भाषणादविरमन्ती मुहुः पूर्वोक्तमेवोद्घाटयन्ती बभाषे॥

आर्य! मया तेगुळीयकमेकं दत्तं यदि कनकसूत्रं मह्यं न ददासि तदगुळीयकमपि नाहं प्रत्यर्पयामि। तदुपर्यन्तपालस्तद्वचनमाकर्ण्य क्रोधान्धस्तां मायाविनीति पुनश्शपन् स्ववचनाकर्णनजातविस्मयां तां तत्रैव परित्यज्य पला-

यितः । तेन साकं तस्यास्सह भोजनं तस्मै ऊर्मिकादानं कनकशृंखलायाः पारितोषिकीकरणे तस्य प्रतिज्ञा चेत्येतत्सर्वं तस्यास्तथ्यमेवाबभौ । एषापि हि अन्यजनसाधारणीं भ्रांति दधौ । एनमबीशनगरवासिनमन्तपालं निश्चित्य तया आरोपितास्सर्वाः क्रियाः गृहमेधिना अंतपालेन कृता नत्वनेनेति मेने ।

श्रीमानन्तपालस्स्वभार्ययाऽदत्तप्रवेशो गृहान्निष्कासितस्सुसंक्रुद्धो ममान्यनारीसम्पर्कमसहमाना कोपकलुषिता एवं कृतवतीति मन्वानस्तस्या वैरमपाकर्तुमेनामंगना प्राप्य तद्गृहे भोक्तुमध्यवससौ । सापि भार्यया प्रकोपितचित्तमेनमादरेण सत्कृत्यातिथ्यं ग्राहयामास । तदा अयं भार्यायै दित्सितं कनकसूत्रमस्यै प्रतिशुश्राव । कलादेनास्य भ्रात्रे भ्रान्त्या दत्तं कनकसूत्रमपि तदेव । अंतपालस्य पारितोषिकप्रतिज्ञयातिमात्रं संतुष्टा सा योषिदस्योर्मिका ददौ । एषास्य भ्रातरं सीरनगरवासिनमन्तपालं दृष्ट्वा रूपसाम्येनायमेव सपत्नीकोऽन्तपाल इति मत्वा कनकसूत्रं दातुमपृच्छत् । तेन निषिद्धा । स एवेदानीं नष्टमतिरुन्मत्तो बभूवेति निश्चिकाय । सद्यएव तस्य जायामाद्रियाना गत्वा भर्ता तवोन्मत्तोऽभूदिति निवेदयितुं तत्वरे । एतस्यामाद्रियानायै तद्वृत्तांतं निवेदयंत्यां तत्पतिरन्तपालः काराध्यक्षेणानुयातो ऋणनिर्नेजनाय द्रव्यमादातुं तेनानुमतो गृहमाजगाम । इतः पूर्वमेव सा ऋणधनं दामोदरेण भर्त्रे प्रजिघाय । सत्वपरस्मै अंतपालाय ददौ ।

अथान्तःप्रवेशालाभात्तद्भर्त्री निंदिता आद्रियाना तया योषिता कथितं निजवल्लभस्योन्मादवृत्तांतं विशश्वास। गतदिवसे मध्याह्नसमये भृत्येन भोजनायाहूतः "नाहं तव पतिः। अद्यै-वाहमिमं प्रदेशमागतोस्मि। नेयमबीशनगरी मया दृष्टचरी।" इति तस्य निषेधवचनानि सा स्मारं स्मारं निश्शंकं स उन्मत्त-एवेति निरनैषीत्। तस्मात्सा दातव्यं धनं काराधिकारिणे दत्वा तं व्यमोचयत्। तं स्वभृत्यैस्संयतकरचरणं कारयित्वाऽन्धकारावृते कस्मिंश्चिदपवरके निवेशयामास। तद्वातूलतामुप-क्रमितुं कंचिदगदंकारमप्यानेतुं किंकरान्समादिदेश। एतस्मि-न्समयेऽन्तपालो निजभ्रातृरूपसाम्यादात्मनि पातितोयमुन्मत्त-इत्यभियोगो मृषेत्युच्चैराचुक्रोश। किंत्वस्यायमाक्रोशः "अय-मुन्मत्तीभूत इति तेषा प्रत्ययं नितरां दृढीचकार। "अस्म-त्स्वामिनोक्तं न मृषोद्यं। तत्सर्वं सत्यमेवेति दामोदरेणोद्धुष्टेपि "असावपि तदवस्थएवे"ति भावितस्स्वामिन एव गति लम्भितः।

यावदाद्रियाना सभृत्यं भर्तारं बंधनागारे निदधे ताव-देव कश्चिद्भृत्य आगत्य "देवि! दामोदरांतपालौ बन्धनादा-त्मानं मोचितवन्तौ। नोचेत्तौ स्वैरं रथ्यासु विहरमाणौ कथं मया प्रत्यक्षीकृता" वित्यकथयत्। एतद्वार्तां श्रुत्वा कतिपयज-नैरनुयाताऽद्रियाना तमानेतुं गृहान्निर्ययौ। तस्यास्स्वसापि तामन्वियाय। कंचिद्बौद्धविहारद्वारमासीदन्तस्ते सर्वे स्वाभ्यूह-

नानु गुणभारात्परिवर्तमानौ यमजत्वात्तुल्याकृत्या वंचिता दामोदरान्तपालावपश्यन् ।

सीरनगरवासी अंतपालो निजसोदररूपसाम्यादुत्पन्ने चित्तवैक्लब्यजलधौ निमज्जनोन्मज्जनानि कुर्वाण आसीत् । स्वर्णकारेण दत्तं कनकसूत्रं स्वकंठे धारितवान् । तन्मूल्यस्यादानात्स्वर्णकारो मुहुस्तं निनिन्द । अयं कंठलग्नमपि तद्वस्तु मत्रिकटे नास्तीत्यपलपवान् । अद्यैव प्रभाते केनचित्स्वर्णकारेण मह्यं मूल्यमगृहीत्वा दत्तं तत् क्षणात्प्रभृत्यद्यापि न मया दृष्टस्सः ।

अथाद्रियाना तस्यान्तिकं गत्वा "भवान्मे पतिरुन्मत्तीभूतः बन्धने क्षिप्तः । कथं चिदात्मानं विमोच्य पलायितो सीत्युवाच । तदनुयायिनः पुरुषाश्च प्रसभं तावंतपालदामोदरौ निरोद्धुं परिकर बबन्धुः । ततस्तावुभौ भीतौ प्रपलाय्य विहाराभ्यन्तर प्रविश्य विहारपालिन्यीं शरणं जग्मतुः ।

अथ सा मठाध्यक्षा कोयं जनक्षोभ इति विज्ञातुं मठाद्बहिराजगाम । सा योगिनी गंभीरप्रकृतिरार्यशीला, अभ्यर्हणीया स्वाश्रयायोपागतं जनं न परित्यजेत् । तस्माद्भर्तुरुन्मादे भार्यया कथिता कथामादितस्सावधानं श्रुत्वा "त्वद्भर्तुरकांडचित्तविकारोत्पत्तौ को वा हेतुरिति पप्रच्छ । किं समुद्रे दस्युभिर्मुषितधनः? किमसौ स्निग्धेन बन्धुना वियोजितः? किं वास्य चित्तविकृतेर्निमित्तम्! आद्रियाना । आर्ये! पूर्वोक्तेष्वेकमपि नास्य चित्तविकारे हेतुः ।

मठाध्यक्षा—प्रायशस्त्वत्तोऽन्यस्यां कामिन्यामनुरक्तस्तयैवेतादृशीमवस्था गमित इति तर्कयामि ।

आद्रियाना—मुहुर्मुहुर्गृहे तस्यासान्निध्यादन्यवनितालम्पट इति तर्कयामि । यथास्य भार्यया चिन्तितं तथास्य मनोविकारहेतुर्न स्त्री । किंतु कोपशीलाया अस्य भार्याया असूयया पीडितस्सन्गृहं परित्यज्य बहिर्गन्तुं बलात्कृतः आद्रियानायाश्चंडतावशादेवायमेवं कृतवानिति सा विहाराध्यक्षा विशङ्कमाना याथार्थ्यमवजिगमिषुराह । अस्मिन्विषये भवत्या स किं नोपालब्धः ।

आद्रियाना—त बहुवारं निरभर्त्सयम् ।

मठाध्यक्षा—तन्न पर्याप्तमिति मन्ये ।

आद्रियाना—मयात्यंतं गर्हितोपि मम वचनं न शृणोति । अयमेव सर्वदा अस्मत्संकथाविषयः । रात्रौ मया सह शय्यायां स्वपितुमपि नाभ्यनुजानामि । भोजनवेळायामावयोस्सहभोजनं न विद्यते । यदाहं तेन सहैकासने निषीदामि तदाबद्धमौनास्मि । तन्निवारणायैवासकृत्तं बोधयामि । तथापि स सर्वामत्प्रार्थना मदुपदेशांश्च अनादृत्य अन्यसंक्रांतहृदयो बभूव तस्मिन् सर्वे मदुपदेशाः कृतघ्ने कृता उपकारा इव निष्फला बभूवुः । ततस्सा मठाध्यक्षा भर्त्रेऽसूयंत्या आद्रियानया निगदितं सर्वं श्रुत्वा प्राह । किमत एव त्वत्पतिरुन्मत्त इति शकसेसेष्यांगनाया दारुण आक्रोश आलर्काद्विषात्क्रूरतरः। त्वदा-

क्रोशेनैव तस्य निद्राभंगोऽजनीति मया ज्ञायते। निद्राभावादेवतस्य शिरोवेदना जातेति नाद्भुत। तस्याहारस्तव कटुभाषणैरेव संस्कृतः। अनादरेण दत्तमन्नं न जीर्येत। अतएव स ज्वरितोऽभूत्। मम कलहेनैव तस्य क्रीडा भग्ना इति त्वमेव ब्रूषे। तस्मादसूयाविष्टा त्वमेव त्वद्भर्तुरुन्मादस्य निमित्तं जातासि।

प्रशांतवचनैरेव मे भगिनीभर्तारं बोधयतिस्मेति तत्सोदरीलासिकाऽवदत्। सा पुनर्भगिनीमुवाच। 'भगिनि! प्रत्युत्तरमददती एतानि निदावचासि कियच्चिरं सहसे।" आद्रियाना मठाध्यक्षाया वचनोपन्यासेन दर्शितस्वदोषा किमपि वक्तुमपारयंती मम दोपमेव मह्यं दर्शितवतीत्यूचे।

स्ववृत्तेन ह्रीणाप्याद्रियाना तया गृहीतस्य भर्तुः प्रत्यर्पणे मठाध्यक्षां प्रार्थितवती। किंतु सा कस्याचिदपि नूतनागतस्य स्वगृहे प्रवेशं दातु वा मत्सरिण्यास्तस्या हस्तेऽन्तपालमर्पयितुं वाऽनिच्छन्ती तस्य प्रतीकारे शांतोपायान्विनियोक्तुं निश्चिन्वाना गृहाभ्यन्तरं प्रविश्य द्वाराणि पिधातुं भटानाज्ञापयामास।

एतद्व्यतिकरविशिष्टेऽस्मिन दिने यमयोस्सोदरयोरंतपालयोरूपसादृश्येन सर्वेषु जातमति विभ्रमेषु धनपालस्य दंडधनं दातुं राज्ञा दत्तमवधिदिन व्यतीयाय। अत्रान्तरे भगवान्सहस्रदीधितिरस्ताचलशिखरं डुढौके। धनपालो दंडं दातुमश-

क्ततया निश्चितवधोऽभूत् । तस्य वध्यस्थानं बौद्धविहारस्य समीपभूमावेवनिर्दिष्टं मठाध्यक्षाया मठाभ्यन्तर प्रवेशसमनंतरमेव स धनपालोत्र प्राप्तः । यः कोपि दयालुस्तन्मोचनाय धनं ददाति चेत्तं रक्षितुं राजापि स्वयमत्रागतः ।

अस्मिन्व्यतिकरे आद्रियाना परिवारेण सहागच्छंतं नरपतिं दृष्ट्वा "इयं मठाध्यक्षा योगिनी उन्मत्तं मे पतिं स्वगृहे निगूह्य मया मुहुर्याचितापि दातुं नेच्छति । तस्मादत्र भवान् मे पतिं दापयितु मनुगृहाण" इत्युच्चैराचक्रंद । एवं तस्यां राज्ञे स्वदुःखं निवेदयंत्यां भृत्येन दामोदरेणान्वितस्तस्यावास्तवो भर्ताऽन्तपालो बंधनागाराद्विमुक्तोऽत्रागत्य "अहमुन्मत्तस्संवृत्त इति व्याजं परिकल्प्य मम जाया आद्रियाना मां चारके निक्षिप्तवतीति"तस्या अविनयमधिकृत्य राज्ञे विज्ञापयामास । अयश्शृंखलाबन्धस्य विश्लथीकरण प्रकारं जागरूकान् तत्रत्यरक्षिपुरुषान्वंचयित्वा चारकादात्मनोऽपसरणं च कथयामास । आद्रियाना मठाभ्यन्तरे स्थित इति यमभ्यौहिष्ट तं स्वभर्तारं तत्र वीक्षमाणा विस्मिता बभूव ।

अथ धनपालस्तमंतपालं दृष्ट्वा "अयं स्वसुत इति प्रत्यभिज्ञायायमेव सोदरजनन्योरन्वेषणाय देशांतरं गत इति निश्चित्य ननंद । असौ मम प्रियतनूजो मया देयं दंडधनं स्वयमेव दत्वा अस्या विपदो मां निस्तारयेदिति अपगतभीर्बभूव । पितृवात्सल्यपूर्णहृदयः आत्मनो विमोक्षणमधिकृत्य बद्धप्रत्याश-

स्तेन सह प्रीतिपूर्वकं बभाषे । किंतु सपुत्रो धनपालस्य मनसि विस्मयं जनयन् त्वामहं न जानामीत्यूचिवान् अयं ह्यंतपालश्शैशवेचंडमारुतक्षुभिते समुद्रे प्रवहणभंगात्पितुः पार्श्वाद्दैवयोगेन वियोजित आसीत् तदा प्रभृति न कदाचित्पितृमुखं ददर्श । इति सत्यमेव । तथाप्ययं तपस्वी धनपालो मदनुभूतव्यसनपरंपरावशादन्यथाभूतं विकृतिप्राप्तं मां प्रत्यभिज्ञातुं न शशाकेति बहुधा मनसि विकल्पयन् "अहं त्वत्पितेति" तं प्रतिबोधयितुमयतत । अस्मिन्समये मठाध्यक्षा अपरोऽन्तपालोदामोदरेण सह बहिर्निरगच्छता । तत आद्रियाना विस्मयाविष्टा भर्तृद्वयं दामोदरयुगळं च पुरत ऐक्षत ।

एतावन्तं कालं सर्वजनमनोनिगूढो गाढोयं भ्रम इदानीं निवारित आसीत् । राजा तुल्याकृतीद्वावन्तपालौ द्वौ दामोदरौ वीक्ष्य सर्वेषां दुर्बोधमिदं रहस्यमुद्घाटितवान् । प्रातर्धनपालेन कथितां तदीया कथा सुष्ठु सस्मार । द्वाविमौ धनपालस्य यमजौ सुतौ । अपरावनयोः किंकरावित्यकथयज्जनससदि ।

अथ धनपालस्य चरितमतर्कितोपनतेनानंदेन समाप्तिमगमत् । प्रातस्तेन राज्ञे निवेदिता दुःखबहुळा आत्मीया कथा सूर्यास्तमयात्प्राक्सुखपरिणतिस्समवृत्ता । पूज्या सा मठाध्यक्षा "अहं चिरान्नष्टा तव धर्मपत्नी । द्वयोरंतपालयोः प्रसूश्चास्मीति धनपालायाकथयत् ।

सा धीवरैर्ज्येष्ठपुत्रा द्दामोदराच्च वियोजिता। एकं मठं प्रविवेश। तत्र सा स्वसद्वृत्तया विवेकेन च क्रमेण मठाध्यक्षतां प्राप। दुःखिताय कस्मैचिदागतुकाय यूने आतिथ्यं कुर्वाणापि "अयं मे पुत्र इत्यजानाना स्वसुतमेवापुषत्। तदा तौ सुतौ पितरौ च परस्परसमागमजनितमहानंदाब्धिनिमग्नास्सर्वे मिळित्वा परस्परगाढालिंगनकुशलसंप्रश्नादिकं कृत्वा आनंदपरवशतया क्षणं जडावभूवुः। धनपालस्य राजदंडं विसस्मरुः। किंतु कथंचिदुपशान्ते तत्संभ्रमे अबीशनगरवासी अंतपालः पितुर्विमोक्षणाय निष्क्रयधनं राज्ञे समर्पितवान्। किंतु राजा धनपालं प्रीत्या क्षाम्यन् धनं गृहीतुं नैच्छत्। एतैस्सहितो राजा मठं प्रविवेश चिरवियोगानंतरं संगतानां एतेषां कुशलसंप्रश्नादिविस्रम्भालापश्रवणेन श्रोत्रं सुखयितुं तपस्विनोरेतयोर्दामोदरयोः प्रमोदोपि वागतीत आसीत्।

आद्रियाना श्वश्र्वा उपदेशेन बहूपकृता भर्तरि शंकामसूयां च परित्यज्य तस्मिन्ननुरक्ता चिरं सुखमुवास। सीरनगरवासी अंतपालो भ्रातृजायाया भगिनीं लासयानाख्यामुपयेमे। वृद्धो धनपालोपि निजभार्यया पुत्राभ्यां च सह तत्राबीशनगरे कृतनिकेताश्चिरं सुखमुवास।

समाप्ता रूपसाम्यभ्रांतिः।

---

## 11 Winter's Tale ( शीतर्तुकथा )



Dramatis Personæ.

1. Leontis = विमलाश्वः
2. Hermione = सुशीला—तस्य भार्या.
3 Polixeneo = फलाक्षः—विमलाश्वस्य मित्रं.
4 Sicily = शशिद्वीपं
5. Camello = कामिलः—राजवल्लभः.
6 Cleomeneo = क्षमयानः—राजवल्लभः.
7. Dion = डयानः—राजवल्लभः
8 Emilia = एमिलिया—चेटी.
9 Antigonus = अंतघनः
10 Paulina = अंतघनस्य भार्या—फलिना
11 Mamillus = मामिलः—विमलाश्वस्य पुत्रः.
12. Perdita = प्रार्थिता—विमलाश्वस्य दुहिता समुद्रे परित्यक्ता.
13 Florizel = पुष्परथः.
14. Julio Romano = आलिकारामः—चित्रशिल्पी.

# ॥ शीतर्तुकथा ॥

## (WINTER'S TALE)

---

आसीदनेकसुभटसंग्रामनिशासमभिसृतविजयलक्ष्मी-स्वयंवरणसुभगो नमत्सामन्तनृपतिमकुटमणिमरीचिनीराजितपादपीठो राजराजविभवो विभवसंप्रीणितार्थिजननिवहो धर्मशील-आर्यसम्मतो विद्वान् दिगन्तरालविस्तृतनिजयशोविस्तारः अपारवीरव्रतपारगो विमलाश्वो नाम नृपतिः शशिद्वीपाधिपः। तस्य च महिषी सुशीला नाम निरुपमनिरवद्यलावतयाण्या विजयवैजयंतिकेव मकरध्वजस्य। महीमात्रसपत्न्या देव्या महत्या प्रीत्या स राजा नानाविधानि गार्हस्थ्य-सुखान्यनुभवन्प्रजापालननिरतो निनाय बहुतिथं कालम्। सर्वकामसमृद्धं प्रभूतं राज्यं परिपालयतानेन न कोपि कामोऽनवाप्त आसीत्। अजगुप्तदेशाधिपतेर्बाल्यमित्रस्य स ब्रह्मचारिणः फलाक्षस्य दर्शनावाप्तिं विहाय। स्वयं तद्दर्शनसुखमनुभवितुं तं निजमहिष्यै दर्शयितुं चाचकाङ्क्ष। शैशवात्प्रभृति तावेकत्र पोषितौ स्वस्वपितृमरणानंतरं स्वं स्वं राज्यं पालयितुं परस्परं वियुज्य गतौ। तदारभ्य नाभूत्तयोश्चिरं परस्परसमागमः पारितोषिकविनिमयक्षेमवार्ता दूतप्रेषणादिना दर्शितपरस्परप्री-

त्योस्सतोरपि अंततः फलाक्षोऽसकृदामंत्रितस्सकृद्दर्शनं दातुं प्रियसुहृदा विमलाश्वेन तं द्रष्टुं शशिद्वीपं जगाम। चिरदृष्टमेनं प्रियमित्रं दृष्ट्वा विमलाश्व आनंदामृतसरोनिमग्नः प्रथमं न विवेदात्मानं। ततः पांसुक्रीडासखं तं देव्यै दर्शयित्वा तत्सान्निध्यादानन्दपूर्तिमुपगत इवादृश्यत। बाल्यक्रीडा उपवर्णयतोस्तयोरुभयोस्संवादं श्रुत्वा सुशीला परं मुमुदे।

एवं फलाक्षे चिरमेकत्र सुहृत्संवाससुखासिकामनुभूय स्वदेशगमनाय कृतसन्नाहे सति सुशीला भर्त्राज्ञयैव कंचित्कालं स्थित्वा अनंतर गम्यतामिति" फलाक्षं निर्बबंध।

इदानीं प्रारभतास्या व्यसनसमयः। यतः फलाक्षो विमलाश्वप्रार्थनया कानिचिदहान्यवस्थातुं प्रत्यादिशन्नपि सुशीला मृदुमधुरवचोभिराकृष्टहृदयः प्रयाणाद्विरराम। विमलाश्वो मित्रस्य फलाक्षस्य मनोवैमल्यं सद्वृत्तं देव्यास्सुशीलायाश्शीलसंपत्तिं च चिरात्सुष्ठु जानन्नपि देव्या वृत्ते शंकित आसीत्। तमाराधयितुं निजचोदनाकृतोऽस्या आदरो मंदभाग्यस्यास्य महीपतेश्शंकाशीलताया दोहदमकरोत्। पुरा दृढानुरागोऽकृत्रिमोपीदानीमनया शंकया एतस्यां कृपारहित आसुरप्रकृतिरिव पीडाकरो बभूव। राजकीयसभासत्स्वेकतमं कामिलनामानमाहूयात्मनो विशंकां तस्मै निवेद्य फलाक्षं विषप्रयोगेण हंतुं समाज्ञापयत्। साधुजनाग्रणीरसौ कामिलो विमलाश्वस्य शंकाले-

शतोपि न सत्यमूलेति जानन्फलाक्षस्य विपमदत्वा राज्ञो दुष्टाशयं तस्मै निवेद्य शशिद्वीपात्तं हठादपवाह्य स्वदेशं प्रापयामास। यत्र ससुख राज्यं पालयन्नासीत्। तत्प्रभृति कामिलोपि तद्राजसभायामेव जीवन्फलाक्षस्य प्रियसुहृदभूत्।

अथ फलाक्षस्य चोरवत्पलायनेन विमलाश्वस्य मनसि शंका दिदीपेतरा। अधिकतराभ्यसूयाविष्टो बभूव। रमणीयाः कथाः कथयन्तं मुग्धमुखपुंडरीकं डिम्भकमंके निधाय तत्कलभाषितामृतं श्रवणपुटेन पिबंतीं देवीं वीक्ष्य कोपोद्दीपितमानसो बालकं तत्करादाच्छिद्य ता बन्धनागारे चिक्षेप। अमलाख्योयं राजनंदनश्शिशुरपि जनन्यामतिमात्रस्नेहेन तथाऽवमानितां चारके निबद्धां मातरं वीक्ष्य भृशमवसन्नश्शनैश्शनैस्स्रस्तगात्रबंधः कृशतामियाय। संत्यक्तनिद्रो मन्दीकृतक्षुच्च बभूव। देव्याः कारानिरोधानन्तरं राजा निजास्थानस्थितौ द्वौ राजवल्लभौ देवीचारित्रपरिशुद्धिं डेल्फासुनगरीस्थितामपोलोदेवतां प्रष्टुं प्रजिघाय। देवीकारागृहप्राप्तेरनंतरं स्त्रीशिशुमसूत। सा तपस्विनी तच्छिशुमुखकमलदर्शनादत्यंतं हृष्टमानसा शिशुमित्थमवादीत्। तपस्विनि! यथा त्वं तथाहं निरागा इति। अन्तघनाख्यस्य कस्यचित्सामन्तस्य जाया पलीनाभिधा सुशीलायां कृपावती प्रियसखी चासीत्। यदा राज्ञीं सुशीलां प्राप्तप्रसूतिं शुश्राव तदैव तत्कारागृहं गत्वा तामन्वासीना आ-

सीत् । एमिलियाख्यां चेटीमेवमाह "एमिलिये! मन्मुखेन देवीं विज्ञापय। यदि तत्र भवती मां विश्वस्य शिशुं ददाति तर्हि तं पितरं नेतुमिच्छामि। एनां निरागसं कुमारीं दृष्ट्वा राजा प्रशांतः किं प्रतिपत्स्यते जानीमहे" इति ।

एमिलिया—भवत्याः प्रार्थनां देव्यै विज्ञापयामि । सापीमां दारिकां राज्ञे दर्शयितुं प्रागल्भ्यवती या काचिल्लभ्येतेत्याशंसति ।

फलीना—ब्रूहि देवीं । दारिकायारक्षणेऽहं सधैर्यं राजानं विज्ञापयामि ।

एमिलिया—स्वस्त्यस्तु ते चिरं जीव । यादेव्यामेवं स्निह्यति ।

ततो एमिलिया तद्वृत्तांतं देव्यै विज्ञाप्य शिशुमादाय फलीनायै समर्पितवती । यतस्तां विना नान्या कापि तच्छिशुं पितुरंतिकं प्रापयितुं प्रभवेत् । ततः फलीनाशिशुमादाय गच्छन्ती दौवारिकैर्निषिद्धप्रवेशापि बलाद्राजसन्निधिं प्राप्य प्रकुप्येद्राजेति भीत्या भर्तरि सर्वथा निवारयति सति शिशुं राज्ञश्चरणकमलांतिके विन्यस्य सोपपत्तिकं सधैर्यं राजानमेवं वक्तुमुपचक्रमे ॥

राजन्—नार्हस्येवमनपराधिनीं साध्वीं देवीं पीडयितुं । किमेवमकांडे निर्घृणतरस्संवृत्तोसि । अवेक्षस्व पुत्रिकामद्य

जाताम् । मृदुलं कुरु हृदयं । ग्रहं मुंच । भवादृशा बुद्धिमंतो गुणदोषौ सम्यगविमृश्य सहसा नाप्नुवंति परिच्छेदं । तथाप्येते फलीनाया बलवत्तरा निवर्तनोपदेशा प्रत्यभिनिविष्टहृदये राज्ञि न केवलं निष्फला अपि त्वनर्थपर्यवसायिनः क्रोधोद्दीपकाश्च बभूवुः ।

एवं सक्रुद्धो राजा "निर्वास्यतामय वराकीति" तद्भर्तारमंतघनमाज्ञापयामास । अथ फलीना नृपतिरेकान्ते अनाथायाः कुमार्यादयत इति मन्वाना तां पितृसविधएव विहायाजगाम । किंतु सास्मिन्विषये भ्रांतिमियाय । तस्या बहिर्निर्गतायां सत्यां कृपारहितस्स राजा फलीनायावल्लभमंतघनमाहूय "इमां दारिकां समुद्रं नीत्वा कस्मिंश्चिद्द्वीपे परित्यज्यागच्छ" इति समादिदेश ।

अंतघनः कामिल इव न सज्जनः । स तथेति विमलाश्वस्य प्रियमाचरितुं नावा तां कुमारीं जलनिधिमध्यमानीय निर्जले सैकतप्राये द्वीपे हातुं कृतसंकल्प आसीत् । शकुनज्ञानार्थं डेल्पास् नगरीं प्रति प्रेषितयोः क्रमयानडयानयोः प्रतिनिवृत्तिं प्रतिपालयितुं यथाऽक्षमो बभूव तथासौ राजापि देव्यामपराधं स्थिरीचकार । प्रसूतिदिनापगमात्पूर्वमेव प्रियशिशुवियोगजनितदुःखभारावसन्नां देवीं क्रूरहृदयस्स राजा गुणदोषविमर्शनाय सर्वसामाजिवृंदजुष्टा सभामानिनाय । यदा सर्वे

राज्यस्थिता अधिकृता राजवल्लभास्सचिवा मंत्रिणश्च मिळित्वा सभायां स्थितास्संभावितापराधा देव्यपि स्वप्रकृतीनां पुरतो विमर्शनाय बद्धाजलिरवतस्थौ । तदा प्रश्नपरिज्ञानार्थं प्रेषितौ क्लमयानडयानौ डेल्फासुनगर्याः प्रतिनिवृत्तावास्थानीं प्रविश्य देवता प्रश्नस्योत्तरं पत्रिकाघटितं राज्ञे उपनिन्यतुः । ततो विमलाश्वो मुद्रामुद्घाट्य पत्रिकां वाचयितुं पार्श्वस्थित कंचिदादिशत् । तानीमान्यक्षराणि । "अनघेयं सुशीलाह्यन्वर्थनामधेया । निर्दुष्टः फलाक्षः । कामिलस्सत्यसन्धः अकृत्रिमः । त्वयि दृढभक्तिः । विमलाश्वः क्रूरस्संशयात्मा । नष्टं वस्तु नोपलभते चेद्राजा अंशहारहीनोभवे"दिति " अस्मिन् देवताप्रश्ने राज्ञः प्रत्ययो नासीत् । देवी पक्षीयैस्सा पत्रिका कल्पितेति तां निरस्य देवीदोषविमर्शनाय न्यायाधिपतिं चोदयामास । एवं सभासद्भीराजनि भाषमाणे कश्चित् प्रतीहारी सभां प्रविश्य "राजन् भवतः कुमारो मामिलो मातरं न्यायाधिकरणमानीतां श्रुत्वा प्राणापहारदंडमृच्छेदिति लज्जाभयशोकैराविष्टो भिन्नहृदयो हठान्मरणमवाप" इति दुर्वार्तामाजहार ।

अथ तनयवत्सला सुशीला आत्मनो दुर्जातेनैव परित्यक्तजीवितस्य प्रियतनयस्य अनभ्राशनिपातसन्निभा मरणवार्तां श्रुत्वा शोकावेगेन मुमूर्छ । विमलाश्वोप्येतद्दुःखवार्तया विदीर्णहृदयो देवी विषये स्वकृतेनापराधेन भृशं दुःखितः

फलीनाप्रमुखान् सखीजनान् देवीं समाश्वासयितुं समादिक्षत् । फलीनापि शीघ्रमागत्य देव्यपि संस्थिते त्यकथयत् ।

विमलाश्वो श्रुतदेवीनिधनो गाढं पश्चात्तप्तोभूत्वा स्वस्य क्रूरव्यापारेणैव सा भिन्नहृदया मृतेत्यमंस्त । सा निष्पापेतीदानीं व्यश्वसीत् । देवताप्रश्ने चाप्रामाण्यबुद्धिं तत्याज । यतो नष्टं वस्तु नोपलभ्यते चेदित्यत्र नष्टं वस्तु मध्ये समुद्रं निहिता बालिकेति । तस्यकुलतंतुर्नावशिष्यत इत्यस्य निजनंदनस्य मामिलस्य निधनमर्थ इत्यन्वमिमीत । नष्टां कुमारीमन्विष्य यो ददाति तस्मै सर्वं राज्यं प्रतिश्रुतवान् । तत्प्रभृति विमलाश्वोऽनुशयार्तो देवीवियोगदुःखजनितोन्मादेन मूढो बहून्वत्सरान्निनाय ।

अथांतघनो येन प्रवहणेन राज्ञः कुमारीं समुद्रं निनाय तत्प्रवहणं दैववशादुत्थितेन चंडवातेन बोहिमि यातीरदेशं नीतं यस्य भूभागस्य फलाक्षोऽधिपतिः । अत्रैवान्तघनोराजदारिका परित्यज्य गतः । कुमारीगतं वृत्तांतं राज्ञे निवेदयितुं न कदाचिन्निवर्तते स्वदेशं प्रत्यंतघनः । यतस्तत्र बालिकां विहाय पुनर्नौकामारोढुमरण्यमार्गेण प्रत्यागच्छन् भल्लूकबाहुपंजरमध्यपातितस्तन्नखकुलिशाघातविदारितकुक्षिर्वैवस्वतपुरातिथिर्बभूव । तादृशराजाज्ञाकरणस्य सद्यएवानुभूतं फलं तेन ।

मात्रा स्रग्वस्त्राभरणैस्सुष्ठ्वलंकृतायास्तस्या बालिकाया उत्तरासंगे कांचित्पत्रिकां सूच्या बद्ध्वा तस्यां प्रार्थितेति

तस्या नाम । दैवदुर्विपाकं तत्कुलीनतां चास्पष्टवचोभिर्लिलेख

अथाशरणा परित्यक्ता सा कुमारिका तत्र समुद्रतीरसैकते केनचिद्गोपेन दृष्टा । सोपि स्वप्रभया तत्प्रदेशं वितिमिरं कुर्वाणां दारिकां दृष्ट्वा दयार्द्रहृदयस्स्वगृहमानीय तां स्वपत्नीहस्ते निक्षिप्तवान् । दरिद्रोऽसौ गोपोऽनर्घभूषणोपेतां दैवादुपनतां तांचौर्येणाहृतवानिति जनाव्यवहरंतीति भीत्या स्वदेशं परित्यज्य देशांतरं गतः । तत्र प्रार्थितायाः कानिचिदाभरणानि विक्रीयतद्धनेन बृहदुरभ्रयूथं क्रीतवान् । तन्मूलात्क्रमेण धनाढ्यो बभूव । सोऽप्यपत्यांतरशून्यतया प्रार्थितां स्वतनयानिर्विशेषं पुपोष । सापि गोपजन्मताया अतिरिक्तमात्मानं ज्ञातुं न शशाक ।

अथ कालक्रमेण सा प्रार्थिता उपारूढयौवना आसीत् । गोपात्मजाया अधिकतरविज्ञानाभावेपि राज्ञी गर्भसंभूतत्वादधिगतसत्स्वभावसौशील्यरूपलावण्यादिगुणास्तथा प्रचकाशिरे यथा न कोऽपि तस्यास्सद्वृत्ताद्धेतोस्सा राजकुलवर्धितेति प्रतिपत्तुं शशाक ।

आसीत्फलाक्षस्य एकएव सुतः पुष्परथनामा । अथैकदा सपुष्परथः प्रार्थितायाः पितुर्गृहानिकटे मृगयाविनोदमनुभवन्नेतद्गोपात्मजामपश्यत् । स तस्या रूपसम्पदा विनयेन सद्वृत्तेन चाकृष्टचित्तस्तस्यामनुरक्तो बभूव । प्राकृतजनवेषं

धृत्वा दरकाल इति नाम्ना आत्मानं व्यपदिशन् तां द्रष्टुं तद्गोपसदनमसकृज्जगाम । फलाक्षो राजकुले निजसुतस्यासान्निध्याद्भीतः कुमारस्य बहिर्गमनप्रयोजनं ज्ञातु किंकरान्प्रजिघाय । स्वसुतस्य गोपसुतायामनुरागं ज्ञात्वा फलाक्षो भक्तिविश्वासयुक्तं कृतवेदिनं विमलाश्वद्रोहात्स्वप्राणरक्षकं कामिलमाहूय तस्मै एतद्वृत्तांतं कथयित्वा प्रार्थिता जनकस्य गोपस्य सदनं तेन सहगंतुमियेष ।

अथ फलाक्षकामिलौ गूढवेषधारिणौ भूत्वा गोपमंदिरं प्रापतुः । तदा गोपास्सर्वे संभूय मेषलोमनिकर्तनाख्यमहोत्सवं प्रवर्तयंति स्म । सर्वजनसत्कारसमुचितेस्मिन्नुत्सवे तावपरिचितावपि गृहाभ्यतंरं प्रवेष्टुमभ्यर्थितौ तथा कुरुताम् ।

तदुत्सवाऽन्वितास्सर्वे आनंदाद्वैतमनुबभूवतुः । प्रसारितानिभोजनपात्राणि । जानपदभोजनाय विशिष्टान्नसंभारास्सज्जीकृताः। केचन कुमाराः कुमार्यश्च गृहांगणावस्थितशाद्वले ननृतुः । अपरेगोपयुवानो दुकूलवासांसि करच्छदान् द्वारिस्थितात् क्षुद्रद्रव्यविक्रयिणस्तांस्तान् क्रीडनकानक्रीणन् ।

एतादृशकर्मव्यग्रजनप्रवर्तिते महोत्सवे प्रार्थिता पुष्परथावुभावपि परस्परनर्मभाषणैस्संजाताधिकतरप्रीती कस्मिंश्चिद्विविक्तप्रदेशे निश्चलं न्यषीदताम् । अभितः स्थितानां सवयसा क्रीडासु क्षुद्रविनोदेषु बुद्धिमदत्वा वेषांतरनिगूढोऽसौराजापुत्रेणानभिज्ञातस्तयोस्संकथां श्रोतुं कुतूहलेन तदंतिकमु-

पजगाम । प्रार्थिता मृदुमधुरभाषणभंगीं श्रुत्वा भृशं विस्मितः कामिलमिदमाचचक्षे । अथ मकुलजापी यमत्युदारप्रकृतिरिव दृश्यते ईदृशी न कुत्रापि दृष्टा मया । कामिलः । स्वामिन्! इयं साक्षाल्लक्ष्मीरिव भाति । फलाक्षः—गोपालकं प्रतिमित्र! कोयं ग्रामीणस्तव दुहित्रा संलपति । गोपालकः । आर्य! तं दुरकाल इति जना व्याहरन्ति । त्वद्दुहितर्यनुरक्तोऽस्मीति सएव वक्ति । तथ्यं कथयामि उभयोरनुरागस्येयत्ता परिच्छिद्यवक्तुं न शक्यते । यद्यसौ कुमारस्तां परिणेष्यतिप्रार्थिताह्यवशिष्टान्याभरणानि तस्मै दद्यात् । तेष्वेकभागेनाजयूथं क्रीत्वाऽवशिष्टभागं तस्याः परिणयाय न्यदधाम् ।

ततः फलाक्षः पुत्रमेवमाबभाषे । प्रवर्तमानमिममुत्सवमप्यनादृत्य तव मनः केनाप्यन्येनाकृष्टमिवाभाति । मद्यौवनकालेऽहं मत्प्रियानुरागं पारितोषिकदानेन संवर्धयितुमभ्यस्तः । भवांस्तु क्षुद्रद्रव्यविक्रेतुर्वणिजस्सकाशान्न किमपि क्रीडनकं क्रीणासि । असौ कुमारो भाषमाणं तं स्वपितरमविज्ञायाह । आर्य तादृशक्षुद्रवस्तूनि सा न श्लाघते । तत्प्रार्थनीयानि पारितोषिकानि मम हृदय एवावस्थिनानीति । ततोऽसौ कुमारः प्रार्थिताभिमुखोभूत्वाह । प्रिये प्रार्थिते! यौवने स्थितोहमिव कामुकव्यापारेष्वसौ स्थविरोपि प्रसितस्तदयं शृणोतुमत्प्रातिज्ञां । ततः पुष्परथस्त्वेन क्रियमाणाया विवाहप्रतिज्ञायां साक्षी भवितुमाहूय फलाक्षमिदमूचे । आर्य! अवधेह्यस्मत्समयं ।

फलाक्षो गूढवेषमपनीय। त्वमपि परित्यक्तो भविष्यसीत्यवधारय। इत्यब्रवीत्। ततः फलाक्षस्ता प्रार्थितामुच्चावचं विनिंदन् अधमकुलजां परिणयानर्हां परिणेतुं कृतोद्यमं पुत्रमपि निनिंद। यदि भूयएव सा तस्य दर्शनपथमवतरति तदा तां तत्पितरं गोपालकं च पशुमारं मारयिष्यामीति समतर्जयत्। ततो राजा फलाक्षो नितान्तं क्रुद्धो निजनगरं जगाम। स्वपुत्रेण पुष्परथेन सहागतुं कामिलमादिदेश। राज्ञि गते सति तत्कृतनिंदयोद्दीपितक्षत्रियसत्वा प्रार्थिता इदमब्रवीत्। अहं मंदभाग्यापि दैवोपहतापि राज्ञो न भीतास्मि। द्विवारं तस्य प्रत्युत्तरं दातुमुद्युक्तास्मि। किंत्ववकाशो न दत्तस्तेन। यथा सहस्रकिरणस्तस्य हर्म्ये प्रकाशते तथास्मत्कुट्यामपि। उभयं तस्य तुल्यमेवेति तं विस्पष्टं ब्रूहि। अस्मात्स्वप्नादहं प्रबुद्धास्मि। नेतःपरं स्मरामि। आर्यो मां विमुंचतु। एडकादोह्मिपय इति। दयालुरसौ कामिलः प्रार्थितायास्सद्वृत्तेनोचितज्ञतयाच प्रहृष्टः पित्रा प्रतिषिद्धोपि ता प्रार्थिता प्राणवल्लभा परित्यक्तुं नेष्ट इति जानन् तयोरुभयोस्संयोजने उपायमेकमचिंतयत्। शशिद्वीपाधिपो विमलाश्वस्स्वकृतकर्मणा जातानुशय इति चिरादेव ज्ञातवान्। इदानीं कामिलः फलाक्षस्य प्राणसुहृत्संजातोपि चिरपरित्यक्तं स्वप्रभुं स्वदेशं चापश्यन् स्थातुमशक्तः।

यावत्फलाक्षः पुष्परथं प्रार्थिता च क्षमित्वा तयोर्विवाहमनुजानाति तावद्विमलाश्वस्यास्थानीमास्थातु कामिलस्तावुभाव-

न्वयुंक्त । तथेति तावुभौ कामिलस्योपदेशानुरोधतस्तत्र गंतु-मंगीचक्रतुः तयोः प्रस्थाननिर्वर्तने यदपेक्षितं तत्सर्वं सज्जीकृत्य कामिलो वृद्धगोपमपि तावनुगंतु मनुशशास । स गोपः प्रार्थितायाश्शेषाण्याभरणानि शैशववासांसि वस्त्रस्यूतां पत्रिका स्वेन सह निन्ये । सुखप्रदसमुद्रयानानन्तरं प्रार्थितापुष्परथौ गोपः कामिलश्च सुखेन विमलाश्वस्य राजधानीं प्रापुः । शिशुभार्याविनाशेनाद्याप्यनुपशान्तदुःखो विमलाश्वश्चिरदृष्टे कामिले महतीं दयां दर्शयन् प्रत्युद्गमनादिना संमान्य अत्यादरेण स्वभवने निवेशयामास । युवराजं पुष्परथमपि सौहार्दसहितस्वागतव्याहारादिना सत्कृतवान् । यदा पुष्परथो राज्ञे प्रार्थितां प्रदर्श्य "इयं मे जायेत्यकथयत् तदा स प्रार्थितायाश्चिरविनष्टायास्स्वजायायाश्चाकारसादृश्यं दृष्ट्वा नवीकृतकळत्रदुःखो क्रौर्येण न विनाशिता चेन्ममदुहिताप्येतावता कालेनेदृशी भवेदित्यचिंतयत् । स राजा पुनः पुष्परथाभिमुखो भूत्वा "आर्य ! पुष्परथ ! धैर्यशालिनस्तव पितुस्सख्याद्विरहितोस्मि । इदानीं प्राणेभ्योपि प्रियतरं तं भूयो द्रष्टुं वाछति मे मनः" इत्युवाच । प्रार्थिता दृष्ट्वा राजा चितासमुद्रे निममज्ज । शैशवे परित्यक्ता तस्य दुहिता नष्टेति यदा स वृद्धगोपश्शुश्राव तदा स्वस्य प्रार्थिताधिगमप्रकारं तदाभिजात्यसूचकान्याभरणानि विचिंत्य सा प्रार्थिता नृपस्य नष्टपुत्रिका चैकैवेति निर्णेतुं शशाक । कथं प्रार्थिता स्वेनाधिगता । कथमंतघनो भल्लूकेन

व्यापादित इत्येतत्सर्वं गोपवृद्धे राज्ञस्सन्निधौ कथयति सति पुष्परथः प्रार्थिता कामिलो विश्वसनीयः फलिनाच तत्र सन्निहिताः। राज्ञी येन वाससा शिशु परित्यागसमये पिहितवती तद्वासश्च प्रार्थिताया ग्रीवाया मात्रा बद्धमेकमाभरणं फलिनायाः भर्त्रा अंतघनस्य हस्ताक्षरैरंकितं पत्रमपि दर्शितं तत्सर्वं फलिनापि सस्मार। तानि चिह्नानि दृष्ट्वा प्रार्थिता विमलाऽऽश्वस्यदुहितैवैति वक्तुमणुरपि संदेहो नासीत्। तदा फलिना यामनसिभर्तृमरणदुःखस्य डेल्पानगरीशकुनानुसारतश्चिरनष्टराजपुत्रिकालाभजनितसंतोषस्य च महान्विवादस्समजनि। प्रार्थिता स्वपुत्रिकेति राजा विमळाश्वो यदाज्ञासीत्। तदा स्वजाया सुशीला दुहितरं विवृद्धा द्रष्टुं नाजीवदिति महता दुःखभारेणाक्रातस्तव माता तव मातेति वचनं विहाय चिरं न किमप्यन्यत् वक्तु शशाक।

एतस्मिन् दुःखानंदव्यतिकरे फलिना राजानमित्थं व्यजिज्ञिपत्। "महाराज! हितस्थऊदेशवास्तव्येन जालिकारमणाख्येन केनचिच्छिल्पिना निर्मिता परमाद्भुता काचित्प्रतिमा राज्ञ्यास्सुसदृशी अस्मिन्नेव नगरे वर्तते तत्र गत्वा यदि महाराजेन सा अध्यक्षीक्रियते तदानूनमियं सुशीलैवेति मन्येत देव" इति। मृतजायासदृशाकृतिमुद्वहन्तीं ता सालभंजिकां द्रष्टुं सोत्कंठो राजा अदृष्टपूर्वं मातृमुखदर्शनाय सकुतूहला प्रार्थिता चेति ते सर्वे शिल्पिगृहं जग्मुः। अथ यवनिकामपसार्य फलिनया सुशीलापूर्णसादृश्यधारिण्यां तस्यां प्रतिमाया

प्रदर्शितायां राज्ञः कळत्रवियोगदुःखं सर्वं नवीभूतमजनि राजा शोकेन चिरं स्तब्धोऽभूत् "महाराज! किं नानुहरतीयं प्रतिमा महाराज्ञी" मित्यवदत्फलीना। राजा। विवाहार्थिना मयापुरा-तन्निकटं गतेन यादृशेन वैभवेन तिष्ठन्ती सा दृष्टा अधुनापि तथैव दृष्टा फलिने? सुशीला न तथा वर्षीयसी यथेयं प्रतिमा दृष्टा।

फलिना। महाराज! तथैवाविष्कृतं शिल्पिना प्रावीण्यं यदि सा सजीवा भवेत्। यवनिका किंचिदपसारयितुमनुजा-नीहि। तदा चलतीव दृश्यते।

राजा—मा तिरस्करिणीमपनय। प्राणान्विमुंचामि। तद्दर्शनादहं नोत्सहे जीवितुं।

कामिलः। निश्वसितीति किं न मन्यसे। नेत्रं निमी-लितामिव प्रतिभाति।

फलिना—स्वामिन्निदानीमपनेतव्या तिरस्करिणी। भवांस्तथा हर्षविवशः यथा स्वयं सा प्रतिमा सजीवेति प्रत्येति।

राजा—मधुरफलिने! विंशतिवर्षवृत्तांतं चिंतयामि। अद्यापि तत्पार्श्वाद्वायुश्चलतीति मन्ये। कीदृशेन रमणीयेन टकेन सशिल्पी निर्मितवानिमा प्रतिमां। मा मां कोपि परिहसतु। यतस्तां चुंबितु मिच्छामि।

फलिना। प्रभो। साधु। चित्रकर्मणस्स्नेहमयत्वात् तद्-धरारुणिम्ना क्लिन्नस्त्वदधरोपि कळंकितो भवेत्। किं पिदधामि यवनिकयाप्रतिमा।

राजा—मामा । एतानि विंशतिवत्सराणि ।

इयंतं कालं प्रार्थिताक्षितितलनिहितजानु तिष्ठन्ती अद्वितीयायास्स्वमातुः प्रतिमा साश्चर्यं समौनं अवलोकयंती तस्थौ फलिना । महाराज ! सहस्वैतदानंदपरवशत्वम् । अथवा इतोऽधिकतरविस्मयाकुलत्वाय सज्जीभव । संचालयेयमेतत्प्रतिमां यथा सिंहासनादवतीर्य तव हस्तं गृह्णाति । तथा कर्तुं शक्नुयाम् तदाहमिंद्रजालशक्त्या आविष्टास्मीति शंकसे । किंतु नाहं तथा

राजा—फलिने ! त्वं तया प्रतिमया यद्यत्कारयसि तत्सर्वं द्रष्टुमहं पर्युत्सुकोस्मि । यदि ता भाषयसि श्रोतुं कुतूहली ।

ततः फलिना मंदमधुरगीति गातुं यं कंचित्समादिशत् । ततस्तत्रत्यानां सर्वेषां महते विस्मयाय सा प्रतिमा सिंहासनादवतीर्यागत्य विमलाश्वस्य कंठे स्वबाहुलतामाससंज । नष्टलब्धायां दुहितरि प्रार्थितायामाशिषः प्रयुंजाना सा प्रतिमा भाषितुमारेभे । सा प्रतिमा विमलाश्वमाश्लिषत् । भर्तरि दुहितरि चाशीः प्रायुंक्तेति नाश्चर्यं यतस्सा प्रतिमा सत्यं जीवंती सुशीलैव । फलिना अयमेव महाराज्ञी प्राणरक्षणोपाय इति मत्वा सुशीला मृतेति मृपा राज्ञे न्यवेदयत् । आप्रार्थितोपलब्धि वार्ताश्रवणं सुशीला जीवतीति वृत्तातं विमलाश्वो यथा न जानाति तथा निगूहनीयमिति निश्चित्य फलिना स्वगृहे ता निजगूह सा स्वविषये भर्तृकृतापराधान्सर्वान् क्षाम्यंत्यपि शिशुविषये राजकृतक्रौर्यं न चक्षमे मृतेति विश्रुता राज्ञी जीवंती पुनरधिगता

नष्टपुत्री पुनर्लब्धा चिराद्दुःखसमुद्रमग्नो विमलाश्व इदानीमानं-दजलधौ प्लवमान आसीत् । पुरे राष्ट्रे च सर्वतोऽभिनंदन-वचनानि शुश्रुविरे । हर्षनिर्भरौ तत्पितरौ अवरकुलोत्पन्नाया इव प्रतीयमानायास्स्वतनयायाः पाणिं गृहीतवंतं पुष्परथं वीक्ष्य मुमुदाते । शैशवे स्वतनयां रक्षितवति गोपवृद्धे कृतज्ञौ संवृत्तौ । फलिना कामिलौ चोभौ तद्विषये स्वकृतभक्तियुतसेवायास्तादृशं शुभपर्यवसानं द्रष्टुं सजीवाविति परं हर्षमवापतुः । अतर्कि-तोपनतस्यास्य महानंदस्य न काचिन्न्यूनतेति मत्वा फलाक्षस्स्व-भुवनं प्राविशत् । यथा फलाक्षस्स्वसुतं कामिलं च स्वपुरे न ददर्श तदा चिराच्छशिद्वीपं गंतुमभिलषंतं कामिल ज्ञात्वा तेन सह स्वसुतोपि तत्र गत इति निश्चित्य त्वरया तावनुगच्छन् । विमलाश्वस्य जीवितकालस्य सुखतमसमये तस्य भवनमगात् । फलाक्षोपि विमलाश्वेनानुभूयमानस्यानंदस्याशभाग्बभूव । तस्य स्वस्मिन्नुत्पन्नमनुचितं मात्सर्यं चक्षमे । तावुभौ बाल्यइव पुनर्गाढमैत्रीकौ संजातौ । इदानीं प्रार्थितामुद्वोढुं पुष्परथस्य स्वजनकाद्भयलेशोपि नासीत् । नेदानीं प्रार्थिता गोपकन्या । किंतु शशिद्वीपराज्यस्योत्तराधिकारिणी बभूव । चिरदुःखो-द्विग्नायास्सुशीलायाश्श्लाघनीयं सद्वृत्तमते समवाप्तपारितोषिक-मभूत् । अत्युत्तमैषा सुशीला भर्त्रा विमलाश्वेन दुहित्राप्रार्थितया सहिता बहूनि वत्सराणि सुखमुवास ॥

शीतर्तुकथा समाप्ता ॥

---

## 12. Much ado about nothing

( शून्यविषये बहुश्रमः. )



1 Sicily = कुशद्वीपं.

2 Leonato = सुप्रतीकः.

3. Hero = हारिणी

4. Beatrice = लवली

5. Messina = चंपानगरी

6 Claudio = क्लातः.

7. Benedick = बन्धूकः

8. Don Pedro = दानसारः.

9 Florence = फलारण्यं.

10 Arragon = हरगानदेशः

11 Padua = पाटलदेशः.

# ॥ शून्यविषये बहुश्रमः ॥

## MUCH ADO ABOUT NOTHING.



आसीत् पुरा कुशद्वीपे सौराज्याभिवर्धितसकलसंपत्सम्पूर्णजना चंपा नाम नगरी। ता प्रशशासामरावतीमिवेंद्रो निजप्रतापाधीकृतनिखिलारिघूकलोको लोकबाधवो सुप्रतीको नाम राजा। आस्ता तस्यान्तःपुरे निरुपमलावण्ये निर्व्याजमनोहरे द्वे कन्ये। तयोरेका हारिणी नाम्नी तद्दुहिता। अपरा लवलीनामतद्भागिनीसुता। लवलीनर्मशीला। निरंतरं गम्भीरमनोवृत्तिं प्रयोजनैकमात्रसंभाषिणीं वाचाटतासहिष्णुं हारिणीं स्वविलासचेष्टाभिः परिहासोक्तिभिर्विनोदयति स्मता अक्ष्णोरग्रे यद्यदवर्तत तत् सर्वं लवल्या आनंदावहमेवासीत्।

अथ तयोरेवं गच्छति काले प्ररूढयौवनाः केचन योधमुख्या अचिरनिर्वृत्तात्संग्रामात्प्रातिनिवर्तमानाश्चम्पां समया आगच्छंतस्सुप्रतीकं द्रष्टुं राजभवनं समाजग्मुः। एतेषां मध्ये हारिगानदेशाधिपो दानसारः। तन्मित्रं फलारण्यप्रभुः ज्ञाताह्वयश्च। एतयोरनुयायी परिहासशीलः पाटलविषयाधीशो बंधूकश्च ताभ्यां सहासीत्।

अद्यप्रभृत्येव तयोः—प्रमदयोश्चरित्रमारप्स्यते । एतेषां युवयोधानां तत्रागमनं नेदं पूर्वम् । पुरैकदा तैरध्यगमि चम्पा । तदाऽतिथेयोऽसौ सुप्रतीकस्तानत्यादरेण स्वमन्दिरे प्रवेश्य ग्राहयन्नातिथ्यं स्वदुहितरं स्वसुः पुत्रिकां च प्रियसुहृद्भ्यस्तेभ्योऽदर्शयत् । बंधूकस्तन्मंदिरप्रवेशक्षणादेव सुप्रतीकं तत्कुमारीं हारिणीं च वीक्ष्य मधुरसंकथारसतत्परो ताभ्यां सहादरेण संलप्तुमुपचक्रमे । वाचाटालवलीभाषमाणं बंधूकमवलोक्येत्थमवदत् । आर्य ! बन्धूक ! कथनाद्यापि सम्भाषणाद्विरतोसि । न केनापि दृष्टस्त्वम् । सोपि लवलीवजल्पाक एव । तथापीदृशेन वार्तानुयोगेन नातीव हृष्टोऽभूत् । तादृश्याः अभिजातायास्तादृशी मुखरता नोचितमित्यमंस्त । परं तु पूर्वमेकदा तस्मिंश्चंपायामवस्थिते सा तमेव स्वपरिहासोक्तीनां पात्रमकरोदित्यपि सस्मार । यथा लोके मनुष्याः परानपहसितुं स्वातंत्र्यमुद्ग्रहन्ति तथा परैरपहास्यमानमात्मानं न सहंते । लवलीबन्धूकावपि तादृशावेव । तीक्ष्णबुद्धी एतौ यदा यदा एकत्र परस्परं संगतौ तदा तदा परुषवाग्भिरन्योन्यमधिक्षिपंतौ मिथः कलहायमानौ समुत्पन्नवैमनस्यौ निववृताते । तत एव संभाषमाणस्त्वं न केनापि लक्षित इति लवल्या संभाषणमध्ये तिरस्कृतोपि पुरोवर्तिनीं तामपश्यन्निवाभिनयन्नवोचत् । अयि ! अवज्ञाशीले ! लवलि ! अद्यापि जीवति भवती । ततस्तयो-

रभिनवो वाक्कलहः प्रावर्तत। अचिरनिर्वृत्ते महाजन्ये दर्शितपराक्रमं तं शूरं ज्ञात्वापि 'लवली, "बंधूक! त्वया युद्धे हतान्सर्वानहं भक्षयेयम्" इत्युवाच। बंधूकालापे कृतप्रीतिं राजानं ज्ञात्वा तं राजविदूषक इत्यभिदधे। लवल्या पूर्वोक्तेभ्यो निंदावचनेभ्योऽधिकतरमयमुपालम्भस्तन्मनः अक्षिणोत्। आयोधने ये त्वया निहतास्तान्सर्वानहं भक्षयेयमिति भीरुत्वापादनपरां तदुक्तिं स बन्धूको विख्यातात्मधीरत्वेन न पर्यजीगणत्। किंतु तादृशास्सुधियो विदूषकत्वारोपणादिव नान्यस्मात्कस्माच्चिदपि व्यथिता भवन्ति। तादृशा महात्मनां यशो यथा विदूषकत्वारोपणेन मलिनीभवति तथा नान्येन केनचिदपि तद्दोषारोपः कदाचित्सत्यमेव भवेत्। तस्माद्बंधूको लवल्या राजविदूषकइत्युक्ते तां दिद्वेष।

विनीता मितभाषिणी हारिणी एतेषां गृहागतानामतिथीनां पुरतो बद्धमौना आसीत्। एतस्मिन्समये फलारण्यप्रभुः क्लान्तः प्रतिक्षणोज्जृम्भमाणनवयौवन बन्धुरगात्रयष्टेस्तस्या हरिण्याः प्रत्यवयवलावण्यसरसि निमग्नचक्षुर्भूत्वा लवलीबंधूकयोर्हास्यकरसंवादश्रवणेन भृशं विनोदितस्सुप्रतीकस्य कर्णे एवमकथयत्। इयं कुमारी सहृदया बंधूकस्येयं गृहिणी भवितुमर्हति।

सुप्रतीकः । राजन् ! "यदीमौ मिथुनीभूयैकत्र पंचषोदिवसान्वसेतां तदोन्मत्तौ भवेनाम्" इति सुप्रतीकेनोक्तमपि तदनादृत्य क्लातस्तीक्ष्णबुद्ध्योरेतयोस्संयोजने । स्वसंकल्पं न तत्याज ।

अथ क्लातद्वितीयेन स्वभवनान्निष्क्रान्तेन राज्ञा न केवलं लवलीबंधूकयोर्विवाहः चिकीर्षितः किंतु युवासेचनतनुश्रियोहारिण्यारूपवागुराहरिणायमानचित्तेन क्लातेन हारिणीं योजयितुमपि संकल्पितम् । तं पर्यपृच्छच्च । वयस्य हारिणीं कामयसे इति ।

क्लांतः । राजन् ! पुरा मय्येकदा चंपानगर्यां स्थिते सा मे दृक्पथं गता । तदा प्रथनकुतूहलाक्षिप्तहृदयतया तस्यां मम भावं प्रकाशयितुमवकाशो नालभ्यत । इदानीं तु सर्वतस्समाप्त समरप्रयोजनस्य प्रशांतचित्तस्य मम मनोहारिणी हारिरूपसंपदि दृढं लग्नं । राजा हारिण्यां क्लान्तस्यानुरागानिवेदनेन भृशं हृष्टोऽनन्यसामान्यगुणसंपदं राज्यतंत्रनिष्णातं क्लांतमुपयंतुं हारिणीमपि प्राबोधयत् । क्लांतोपि सदयेन राज्ञा सनाथीकृतो विवाह मंगळनिर्वर्तनाय शुभलग्नं विनिश्चेतुं सुप्रतीकमयाचत । विवाहात्प्राक्क्लांतेन कश्चित्कालविलंबस्सोढव्य आसीत् । इयान्कालावधिर्मयाकथमतिवाह्य इति स वैक्लब्यमवाप । प्रायशो जगति यूनस्सिसाधयिषिते कार्ये सोत्कंठा

भवंति। तस्या निर्वहणे कालाक्षमा भवेयुः। ततस्स राजा हारिणीविरहक्लांतं क्लांतं विनोदयितुं लवलीबंधूकयोः परस्परानुरागोत्पादनाय कंचित्कपटोपायं कल्पयितुमचिंतयत्। क्लांतोऽप्यस्मिंश्चपलकर्मणि सह कृत्वा बभूव। राजा च स्वसाहाय्यं तेभ्यः प्रत्यजानात्। हारिण्यपि पितृष्वस्रीयाया अनुरूपवराधिगमोपयोगिस्वशालीनतोचितं यत्किंचित्कर्तुमुररीचकार।

राज्ञाह्ययमुपायश्चिंतितः। पूर्वोक्तास्सुप्रतीकप्रभृतयो "लवली त्वयि बद्धभावा" इति बंधूकस्य मनसि दृढप्रत्ययं जनयितुं हारिण्यपि लवलीमुपगम्य "त्वदर्थं बन्धूको बहूत्ताम्यति। सर्वदा त्वद्गतमानसो भूत्वा त्वत्संबंधिकथाएवालपन्प्रकामं निशासु निद्रामपि न लभते। ततस्तमनुगृहाण" इति बोधयितुं चिंतितवंतः। प्रथम क्लांतसुप्रतीकौ स्वसंकल्पिते कर्मणि प्रवृत्तौ। युक्तावसरं प्रतीक्षमाणौ तावेकदा कस्मिंश्चिल्लतागृहे वेत्रासने निषीद्य पुस्तकं वाचयंतमेकाकिनं बन्धूकं दृष्ट्वा अयमेवोचितस्समय इति निश्चित्य लतागृहस्य पश्चादासन्नतरुषंडमध्ये यदा तरुपर्णान्तरितगात्रौ स्वसहायैस्सह विविशतुस्तदा बंधूकस्सुप्रतीकं वीक्ष्य इत एहीत्युक्त्वा "आर्य! पूर्वेद्युस्त्वया किमुक्तं। मम भागिनेयी लवली बंधूकबद्धभावेति।"

सुप्रतीकः। राजन्! न तथोक्तं मया। बहिस्सर्वदा तं जुगुप्समानेव प्रतीयमाना सा अंतरनुरक्ता तस्मिन्नित्युक्ति-

मेमाश्चर्यं जनयति । यदा मे प्राणबन्धुस्सबन्धूको मत्प्रार्थनां नांगीकरोति तदा मंदभागिन्या मम मरणमेव शरणमिति लवली अध्यवससावितिहारिण्याधुनैव मम निवेदितमिति क्रांतो राजोक्तं सर्वं दृढीचकार। किंतु लवल्या बंधूकस्यानुरागं क्रांतो न विशश्वास । यतस्ससर्वदा सर्वासा सुंदरीणां निंदकः । विशेषतो लवल्याः । दानसारो लवल्या दुरध्यवसाय बंधूकेऽनुरागोत्पत्ति चाकर्ण्य मनसि जातकरुणोऽवदत् । बधूकायै तद्वृत्तात क्षिप्रं निवेदयतेति ।

क्रातः । किमर्थं निवेदन । तत्सर्वं सपरिहास इति गृह्णाति । प्रत्युत ता तपस्विनीमधिकतरमुपालभते । दानसारः । तथा चेत्तमुद्बन्धनेन मारयत । यथा बंधूकः परोक्षाकर्णितं तेषा संभाषणं दीर्घबुध्या विचारयितुमवकाशं लभते तथा तं प्रदेशं विहायान्यतो गंतुं राजा दानसारस्वानुचरानादिदेश।

एतस्मिन्नंतरे बंधूक एतेषां संवाद सोत्कंठं श्रुत्वा मनसीत्थमचिंतयत् । “अहो लवली मय्यनुरक्तेति किमिदं विश्वसनीयं । उतोद्यानकोणस्थितेन केनचिद्यक्षेणोक्तं वेति ।” अथ सानुचरे राज्ञि निष्क्रांते स इत्थं मनसि बहून्विकल्पानकरोत् । “लवली मय्यनुरक्तेति नेदं मृषा । यतस्तेषां संभाषणं वास्तवमिव श्रूयते । हारिणीतस्तैस्तत्वं श्रुतं । अतएव ते तस्या

जातानुकंपाः । आकाशे लक्ष्यं बध्वा "लवलि ! मामनुगृहाण । निष्कृतिं ते दास्यामि । अथवा उद्वोढुमेव न कदाप्यासीन्मे मतिः । अकृतदारपरिग्रहएवामरणं जीवितुं मे निश्चयः । किंतु लवली रूपवती गुणवतीति जना वदंति । ममापि तथैव प्रतिभाति । मय्यभिलाषादृते सर्वं तस्यामुपपद्यते । विवेकविधुराया तस्यामेतन्न चित्रं इति ।" अत्रांतरे लवली तत्रागता । तां दृष्ट्वा बंधूकः । "कथमियं मे मनोरथभूमिर्लवली समायातात्र । पश्यामि किंचिदनुरागचिह्नं तस्याम्"।लवली ! बंधूकस्य समीपं गत्वा । आर्य ! बंधूक ! मध्याह्नभोजनाय त्वा निमंत्रयितुमनिच्छंत्यपि त्वन्निकटं प्रेषितास्मि ।

पूर्वं कदाचिदपि तया सह मृदु मधुरं भाषितुमनभ्यस्तो बंधूक इदानीं ता वीक्ष्य "अणुमध्ये ! लवलि ! पादपल्लवायासयितृकेन तवात्रागमनेन धन्योस्मि ।

अथ लवल्यपि यथापूर्वं द्वित्राणि परुषवचांस्युक्त्वा निष्क्रांता ।

एवं तया परुषवचनेष्वभिहितेष्वपि निष्ठुरोक्तिनिगूढं निजानुरागं व्यनक्तीति मन्यमानो बंधूको यद्यहं तस्यां मदनुरागं न दर्शयामि तदा सा मां कठिनहृदयं मन्येत । ततोऽद्यैव गत्वा तस्याः प्रतिच्छंदकमानयामीत्युच्चैर्जगर्जे ।

एवं सबंधूकस्सुप्रतीकप्रभृतिभिर्निर्मितकपटवागुरासु पतंतमात्मान नावबुध्यत । अस्मिन्कपटनाटके पूर्वसंकेतितभूमिकापरिग्रहाय हारिण्या अपि समयस्समुपस्थितः । एतदर्थं सा शीलविनयसंपन्ने वर्षुलामृगीरतानाम्न्यौ द्वे निजचेट्यौ समाहूयाकथयत् । मृगीरते ! मम पितृष्वस्रीया लवली उपवेशनशालां गत्वा तत्र राजकान्ताभ्यां सह संलपन्ती तिष्ठति । त्वं तत्र द्रुततरं गत्वा "वृक्षवाटिकापरिसरे विहरंत्यौ वर्षुलाहारिण्यौ त्वत्संबंधिनीं कथा कुरुत इति रहस्युक्त्वा तामपि तद्वनोद्देशं निभृतं केनचिदज्ञाता आगंतु ब्रूहि । यथा कृतघ्ना राजवल्लभा येन पुष्टाः प्रतिष्ठां नीतास्तमेव राजानं राष्ट्रान्निष्कासयितुं यतन्ते तथा यत्र वनोद्देशे आमोदभरितदिगंतास्संफुल्लकुसुमस्तबकभारानता यस्यांशुसंपर्कवशात्परिणतफलपाकास्संजातास्तरवस्तस्यैवाहर्पतेरश्मीनां प्रवेशं न ददति । यत्र बंधूको राजप्रभृतीनां संवादमादरेण श्रुतवान् तामेव वृक्षवाटिकां लवलीं प्रवेशयितुं हारिणी मृगीरता नियुयोज ।

मृगीरता ! भर्तृदारिके सत्यं तामानेष्यामि तल्लताकुडुंगकं । प्रत्येहि मद्वचनं ।

हारिणी । वर्षुला करे गृहीत्वा वर्षुले यावल्लवली परा पतति तावदावां बंधूकसंबद्धां कथां संलपंत्यौ प्रमद्वनवाटिकामभितः पर्यटावः मयातन्नाम्न्युच्चारिते सोऽनन्य-

सामान्यगुण इति तमधिकतरं स्तुवीहि । अहं तु तस्याः कृते तस्य मदनायासं तत्पुरतो वर्णयामि।वर्षुले पश्य पश्य । परिधान-चेलाचलाग्रचुंबितभूतला अस्मत्सभाषणश्रवणकुतूहलाटिट्टभीव कथमायाति ।

उपक्रमावहै अस्मत्संवादमिति तथा कुरुतः ।

हारिणी—वर्षुलाप्रश्नस्योत्तरं ब्रुवतीव । सखिवर्षुले तथा मावोचः । सा अतीव सावलेपा । तस्यामनोवृत्तिरारण्य-कशकुनीवाप्रगल्भा क्रूरा च ।

वर्षुला—आरादागच्छतीं लवलीं वीक्ष्य । भर्तृदारिके ! हारिणि लवलीबंधूकासक्तचित्तोति सत्यं जानासि ।

हारिणी—राजा दानसारः मम नूतनकांतः क्षांतश्च इतरे च तथा व्यवहरन्ति । ते सर्वे एतद्वृत्तांतं तस्यै निवेद-यितुं मामन्वयुंजत । यदि वो बंधूके प्रीतिस्तदा तन्मदनावस्थां तस्यै मा प्रकाशीकुरुतेत्यहं तानुपादिशम् ।

वर्षुला—तदेव वरं नोचेत्सा तं परिहसति ।

हारिणी—किं वहुना । विवेकी वा अभिजातो वा असाधारणरूपसंपन्नो वा । यादृशस्तादृशो वा भवतु । मया नकोपि दृष्टः यं सा न जुगुप्सते ।

'वर्षुला—न युज्यतेऽस्याः प्रतिमनुजमुपालब्धुम ।

हारिणी—एतन्नोचितमिति कस्तां बोधयितुं शक्नुयात्। यन्मयोच्यते तदुपहसति। अरुंतुदैः परुषोक्तिभिर्मे मनः क्षिणोति। तस्मान्मौनमवलंबे। मदनशराग्निर्बंधूकमात्मसात्कृत्य निर्वाणमेतु। कामिनीकृततिरस्कारसहनात्तस्येदृशी मृतिरपि श्रेयसी।

वर्षुला—भर्तृदारिके। लवल्या अभिप्रायं भवती न सम्यग्जानातीति मन्ये। यथा सा कुलीनमभिरूपं बन्धूकसदृशं युवानं प्रत्याख्याति तथा विवेकविधुरा न भवेत्। निवेदयैतद्वृत्तातं तस्यै। द्रक्ष्यामः किमुत्तरं प्रतिपद्यते।

हारिणी—नाहं तथा कर्तुमुत्सहे। किंतु बन्धूकं गत्वा तस्या वास्तवदोषोद्घाटनेन तस्य मनसि विरागमुत्पाद्य उद्रिक्तेंद्रियवृत्तिं वशीकुर्विति बोधयामि।

हारिणी—बाढम्। कुलशीलवयोवृत्तादिविषये मम प्रियं क्षांतं वर्जयित्वा नान्यः कोप्यस्मिन् देशे न विद्यते।

वर्षुला—बंधूकं स्तुवंत्यै मह्य मा कुप्य। रूपे सामर्थ्ये ज्ञाने विक्रमे वास्मिन् देशे स एव प्रथमगण्य इति जना व्यवहरंति।

हारिणी—नूनं स लब्धप्रतिष्ठ एव। सखि! आसन्ना लवली। तदावामिमां कथामुत्सृज्य कथांतरमालपावः।

वर्षुला—कदा प्रवर्त्यते विवाहमंगळं ।

हारिणी । "श्वः परश्वो वा भविष्यति । प्रत्यासीदति शुभदिनं । क्षांतो मां परिणेष्यति । मखिवर्षुलेमया सह सकृत्प्रविशाभ्यन्तरं । यत्र नानाविधानि विचित्रतराणि तातानातानि मंगळक्षौमानि कनकचेलानि संति । तासु त्वमेव मे विवाहमंगळनेपथ्यसमुचितानि धारणोचितानि वासांसि स्वयं परीक्ष्य देहि" इत्युभे चाभ्यंतरं प्रविष्टे ।

अथैतयोस्सकथा निरुद्धनिश्वासोत्कंठया कर्णयंती लवली तयोर्निष्क्रमणानन्तरं इत्थमुच्चैश्चुक्रोश ।

"अहो अग्निवच्छ्रोत्रदाहकान्यक्षराणि श्रुतानि । अप्येतत्सत्यम् । यथा एते मा व्यवहरति । तथा किमहं परावमानरता अवलिप्ता वा । प्रमदाजनसुलभदोषस्य परावमानस्याहमपरिचिता । लोके तद्दोषदूषिता जना न पूज्यंते । बंधूक ! मदनुरक्तोसि । त्वदनुरागेण शमितहृदयपारुष्या सत्यहं तव प्रतिकरोमि । यदि सत्यं मदनुरक्तश्चेत्त्वं उदीर्णरागवृत्तिरहमपि त्वा परिणेष्यामि । यतो जनव्यवहृतादभ्यधिकतरो ते गुणगण इत्यहं प्रत्येमि । चतुरस्य राज्ञः परस्परानुरागोत्पादकेन कपटोपायेन वंचितयोश्चिरंतनवैरमुत्सृज्य अन्योन्यासक्तचित्तयोरेतयोः प्रथमसमागमं द्रष्टुं न कस्यासीत्कुतूहलं । किंत्विदानीं संकल्पितहारिण्यभ्युदयवृद्धिर्विधेर्वामतया विपरीता संवृत्ता ।

अथ प्रवर्तमाने विवाहकर्मणि परस्मिन् दिने हारिणी-तत्पित्रोः किंचिन्मनोव्यथाकारणं समपद्यत।

आसीत्सुप्रतीकस्य राज्ञस्तनुजानुर्नामैको वैमात्रेयो भ्राता। यो युद्धान्निवर्तमानेन तेन सह चंपामाजगाम। अयं मत्सरी। परोद्वेगकरः। निर्निमित्तपरापकारव्यसनी। भ्रातरि राज्ञि तन्मित्रे क्षांते च निर्हेतुकद्वेषबुद्धिमवलंब्य क्षांतस्य विवाहभंगं कर्तुं निरचैषीत्। क्षांत इव स्वभ्राताप्यस्मिन्विवाहे बद्धश्रद्ध इति ज्ञात्वा एतदुष्टकार्यनिर्वहणार्थमेकं भराजनामानं द्रविणदानेन प्रलोभ्य प्रणुनोद। अयं भराजो हारिणी चेट्या मृगीरतया संजातमैत्रीको निद्रिताया हारिण्या निशि तस्याश्शयनागारवातायने मुहूर्तं स्थित्वा स्वेन सह संभाषितुं भटद्वारेण मृगीरतायै संदिदेश। सापि तथा कर्तुमंगीचकार। अथ तनुजानुर्निशि प्रसुप्तायां हारिण्या दुष्टबुद्धिमात्र सहायस्तच्छयनागारवातायनोपातमुपसर्पंस्तत्र मृगीरतां दृष्ट्वा हारिणीवेषधारिण्या त्वया क्षांतः प्रतारणीय इत्यचूचुदत्। यतोऽनेन कपटोपायेन संसाध्यं प्रयोजनं हारिणीचारित्रदूषणमेव।

ततस्तनुजानुः क्षान्तनृपयोस्सविधं गत्वा "हारिणी स्वैरिणी संजाता। अंतः पुरमंदिरवातायने निषेदुषी परपुरुषैर्भाषमाणा मया प्रत्यक्षीकृता। यदि युवाभ्यां रोचते अस्यां रात्रौ तत्र नीत्वा तथावस्थितां तां प्रदर्शयिष्यामि" इत्य-

ब्रवीत्। तावुभौ तेन सह तत्र गन्तुं संमेनाते। तदा क्षान्त आह। "यदि तस्यास्खालित्यमस्यां निश्यहं पश्यामि तां किमर्थमुपयमे। श्वो यत्राहं तामुपयंतुमैच्छं तत्रैव जनसंसदितामहं क्षेपयामि।" राजा चावदत्। तदधिगमे तव कृतसाहाय्योहमपि ताम् कळंकयामि।" अथ तन्नक्तं यथोद्दिष्टं तावुभौ तनुजानुना तदवरोधोपांतमुपनीतौ। वातायनाधस्स्थितेन भराजेन सह भाषमाणा हारिणीवेषधारिणीं मृगीरतामपश्यताम्। राजक्षांतौ तां हारिणीति विशश्वतुः अथ क्षांतो यदा एतदपश्यत्तदा क्रोधाग्निना जज्वाल। तस्य तन्निष्ठस्सर्वोनुराग अकांडे ननाश। परदिने विवाहसमये तस्या अविनयं प्रकाशीकर्तुं निश्चिकाय। राजा दानसारोपि परिणयसमय एवैतादृशमविनयं दर्शयंत्या अस्या वराक्या जनसंसद्यवमानान्नान्यो दंडः कठिनतर इति मन्यमानस्तामवज्ञातुमनुमेने।

अथ परेद्युर्विवाहमहोत्सवनिर्वर्तनाय देवतायतने सर्वेषु संमिळितेषु तुमुलं नदत्सु तूर्येषु विविधवस्त्रालंकारभूषितौ वधूवरौ हारिणीक्षांतौ पुरस्कृत्य पुरोधसि विवाहकर्मांगतया पुण्याहं वाचयति सतीतरेष्वपि स्वस्त्ययनं पठत्सु वृद्धपुरध्रीवर्गे मंगळगीतानि गायति अन्येष्वपि दंपत्योश्शिवानुध्यानपरतया सोत्कंठं वीक्षमाणेषु राजा सुप्रतीको वीक्ष्य पुरोधसमिदमूचे गुरो त्वरस्व। प्रधानं विवाहकर्म निर्वर्तय। पश्चादवशिष्टं कर्म समाप्यते।

पुरोहितः क्षांतं वीक्ष्य स्वामिन्! किमेनां कुमारीमुद्वोढुमागतोसि।

क्षांतः—न हि न हि।

सुप्रतीकः—तामुद्वोढुमेवागतोयं। भवास्तु। विवाहकर्म कारयितुं। पुरोधाः। हारिणीं प्रति। वत्से! किमेनमुपयंतुमागतोसि।

हारिणी—अथकिम्।

पुरोधाः—युवयोर्मनसि यद्वर्तते तदुच्यता।

क्षातः—हारिणि! किमप्यस्ति ते वक्तुम्?

हारिणी—आर्यपुत्र! न किमपि।

पुरोधाः—स्वामिन्! किमस्ति ते वक्तुम्।

सुप्रतीकः—तत्पक्षेऽहमुत्तरं ददामि तस्यापि वक्तुं किमपि नास्ति।

क्षांतः—लोके मनुष्याः परैरज्ञातं यत्किंचिदाचरंति।

बंधूकः—आः किमर्थोयं विवादः। हसति लोकः।

क्षातः—गुरो तिष्ठ मन्निकटे। सुप्रतीकं प्रति। तात! परितुष्टेनानुपरोधेनान्तरात्मना त्वामेनां मह्यं दास्यसि।

सुप्रतीकः—वत्स! यथेयं मह्यमीश्वरेण दत्त्वा तथाहं ते दास्यामि।

क्षातः—एतादृशानर्घोपहारस्य सदृशं किं ते दातुं शक्नुयाम्।

राजा—तस्याः पुनर्दानादपरं न किमपि ।

क्षान्तः—महाराज ! शिक्षय मां विनयं। इमां परिगृहाण पुनः । माऽदाः विशीर्णं फलं सुहृदे । एषा दुर्विनीततताशालिनीवनालक्ष्यते बहिः । साध्वीत्वाभिनयेन पापिष्ठां मनोवृत्ति निह्नुते । सच्छीलानुमापकमुखरीतिर्न दृश्यते । रे पश्यत जनाः । यूयं बाह्यविलासैस्साअद्याप्यप्रगल्भा कन्येति प्रतारिताः । किंतु वस्तुतस्तथा न । परपुरुषशय्याधिरोहणरतिमुद्वहति तस्या मुखविकारेण बंधकीति विज्ञायते ।

सुप्रतीकः—आर्य ! अस्य तव वचनोपन्यासस्य को वाऽभिप्रायः ।

क्षातः—जारिणीति सर्वैरभ्युपपन्नाया अस्याः पाणिपीडनेनात्मानं तुच्छीकर्तुं नेच्छामि। सुप्रतीकः । आर्य ! भवानेव प्रथमावलोकानादेवोदीर्णरागवृत्तिरुपर्यंतुं ता प्रलोभितवानसि । इदानीमेवं तस्याश्चारित्रं दूषयितुं नार्हसि ।

क्षान्तः—नाहं कदाचित्प्रगल्भवचनैस्तां प्रालोभयं। कित्वकामेन चक्षुषा निर्विकारेण मनसा भगिनीमिव ता दृष्टवानस्मि ।

हारिणी—किं तेऽधुना विपरीतास्मि । किमहं कदाचिदन्यथा भूतास्मि ।

क्षान्तः—बहिर्निष्कलंकचंद्रवदाभासि । अंतर्विशृंखलं वनेचरद्भ्योऽधिकतरं कामपराचीनचित्तवृत्तिर्भवसीति जानामि ।

हारिणी—किमुन्मत्तीभूय मे नाथ एवं प्रलपति ।

सुप्रतीकः—राजन् ! दानसार ! किं मौनमवलंबसे । किं न प्रतिभाषसे ।

दानसारः—कि वक्तव्यम् । अत्र । संबन्धायोग्यामेनां मित्रेण संयुयुक्षवो वयमवमानिताः ।

सुप्रतीकः—किमयं स्वप्न उत जाग्रद्वा भ्रांतिर्वान जाने ।

तनुजानुः—राजन् ! नायं स्वप्नः न जाग्रद्वा । किंत्विदं वास्तवमेव । एवं जनाः कथयंति ।

बंधूकः—नायं विवाहइव ।

हारिणी—हा विधे ! कथमेवमकांडदारुणदुर्विपाकोसि।

क्लान्तः—किमहमवस्थोस्मि । किमसौ मे मित्रं नृपतिः । किमयं तस्य भ्राता । किमेतद्धारिणीमुखं । कि सैवास्माकमिंद्रियवृत्तिः ।

सुप्रतीकः—क्लांत ! सर्वं तदेव । किमनेन ।

क्लांतः—एकं पृच्छामि ते दुहितरं । पितृत्वाधिकारेण वात्सल्येन च नियोजयतां प्रत्युत्तरीकरणे ।

सुप्रतीकः—पुत्रकल्पोसि मे त्वामनुजानामि तथा क्रियताम् ।

हारिणी—भगवन्—रक्ष मां अवर्णदूषितां कीदृशोऽयं प्रश्नः ।

ज्ञातः—प्रष्टव्यासि सत्यमुत्तरं ब्रूहि । तव वृत्तानुरूपं ।

हारिणी—कोवा शक्नोति मम, सद्वृत्तं मलिनयितुं ।

ज्ञातः—त्वमेव हारिणीशीलचंद्रं हारिण्येवोपरागयितुं प्रभवति । व्यतीताया निशाया सौधवातायनेस्थिता केन सह संलपंत्यासीः । यदि त्वं सत्यमखंडितचारित्रा तर्ह्यस्योत्तरं ब्रूहि ।

हारिणी—नाथ ! तत्समये न केनापि भाषितवत्यस्मि ।

दानसारः—तर्हि त्वं अखंडितकुमारीभावा ।

सुप्रतीकं प्रति—सुप्रतीक ! त्वयाप्येतद्वृत्तांतं श्रोतव्यमासीदिति शोचामि । श्रूयतामीश्वरसाक्षिकमहं ब्रुवे । मया मदनुजेन अनेन ज्ञातेन च ह्यः अर्धरात्रसमये निजमंदिरवातायनस्था केनचित्परपुरुषेण सह रहोभाषमाणा दृष्टा श्रुता च । बहुवारं विस्रब्ध मयोपभुक्तेति तेनैवास्माकं पुरत अभ्युपपन्नं ।

तनुजानुः—स्वामिन्—धिकृताश्श्रेष्टाः । भृशमनर्हाः श्रोतुं । केवलं भाषादूषणायैव तद्वर्णनं । हारिणीं प्रति । मनोहारिणि ! हारिणि ! निजचापलस्य फलमनुभव ।

ज्ञातः—हाहारिणि ! कथं हारिण्यसि नाम्नेव हारिण्यसि यदि ते बाह्याकारचारुताया अर्धांशो मनसि वर्तते तर्हि शोभनं भवेत् । अपेहि कुलटे अपेहि । त्वं यथा मूर्ता रूपसम्पत् तथा मूर्तिमती दुर्विनीतिः ।

दुर्विनीते तव हेतोरद्यप्रभृति प्रमदानुरागकथाद्वाराणि पिथास्यामि । इतः परं सर्ववनिताना रूपसंपदनर्थकर्यैवेति निश्चिनोमि ।

सुप्रतीकः—आः कथमत्र न कोपि मे शस्त्रं दातुं ।

हारिणी—मूर्छिता पतति । लवली । हाधिक्-हाधिक्-कथं मे मातुलसुता संशयितजीवित्रिता संवृत्ता ।

तनुजानुः—एहि वयं साधयामः । एतद्वृत्तांतं स्वयमेव प्रसरति । ततो तनुजानुः क्रातः दानसारश्च निष्क्राताः बंधूकः । अपि जीवति सा । लवली । सस्थितेति मन्ये । मातुल मातुल परित्रायस्व माम् ।

अथायशोजनकेन दारुणव्यसनोपनिपातेन नष्टचेतनां तां हारिणीं तत्तुल्यावस्थं तत्पितरं सुप्रतीकं च तत्रैव देवालये त्यक्त्वा क्रोधसंरंभेण क्रांतदानसारयोः निष्क्रांतयोर्लवलीद्वितीयो बंधूको हारिणीं प्रकृतिमापन्नां कर्तुं अयतत । प्रियमातुलसुता लवली हारिणी मृतेति निरचिनोत् । किंतु विज्ञाततत्सद्वृत्ततया हारिणीगतं कौलीनं न प्रतीयाय । वृद्धस्तत्पिता तथा न । अकीर्तिकरं दुहितरि जनापवादं विश्वसन् तस्या अप्रबोधमेव आशंसमानो गाढमूर्छोपहृतचेतनाया मृतकल्पायास्तस्या उपर्यात्मानं पातयित्वा सोरस्ताडं सकरुणं विललाप ।

अत्रान्तरे लोकवृत्तान्तपरिज्ञाननिपुणः पुरोधा आरोपितापवादेन दूषितायास्तत्कुमार्या मुखरागमिंगितं च सावधानं परीक्षमाणोऽपवादश्रवणसमनंतरमप्यविपर्यस्तमुखरागेण रज्यमाननेत्रकांत्या सा निर्दुष्टेति दृढं जानन् तत्पितरमवोचत । राजन् ! मा मूर्ख इति गृहाण । मे बहुश्रुतत्व वैचक्षण्यं वयोवृद्धत्वं मा विश्वस । प्रत्येहि मे वचनं । इय ते कुमारी निष्कलंका अनघाच । कैश्चन खलैः कर्णेजपैश्चैवं दूषिता नेयं मृता । जीवत्येव । ततो लब्धसंज्ञा हारिणीं दृष्ट्वा पुरोहितो बभाषे । वत्से ! केनाभिशस्तासि ।

हारिणी । आर्य ! नाह किमपि जानामि । पितरं प्रति तात ।व्यतीतायां रात्रा वहमेकाकिनी । परपुरुषेण संलपती येन केनचिद्दृष्टेति त्वं प्रत्येषि चेत्तर्हि चित्रवधेन मा घातय । पुरोहितः । कैश्चित्खलैः ज्ञातदानसारौ प्रतिबोधितौ एनामन्यथा जगृहतुः । भवत्विदानीं का वा क्षतिः । हारिणी मृतेति सर्वतः प्रख्यापय । कुतः । मरणकल्पमूर्छानिमग्नां तां प्रथमं दृष्टवंतौ तौ ज्ञातदानसारौ मृतेति विश्वसेतां । शोकचिह्नं धारय । तत्स्मृत्यर्थमेकं गृहं विरचय । और्ध्वदेहिकाः क्रिया निर्वर्तय ।

सुप्रतीकः । अनेन किं कृतं भवेत् ।

पुरोधाः । अस्या इयं मरणवार्ता जनाना श्रवणगोचरता गता निदामपाकृत्य मनसि करुणां जनयेत् । ज्ञातोपि

निजवचनपारुष्येण भर्त्सिता ममारेति श्रुत्वा सा मत्कृते त्यक्त-जीविनेति करुणार्द्रचित्तो भवेत् । तदनुरक्त चित्ततया यदा कदा वा कामपरवशो भूत्वा "मया अकार्यमनुष्ठितं । वस्तु-तस्सा खंडितचारित्रापि तथा मया नोपालम्भनीया " इति पश्चात्तप्तो भवेत् ।

बंधूकः । सुप्रतीक ! पुरोधसा यदुपदिष्टं तद्विधेहि । अहं राजज्ञातयोरंतरंगोपि एतद्रहस्यं तेभ्यो न कदापि प्रकटी-करोमीति । प्रतिजाने ।

ततस्सुप्रतीको भृशं दुखितः पुरोधसोक्तप्रकारं कर्तुमं-गीकृतवान । अथ तद्गुरुर्हारिणीलयान्तौ समाश्वासयन् गृहमनयत् । बन्धूको लवलीचैकतस्स्थितौ दुःखनिर्विण्णचेतसौ निर्वृतिं न लेभाते ।

बंधूको लवलीं दृष्ट्वेदमाह । प्रिये ! लवलि । किं रुदितं त्वयैतावंतं कालम् ।

लवली—क्रियते किं रोदनेन । बंधूकः । त्वन्मातुलसुतायां सभूतं दुर्वर्णं निश्चितमिति मे मतिः ।

लवली—यस्तां स्वस्थचित्तां कर्तुं शक्नुयात्स मत्तः कां प्रतिकृतिमादित्सति ।

बंधूकः । तादृशीं प्रीतिं प्रदर्शयितुमवकाशोऽस्ति । किं लोके त्वत्तः किमप्यभीष्टतरं वस्त्वस्ति मे ।

लवली—त्वत्तो लोके ममापि प्रेष्ठं वस्तु नास्तीति वक्तुं संभाव्यते । किंतु न ते मयि विश्वासः । नाहमनृतं ब्रूयाम् । शोचामि मम मातुलसुताम् ।

बंधूकः—मयि ते प्रीतिरस्ति । मम त्वयि । शपामि । खड्गेन । एहि तत्कृते यत्कर्तव्यं । तदादिश ।

लवली—तर्हि निषूद्यता क्षातः ।

बधूकः—प्रिये ! अहो ते बुद्धेः क्रौर्यम् । विश्वप्रदानेनापि नाहं तादृशमकार्यमनुतिष्ठामि । यतस्स मे मित्रं । मयि जातविस्रंभः । तादृशं हंतुं नोचितं ।

लवली—कि स क्षातो न दुरात्मा यो मे मातुलसुतां साध्वीं दोपारोपणेनावमानितवान् ।

बंधूकः—शृणु प्रिये भूतार्थम् । अहं मनुष्यः । न राक्षसः । ततस्सजातीयं मनुष्य हन्तुं कथमुत्सहे एवं क्षांतस्य निरागस्त्वप्रतिपादकानि बंधूकवचनानि शृण्वाना लवली वैरनिर्यातनाय क्षांतं हंतुं बंधूकं पुनः प्रचोदयंत्याह । गवाक्षस्थिता जारेण संभाषितवतीति वक्तुं कि युज्यते । हा ! हारिणि ! कळंकितासि ! विप्रलब्धासि । मुषितासि । यद्यहं पुमान्भवेयम् तर्हि क्षातमेकक्षणेन यमक्षय प्रापयेयम् ।

बंधूकः—प्रिये ! मा त्वरस्व । क्षणमात्रं तिष्ठ । अनेन हस्तेन त्वयि प्रीतिं दर्शयिष्यामि ।

लवली—तेन हस्तेन प्रतिज्ञाकरणादन्यतरस्मिन्कार्ये मयि प्रीतिं दर्शयितुं यतस्व ।

बंधूकः—प्रिये ! नूनं क्लान्त एव हारिण्या आपदः कारणमिति मन्यसे ।

लवली—तत्र कस्संदेहः । यथा ईश्वरसद्भावो निश्चितस्तथा तद्दोषोपि ।

बंधूकः—अलमतिविस्तरेण एषोहं गमिष्यामि तद्व्यापादनाय ।क्लान्तं हतमवेहि । चुंबनं दत्वा प्रेषय माम् । अयं मे बाहुः क्लांतहननसम्भावनामर्हति । यथा ब्रवीमि तथैव करिष्यामीति जानीहि । साधय । तव मातुलसुतां समाश्वासयितुं ।

यदा लवली हारिणीवैरशोधनाय क्लात निहन्तुं कोपोद्दीपितवचनैर्बंधूकस्य चित्तवृत्तिमुद्दीप्यतं प्रेषितवती तदा सुप्रतीकशुचा त्यक्तजीविताया स्वदुहितरि कृतापकारौ क्लांतदानसारौ युद्धायाजुहुवे ।

अथ पुत्रिकावियोगखिन्नमानसं प्रवयसं तं सुप्रतीकं मृदूक्तिभिस्सान्त्वयंतौ ताविदमूचतुः । आर्य ! आवाभ्या माविगृह्णीष्व । इदानीं बंधूकोप्यागत्य वज्रलेपसदृशतत्कृतहारिण्यवमानं प्रतिकर्तुं क्लातदानसारौ प्रत्येकं द्वंद्वयुद्धायाकारितवान् । लवल्या प्रणुन्नोऽयमागत इति तौ परस्परं मंत्रयतस्स ॥ तथापि तत्समये निष्पक्षपातेनेश्वरकारुण्येन निर्दुष्टा हारिणीति प्रबलतर-

प्रमाणं न लभ्यते चेत् क्षांतो बंधूकस्य युद्धनिमन्त्रणं प्रतिगृह्णीयादेव ।

अथ क्षातदानसारौ भाषमाणयोस्सतोः कश्चिद्राजदंडाधिकारी भराजं निगळितकरचरणं कृत्वा "अयं महापराधी" इति राजसन्निधिमानिनाय । हारिणीविषये द्रोहं कर्तुमहं दनुजानुनोपजापितोस्मीति कस्मैचिन्निवेदयन्केनाप्युपश्रुतो राजसन्निधिमानीय दंडेन भायितः । अयं द्रोह आत्मकृत इत्यभ्युपगम्य क्षाते शृण्वति सत्येव माह । "आर्यमिश्राः परित्रायध्वं माम्," अभयं प्रतिशृणुत मह्यम्, सर्वं विवृणोमि । तन्निशायां मया सह संलपन्ती भवद्भिर्दृष्टा हारिणी न अपितु हारिणीवेषधारिणी तच्चेटी मृगीरता । एवं त्वद्भ्रात्रा खलेन दनुजानुना शिक्षितः कपटं कृतवानस्मि । अनघा सा हारिणीति । एतस्मिन्नेव समये आत्मनो दौर्जन्य सर्वैर्विदितमिति ज्ञात्वा दनुजानुर्वधभिया प्राणान्परिरक्षितु चंपानगरीं परित्यज्य पलायितः। अस्य खलस्य पलायनेन क्षातदानसारयोर्मनसि शंका सुतरामपास्ता । इदं सर्वमस्य दुष्टस्यैव चेष्टितमिति निश्चित्य सर्वे हारिणीं विशुद्धां विदुः । वृत्तदूषणापादकनिष्ठुरवचनाकर्णनेन मृतायां हारिण्या स्वेन मिथ्याभियोगः कृत इति ज्ञात्वा क्षांतश्शोकसंतप्तमानसो बभूव । प्रथमदृष्टेन लोचनलोभनीयेन लावण्यमयाकारेण सा मुहुर्मुहुस्तस्य स्मृतिपदवीमाटिटीके । वयस्य ! इदानीं

त्वयाभराजोक्तमयश्शूलमिव हृदयविदारकं खल्विति दान-सारेण पृष्टः क्लांत आह। प्रियमित्र! भराजोक्तं शृण्वन्नहं विषवेगनिरुद्धप्रसरमिवात्मानं जानामि।

ततः क्लांतस्स्वकर्मणि जातानुशयस्सुप्रतीकस्य पादयो-रात्मानं पातयित्वा तद्दुहितर्यात्मना कृतं महापकारं क्षंतुमनु-निनाय। वाग्दत्तभार्यायां मिथ्याभियोगविश्वासापराधायसुप्र-तीको यद्देहान्तप्रायश्चित्तं विदधाति मम तदहमवश्यमनुतिष्ठा-मीति क्लांतस्तस्मै प्रत्यजानात्।

अथ सुप्रतीकेन क्लांतस्य विधित्सितं प्रायश्चित्तमिदम्। "मदपत्यनाशादिदानीं मद्राज्यस्योत्तराधिकारिणीकृतां शरीर-सौंदर्येण हारिणीसदृशीं मत्पितृष्वस्रीयां लवलीं त्वमवश्यं श्वः प्रातरेवोपयच्छेति" सुप्रतीकः क्लांतमन्वयुंक्त। क्लांतस्स्वकृतधीर-प्रतिज्ञानुरोधेन तामुद्वोढुमनुमेने। तन्निशायां तत्स्मृत्यर्थविनि-र्मितश्मशानमंदिरनिकटेऽश्रुविमुंचंस्तां रात्रिमत्यवाहयत्।

अथ प्रभातायां रजन्यामुदयगिरिमस्तकनिष्ठे भगवति भास्वति दानसारानुयातः क्लांतः प्रविवेश देवतासदनं यत्र हारिणीद्वितीयस्सुप्रतीकः पुरोधा इतरे च हारिणीद्वितीयविवाह-महोत्सवं प्रथयितुं संमिळिताः। ततस्सुप्रतीकः प्रतिश्रुतां वधूं क्लांतायादिशत्। तां क्लांतः प्रत्यभिज्ञातुं यथा न शक्नोति तथा सर्वांगीणावकुंठितां चकार। तथावकुंठितां वधूं वीक्ष्य

क्रांत आह । "प्रिये ! अस्य गुरुजनस्य पुरस्ते पाणिना मत्पाणिं गृह्णीष्व । भर्तास्मि ते इति ततोऽज्ञातेयमाह नाथ ! पुरा मज्जीवितकाले तवापरा जाया आसम् । एतच्छ्रुत्वा क्रांतः परिचितकंठस्वरेण तां हारिणीति निश्चित्य निचोलमपाकृत्य पश्यन् "नासावन्याहारिण्या इति निश्चिकाय । हारिणी नूनं मृतेति निश्चिन्वतस्तस्य मनसीदं सर्वं परमाद्भुतमजनयत् । हर्षसम्भ्रमाभ्यामाकृष्टचित्तः क्रातस्स्वचक्षुर्वृत्तिमपि न प्रमाणीकृतवान् । तत्तुल्यविस्मयाविष्टो दानसारोऽपि ता दृष्ट्वा ''किं नासौ हारिणी या मृता" इत्याचक्रन्द ।

सुप्रतीक आह—सा मृता । तदपयशस्तु जीवति । विवाहकर्मनिर्वर्तनानन्तरं तत्सर्वं वृत्तातं भवद्भ्यो निवेदयामीति पुरोहितस्तौ प्रतिबोध्य कर्म निर्वर्तयितुमारब्धवति बंधूक आगत्य लवल्या सह मद्विवाहोपि निर्वर्त्यतामित्युक्तवान् । लवली बंधूकं विवोढुं नैच्छत् ।

बंधूकः—तदा त्वं मदनुरक्तमानसासीति हारिणी ममाकथयत् । अहमपि त्वयि प्रीतिमुद्वहामि तस्मान्मे भार्या भव ।

अथ तौ प्रतारयितुं परिहासपरैर्दानसारप्रयुक्तः कपटप्रयोगो न वास्तवानुरागप्रकाशक इति तत्रत्यैरुक्तं तावजानीताम् । तथापि कपटप्रयोगोत्पादितोपि क्रमशो रूढमूलतया

वंचनपरिज्ञानानंतरमपि बभूवाप्रकम्प्यः । यतो बंधूकस्तामुपयंतुं मनसि निश्चितवान ततो निजसंकल्पविरुद्धाजनोक्तीर्नाजीगणत् ।

अथ बंधूकः प्राचीनपरिहासकथामेवानुवर्तमानो लवलीमिदमाह । लवलि! सत्यं शपामि ते शरीरस्पृष्टिकया । त्व मद्गतानुरागेण भृशं क्लिष्टा । प्राणसंशयमापन्नासीति श्रुत्वा वेपते मे हृदयम् । लवली—बंधूक! त्वमपि मत्कृतेऽत्यर्थं मदनशरसंतापितोसीति शुचा त्वत्पाणिं पीडयितुं बलात्कृतोस्मि ।

एवं हारिणीक्रातविवाहानंतरं लवलीबधूकयोरपि विवाहस्संववृते ।

अथैतद्दुर्नाटकस्य कर्ता पलायितो मध्येमार्गं जीवग्राहं गृहीतश्चंपामानिन्ये । तत्कृतातरायैरविहन्यमानं विवाहमहोत्सवद्वयं दर्शितश्च । तदेव पराभ्युदयासहिष्णोरस्य दुष्टस्य दंडः ।

समाप्तः शून्याविषये बहुश्रमः ।

---

## 13 As you like it ( यथेच्छसि )



Dramatis Personæ

1. Frederick = प्रदरः भ्रातृराज्यापहारकः
2. Duke = राजा—प्रदरेण विवासितः.
3 France = प्रांशुदेशः.
4 Rosalind = प्रभावती—विवासितस्य राज्ञो दुहिता
5 Celia = प्रदरस्यसुता—सुशीला.
6 Forest of Arden = अर्दनारण्यं.

# ॥ यथेच्छारे. ॥

## (AS YOU LIKE IT)



अतिविपुलः प्रांशुनामको देशः पुरा भागशो विभक्तः । तथा विभक्तेषु देशभागेष्वेकस्य भागस्य पालयितारंकंचिद्राजानं तदनुजो प्रदरनामा राज्यात्प्रच्याव्य देशान्निरक्रासयत् ।अनुजेनापहृतराज्यो विवासितोयं दौर्भागिनेयो राजा राज्योपभोगहीनः कतिपयैरनुजीविभिरन्वितोऽरण्यं जगाम । परैराक्रान्तान्स्वस्वराज्यकोशदण्डानप्युपेक्ष्य केचन तदाप्तनरपतयोपि तेन सह स्वेच्छावृत्त्यभ्युपपन्नवनवासास्सुखमूषुः । तेऽपि तत्र निरुद्योगतया दूरीकृतभोगव्यसनतया श्रुतिसुखमात्रसारात्क्लेशबहुळात्स्वानुभूतनश्वरराज्यैश्वर्यादियमारण्यवृत्तिरेवाधिकतर सुखकरीतिमन्यमाना अरण्योषितास्तपोधना ऋषय इव प्रशान्तजीवनास्सुखेन कालं यापयंति स्म । नगरप्रत्यासन्नतया बहवः कुलीना उदारवेषा राजकीयसभासदो यूनः प्रतिदिनमागत्य एतैस्सह गोष्ठीसुखमनुभवंत आत्मानं विनोदयंति स्म ।

एकदा प्रचंडतरनिदाघे समुपस्थिते एते सर्वे प्रच्छायशीतले वनतरुषडमध्ये निषण्णास्तदुपकंठकच्छेषु प्ररूढदर्भांकुरग्रासलालसानां वनमृगीणां क्रीडाविशेषान्पश्यंतो रेमिरे

चिराद्वनवासनिरतानां भूताद्रोहलब्धवृत्तीनामेतेषां तपस्विनां मृगाणां वध आहारार्थमस्माभिः कृतो नूनं वृजिनमावहतीति तान्वीक्ष्य जातानुकम्पा बभूवुः ।

हेमन्तहिमानिलैः पीड्यमानस्सराजा तितीक्षमाणः निजदशाविपर्यासं शोचन्निदमाह । मच्छरीरस्पृश एते शीतसमीरपा एव मे सन्मंत्रिणः । कुतस्ते प्रियवादिनीभिः कपटोक्तिभिर्मां न लोभयंति । प्रत्युत ममाधुनिका दुरवस्था सम्यक् ज्ञापयन्ति । एते वनमाक्षिका मा दशन्तो एतेषां दशनाः कृतघ्नानां निर्दयाना मद्राजवल्लभानां दन्ता इव नातितीक्ष्णाः । भयदकृष्णसर्पशीर्षिणस्थितः भैषज्योपयोगिमणिरिव विपद्दशापि काश्चित्सारतरां शोपदेशे उपयुज्यते । एवमतिक्षमावान्स राजा लोके दृष्टात्प्रतिवस्तुनस्सच्चरित्रं शिशिक्षे । एवं स राजा सजातवैराग्यसहायेन लब्धात्मज्ञानेन पादपेभ्यश्शीतवातातपादिद्वंद्वसहिष्णुत्वं गिरिनिर्झरेभ्यो विभवास्थैर्यं दृषद्भ्यो निर्विकारुतां चाशिक्षत ।

एवं विधस्यास्य राज्ञ आसीदेका दुहिता प्रभावती नाम । या पितृराज्यापहारीप्रदराभिधः स्वतनयायास्सुशीलाभिधायास्सखीत्वेन परिकल्प्य निजमंदिरएव स्थापितवान् । एवं सवयस्कयोस्तयोः कन्यकयोरेकत्र शयनासनविहारपानभोजनादिना क्रमेण गाढतरा मैत्री प्रववृधे । तत्पित्रोर्विरोधस्तयोस्सख्यस्य न मनागपि भंगमजनयत् । यदा यदा प्रभावती पितृ-

व्यक्तपितृराज्यापहरणं स्वपितरि तस्यान्यायप्रवृत्तिं आत्मनः पराधीनवृत्तिं च स्मारं स्मारमुदश्रुर्विललाप तदा तदा सुशीला तत्पितरि स्वपितुर्दुष्प्रवृत्तिं मुहुर्विनिंदंती यथाशक्ति दुःखोपशामकवचनैस्तस्या दुःखापनोदनमकार्षीत् ।

तयोरेवं गच्छति कालेऽथैकदा यथापूर्वं मदयभंग्या सुशीला प्रभावत्या सह भाषमाणा इत्थमाह । "प्रियभगिनि! विरम शोकात् । सुखितमास्व । " सुशीलायामेवं भाषमाणायां राज्ञा प्रेषितः कश्चित्सदेशहरः प्रविश्याह । "भर्तृदारिके! तातस्समाह्वयति भवत्यौ । प्रदर्श्यमानं मल्लयोर्नियुद्धं वीक्षितुं यदि कुतूहलं भवत्योस्तर्ह्यविलंबितमेव राजमंदिरांगणमागंतव्यम्" इत्युक्त्वा दूते विनिष्क्रांते विषण्णायाः प्रभावत्यास्साधीयानयं चित्तरंजनोपाय इति मत्वा प्रभावतीद्वितीया सुशीला रंगं प्रतस्थे । आधुनिकप्राकृतजनैः प्रदर्श्यमानं मल्लयुद्धं पूर्वस्मिन्काले लोकातिशायिसौंदर्याणां प्रमदानां राजावरोधजनानां पुरतः प्रदर्शितमभूत् । तस्माद्यथाचारं राजपुत्र्यौ सुशीलाप्रभावत्यौ नियुद्धवीक्षातत्परे तत्र प्रययतुः ।तत्र समवेतास्सर्वे प्रेक्षका अवलोकयितुमेतदतीव भयंकरपरिणामं भविष्यतीत्यमंसत । यतः पृथुलदेहपरिमाणो बलवाश्चिरान्नियुद्धकलाकुशलश्शतशो निजभुजार्गलनिष्पिष्टमल्लवर्गः कश्चिन्नियुद्धकलानभिज्ञाय कस्मैचिद्यूने शस्त्राशस्त्रिद्वंद्वसंप्रहारं दातुं समुद्यतः । तदा सर्वे प्रेक्षका नूनमयं

हन्येतेत्यमंसत । राजा प्रदरस्तत्र समुपस्थिते कन्यके दृष्ट्वा आह "वत्से किं मल्लसंप्रहारं द्रष्टुमभ्यागते? नायमल्पीयसीमपि प्रीतिं वां जनयति। यतस्तयोर्मल्लयोर्महद्वैषम्यमस्ति। नासौ युवा प्रौढमल्लायालं। एनं युवानं वीक्ष्य दयार्द्रचित्तोहं युद्धं निवारयितुमभिलषामि। तस्माद्वत्से! युवां तन्निकटं गत्वा तौ युद्धान्निवारयितुं प्रयतेताम्"

अथ ते उभे परहितपरा पित्राज्ञां परिपालयितुं प्रचक्रमाते। तयोः सुशीला प्रथमं तस्य वैदेशिकयूनस्सविधमेत्य, "आर्य! बलहीनस्य कोमलतनोः द्वंद्वयुद्धतंत्रानभिज्ञस्य तव प्रकृष्टबलेन कर्कशकायेन द्वंद्वसंग्रामकोविदेन तेन मल्लाग्रेसरेण युद्धं न श्रेयः। चंचला युद्धसिद्धिः। तस्माद्युद्धसंरंभाद्विरमेति भाव्यनर्थसूचकैर्मृदुभिर्वचोभिर्बोधितवती। तथैव प्रभावत्यपि संग्रामाद्विरमेत्यनुनिनाय। एवं ताभ्यां कन्यकाभ्यां स युवा युद्धोत्कंठा जहाहीति प्रतिबोधितोपि न लक्ष्यां चकार प्रत्युत तयोः पुरतस्स्वबाहुपराक्रमं प्रथयितुमेव सोत्साहो बभूव। यथा तयोर्मनस्तस्मिन्भृशं दयार्द्रमभूत्तदा तादृशविनयवचोभिस्तयोः प्रार्थनां प्रत्याचख्यौ। तस्मिन्नवसरे स एवमाह। हे चारुदर्शने कन्ये! युवां प्रत्याख्यातुं नोत्सहे। तथापि युष्मच्छुभकटाक्षान्विजयाशंसयासमं मयि निवेशयितुं प्रार्थये" यद्यहं जितस्स्याम्। तदा परोपकृतिशून्य एकएव परिभूतो

भवेन् यद्यहं व्यापादितोस्मि तर्हि मर्तुकाम एव मृतो भवेत्। न कोपि विप्रकृतो मया। मदर्थं न कोपि शोचति मन्निधनेन न कापि विनष्टिर्लोकस्य। न मेऽस्ति किमपि कर्तव्यं। मया रिक्तीकृतं स्थानं लोके साधीयसा अन्येनाक्रम्यते इति।

अथ प्रारभ्यत मल्लयुद्धम्। तस्य गात्रेशस्त्रक्षतिर्माभू-दिति कन्याद्वय माशशंस। प्रभावती तु तस्मिन्यून्यधिकतरा-मनुकंपामुवाह। मर्तुकामोस्मि। न कोपि मामनुशोचतीति तद्वचनेन द्रुतचित्ता प्रभावती "अहमिव सोपि दैवोपहत इति मेने। तत्समये सा प्रभावती तद्गुणमोहिता तस्मिन्ननुरक्तेति वक्तुमपि यथा उचितमभूत्तथा तस्मिन्नागंतुके यूनि पक्षपातं दयां स्नेहं चादर्शयन्। एताभ्या सुंदरीभ्यामात्मनि प्रदर्शितेन पक्ष-पातेन स्नेहेन च दत्तबलोत्साहः अपूर्वनियुद्धकळाकौशलप्रदर्शनेन चित्रीयमाणलोके नानाविधैर्मंडलभ्रमणैरंगस्थले चिरं विहरमाणो विपक्षं योधयन्नंते यथा सशस्त्रप्रहारजर्झरितगात्रस्सर्वांगस्त्रवद्रुधि रधारो वक्तुं प्रचलितुमपि न शशाक तथा तं भूमौ पातया-मास। अथ राजा प्रदरस्तस्ययूनोऽद्भुतबाहुबलेन बलानुरूपकौश-लेन धैर्यसंपदा च भृशं संतुष्टः तमनुजिघृक्षुस्तदन्वयनामनी पर्यपृच्छत्। ततस्स वैदेशिकयुवा आत्मानमार्यजयसिंहनाम्नः कनिष्ठपुत्रं सुनंदननामान माचख्यौ।

सुनंदनस्य पिता जयसिंहः पूर्वमेव मृतोऽभूत् । तस्मिन् जीवति सम्रद्रस्य प्रव्राजितभ्रातुर्मित्रमासीत् । यदायं सुनंदनः प्रव्राजितस्य भ्रातुर्मित्रसूनुरिति ज्ञातवास्तदा अस्मिन्यूनि प्रीतिं परित्यज्यासूयितो बभूव । भ्रातृमित्राणां मध्ये यस्य कस्यचिदपि नाममात्रमपि श्रोतुमसहिष्णुरासीत् । तथाप्यस्य यूनश्श्लाघनीयविक्रांतिं मुहुः प्रशंसन्नंतरसूयाग्रस्तो बहिरिदमाह जयसिंहमंतरान्येन केनचिदयं पितृमान्भवेद्यदि तदा मे प्रियं भवेत् । अयं युवा चिरंतनपितृसखस्य पुत्र इति श्रुत्वा प्रभावती तस्मिन्नितान्तं प्रीता बभूव सुशीला चैवमाह"भगिनि ! अस्य पिता मम पितुः प्रियमित्रं । अयं युवा तस्य सूनुरिति यद्यह-मज्ञास्यम् । तदाऽस्मानं जीवितसंशयमारोपयितुं सन्नद्धस्य तस्य संग्रामांगणावतारात्प्रागेव अहं तं निवारयितुं साश्रुमोक्षणं तस्य पादयोरपतिष्यम् ।

अथ ते वध्वौ तस्य सन्निधिं गत्वा राज्ञ अकांडदर्शिता-प्रीत्या व्रीडाविनमिताननं दृष्ट्वा मृदुमधुरोक्तिभिस्तस्योत्साहं वर्धयंत्यौ समाश्वासयताम् ।

अथान्तःपुरगमनसमये प्रभावती सव्याजं परिवृत्तमु-ग्धमुखपुंडरीका पितृसखसूनुं तं युवानं तिर्यगावर्तितनयनांत-कान्तिधाराजलेनाभिषिंचन्ती स्वानुरागाग्रदूतिकायमानैर्वचोभि-स्तन्मानसमाकर्षन्ती। मनोज्ञामेकामेकावळीं स्वकंठादुन्मुच्य स-

विलासमिदमाह । "आर्ये! यदि भवदनुग्रहपात्रमयं जनस्तर्ही मा मुक्तावळीं स्वीकृत्य कृतार्थयेमं जनं । निजकंठे धारय मदर्थमेताम् । इदानीमहं यदि दैवोपहता नाभविष्यम् तर्हीतो महार्घतरं पारितोषिकं तुभ्यमदास्यम् इत्युक्त्वा प्रभावती गृहं प्रविश्य एकांते स्थिता तद्गता एव कथा अकरोत् । सुशीलापि चारुदर्शने तस्मिन्मल्लयूनि विधृतभावबन्धां ता विज्ञाय" भगिनि! किमिद संभावनीयं यत्सकृद्दृष्टे कस्मिश्चिदागंतुके जने बद्धभावासि"।

प्रभावती—मत्पिता तज्जनकस्य मित्रं ।

सुशीला—तस्मिस्त्वदनुरागप्रकाशने किमिदं कारण । यतस्तात्पिता त्वत्पितुर्वल्लभ इति । तथाचेन्मम पिता तत्पितरं द्वेष्टि । तथापि न मे सुनंदने द्वेषः । राजा प्रदरो जयसिहसूनोस्सुनदनस्य दर्शनेन ज्येष्ठभ्रातुः पुरातनाप्तवर्गं स्मारितः सकलजनाभिष्टुत सद्गुणगणाया भ्रातृसुताया प्रभावत्यां जाताधिकाभ्यसूयस्सुशीलाप्रभावत्योस्सुनंदनपराक्रममधिकृत्य भाषमाणयोस्तत्रागत्य कोपारुणनयनः प्रभावतीं वीक्ष्य "नेतः परं मन्मंदिरे त्वया वर्तितव्यं । विवासितपितृपार्श्वमरं गंतव्यमित्यादिदेश । स्वदुहित्रा सुशीलया निवार्यमाणोपि तद्वचनमाकर्ण्य तामिदमाह "त्वदर्थमेवैनां वराकीमियन्तं कालमस्मद्गृह आसयम् इति ।

सुशीला—तात ! पूर्वमेनामत्र स्थापयितुं नाहं भवन्तं प्रार्थितवती । यतोहं तदा शैशवेन तत्सद्गुणानभिज्ञा आसम् । इदानीं तु तस्यास्सच्चरित्रं साध्वीत्वं गुणसंपदं दृढं जाने आवां चिरमेकत्रोषित्वा एका शय्यामधिशय्य । एकस्माद्गुरोरधीत्य एकासने उपविश्य एकस्मिन्भोजनपात्रेऽशित्वा गाढतरस्नेहेन कालं नयंत्योरावयोरन्योन्यविश्लेषो मरणादप्यतिरिच्यते । तस्मादिदानीं तस्यास्सहवासं परित्यक्तुं प्राणव्ययेनापि नोत्सहे ॥

प्रदरः—अयि ! मुग्धे पुत्रि ! सा अतिप्रौढा दाम्भिकतया तवसहवासाद्या योग्या । तस्याः प्रियवक्तृत्वं क्षमां च दृष्ट्वा सर्वे जना वंचिताः । इयं साध्वाचारेति मत्वा अनुकंपा दर्शयंति तस्याम् । तस्याः पक्षमवलंबंती भवती बालिशेव प्रतिभासि यतस्तदभावे तवौज्ज्वल्यं तवसाधुवृत्तिः प्रकाशते तराम् । तस्मात्तदनुकूलं माभाषस्व मया तस्या विहितो दंडोऽनिवार्यः । एवं प्रदरो दुहित्रा मुहुः प्रतिषिध्यमानोपि प्रभावतीं गृहोऽवस्थापयितुं यदा नागीचकार तदा सुशीलापि तामनुगतुं कृतमतिरासीत् ।

अथ तन्निशायामेव पितृभवनं परित्यज्यार्दनारण्यस्थितं प्रभावतीपितरमन्विष्यंती सुशीला प्रभावतीद्वितीया प्रतस्थे । बह्वपाये निशीथसमये महार्हवासोलंकरणादिभिरेकतो विजने पथि गंतुं स्त्रीणामक्षेमकरमनुचितमिति सम्यगवधार्य जान-

पद्वधूवेषधारणेन आत्मन अभिजात्य विनिगूहितुमाचकांक्ष तयोरेकया पुरुषवेषधारणं क्षेमकृदिति प्रभावत्यवोचत् । एवं ते वेषांतरमाधातुं क्षिप्रमंगीचक्रतुः प्राशुतया प्रभावती ग्रामीणस्य वेषं धारयितुं सुशीलाग्रामेया परिच्छदं परिधातुं भ्रातराविति बहिर्व्यवहर्तुं ते मिथस्समयं चक्रतुः । जनिमीढ इतिप्रभावती आलयिनीति सुशीला नामांतरं जगृहतुः । एवं छद्मवेषधारिण्यौ ते राजकुमार्यौ सर्वं द्रव्याभरणजातं संगृह्य गंतव्यप्रदेशस्यार्देनारण्यस्य प्रदरराज्यसीमायाबहिरतिदवीयस्तया स्थितत्वाद्धेतोर्दीर्घाध्वगमनायासमनुभवितुमंगीकृत्य प्रतस्थाते । प्रभावती सांप्रतं जनिमीढनाम्ना व्यवहृता । पुंवेषधारितया पुंस्त्वोचितधीरतामप्यवलंबमाने वादृश्यत स्वयमपि प्रवासदौर्मनस्यमंगीकृत्य तादृशं दीर्घाध्वानं तामनुगंतुं कृतमतेस्सुशीलाया निर्व्याजस्नेहविश्वासयोरनुरूपां निष्कृतिं कल्पयितुकामा नूतनभ्रातृत्वाभिमानसंबद्धा इयं प्रभावती जानपदवध्वा आलयिन्या भ्राता जनिमीढ इव सत्यं सुशीलाहृदयोत्साहं वर्धयंती मनोरंजकवृत्तांतकथनैर्मार्गक्लममपनिन्ये । एवं ते कतिपयैरेवाहोभिर्महान्तं पन्थानमतिक्रम्यार्देनारण्यं प्रापतुः । यत्रातिक्रांतमार्गइवानुकूलाः पथिकशालावा वासतेया मठावा नादृश्यंत । चिरानुभूतदुस्सहमार्गायासखिन्ना क्षुत्परीता विश्रांतिमलभमानाजनिमीढनामा पहुताप्रभावत्येतावंतं कालं कौतुककरवार्ताभिः

पथि भगिन्या मनस्समुल्लासयंत्यपि निजं पुरुषवेषमवमत्य नारीव मुक्तकंठमाक्रंदितुमारभत। आलयिनीनामांतरिता सुशीलापि नेतः परं पदात्पदमपि प्रचलितुं शक्नुयामित्युवाच। दुर्बलाया अबलायाश्चित्ततोषणं समाश्वासनं च पुरुषस्य नियतो धर्म इति मत्वा जनिमीढो नष्टां धृतिं प्रत्यवरुंधन्निव भगिनीमेवमाह। भगिनि! आलयिनि! समाश्वसिहि। तीर्णकल्पः पन्थाः। अद्य अर्दनारण्यं प्राप्ते स्वः कृत्रिमपौरुषमाहार्यधैर्यं च हित्वा दुःखपर्याकुलतामीयतुः। यतस्ते ऽर्दनारण्ये स्थितेऽपि राजोषितमाश्रमं नाजानताम्। एवं तयोः प्रमदयोः प्रस्थानं दुःखप्रदमभूत्। आहाराभावेन ते बुभुक्षापीडिते अलब्धपरित्राणे जीवितनैराश्ये वृक्षच्छायनिषण्णे यदृच्छया तत्र कंचिदाभीरं ददृशतुः। ततो जनिमीढस्तं गोप वीक्ष्य पुनः पुरुषोचितधैर्यमास्थायैवमाह। गोप! यत्र धनदानेनास्मिन्नरण्येऽस्माकमातिथ्यं लभ्यते तत्रास्मान्नेतु त्वां प्रार्थयावहे इयं मे यवीयसी स्वसा मार्गक्लेशेन भृशं परिग्लाना अशनायातिपीडिता मूर्छतीति।

गोपक आह— अहं कस्यचिद्गोपपतेर्भृत्यः। मम स्वामिनो गृहं सद्य एव विक्रीयते। यदि युवां मया सह आगच्छेतं तत्र यदस्ति तद्युवयोर्भविष्यतीति।

एवं दुःखापनयनप्रत्याशासंवर्धितबलोत्साहे ते कन्यके तद्दर्शितमार्गेण तमन्वीयतुः। तत्र गत्वा तद्गृहं गृहपरिच्छदं तदौरभ्रकं च क्रीत्वा तत्र सुखमूषतुः। मार्गदर्शनादिना कृतोपकृतिं तं गोपं निजभृत्यं चक्रतुः। एवमनेनोपायेन दिष्ट्या वासेतेयं कुटीरमेकं खाद्यद्रव्यसभारं च लब्ध्वा पितृनिवासभूतस्यारण्यैकदेशस्यापरिज्ञानादत्रैव सुखमुषितुं निश्चिक्यतुः।

अथ ते राजकुमार्यावध्वखेदमपनीय लब्धविश्रान्त्यौ नूतनदशापरिणामं चिंतयितुमारभेताम्। "आवां गोपकुलोत्पन्ने इति बहिः प्रकटितवत्यौ याहं कदाचित्सुनंदनानुरक्ता सा प्रभावत्येवाहमस्मीति" जनिमीढस्सस्मार। बहुयोजनशतान्तरे वर्तमानोपि सुनंदनस्तस्याः पुरतोऽवस्थित इव प्रत्यभात्।

अयं सुनदनो जयसिंहस्य कनिष्ठः पुत्रः। असौ जयसिंहो स्वपुत्रमेनं विद्यामुपदेष्टुं स्वाभिजात्यार्हगौरवादिकं शिक्षितुं मरणसमये स्वज्येष्ठपुत्रस्यारिसिंहस्य हस्ते समर्पितवान्। किंत्वरिसिंहः पितुराज्ञानुरोधेन तस्मिन्सौभ्रात्रं नादर्शयत्। स्वः प्रस्थितस्य पितुराज्ञामुल्लंघयन्भ्रातरं पाठशालां न प्रेषितवान्। तस्य विनयने उपेक्षामेव दर्शयन् तं गृहाएवावस्थापितवान्।

तथापि सुनंदनस्सत्स्वभावौचित्यौदार्याद्यात्मगुणसंपदा च पितृतुल्यत्वाद्विद्योपदेशं विनैव सद्वंशे वृद्धैस्सम्यक् शिक्षितस्सुगृहीतविद्य इव विनीतो बभूव तज्ज्येष्ठभ्राताऽरिसिंहः अगृही-

तविद्येपि साधुशीले शुभाचारे उदारचरिते तस्मिन्सुनंदने जात-मात्सर्यतया तमेकदा हंतुमैच्छत् । येन केनाप्युपायेन तं नाशयितुं संकल्पितवान्। अनेनैव हेतुना प्रथितयशसा पूर्वोक्त-मल्लेन मल्लयुद्धं कर्तुं तमचोदयत् । अनेन निर्दयेन क्रूरचित्तेन भ्राता एकाकी परित्यक्तो मर्तुमैच्छत् । अपितु स दुष्टभ्रातुस्संकल्पस्य प्रातिकूलतया मल्लयुद्धे जैत्रो बभूव । तदुपरि विजय-श्रीपरिष्वक्तमेनं वीक्ष्य भृश संजातेर्ष्य एकदा निशीथसमये सुनंदनस्य शयनागारं प्रदग्धुमियेष । सुनंदनस्य पितृतुल्याकृति दृष्ट्वा प्रीतेन केनचित्पितुः प्राचीनभृत्येन कृतज्ञेनास्य दुष्टस्येच्छा-विज्ञाता । राजमंदिरात्प्रतिनिवृत्तमेनं द्रष्टुमभ्यागतोयं वृद्धभृत्य-स्स्वामिसूनोस्सुनंदनस्याज्ञातोपस्थितां प्राणापदं स्मृत्वा तस्मिन् दृष्टमात्रएव सकरुणमेवमुज्जुघोष । "स्वामिन्! मृतस्य जयसि-हस्य स्मृत्यर्थं किमेवं साधुशीलोसि । किमेव विक्रांतोसि । तं प्रसिद्धमल्लं द्वंद्वयुद्धे विजेतुं किमेवमुत्कंठितोऽभूः । तवेयं कीर्ति-स्त्वत्तः प्राक्सर्वत्र प्रसृता ।"

सुनंदनः—एतदाक्रोशं श्रुत्वा विस्मयाविद्धः किमपि निर्धारितुमशक्नुवन् किमेतदिति तं पप्रच्छ । एवं पृष्टस्सोपीत्थ-मभिधातुमुपचक्रमे । "आर्य! सर्वजनश्लाघापात्रस्योदारचरितस्य तव गुणसपदेतः पूर्वमेव त्वयि जातमत्सरस्तव ज्येष्ठभ्राताऽरिसिंहो विशेषत इदानीं राजकुले त्वन्मल्लविजयोदतेन त्वयि

द्विगुणितद्वेषो निद्रितस्य तव शयनागारमग्निसात्कर्तुं निश्चितवान् । तस्मात् क्षिप्रमेनं प्रदेशं परित्यज्य स्थलान्तरगमनमुचितमिव प्रतिभातीति भवंतं विज्ञापयामि।" सुदामाह्वयोयं वृद्धभृत्यस्सुनदनस्य निस्स्वतां ज्ञात्वा आत्मीयं किंचिद्द्रविणजातं तस्योपनीयेद प्राह । "स्वामिन् ! चिरं तव पितुस्सेवयाऽधिगतं धनं किंचिदस्ति मन्निकटे । वार्धके समुपस्थिते जरावैक्लब्येन ममांगानि कर्मदक्षता त्यजंति । तदाऽत्मपरिपोषणायापद्धनत्वेन परिकल्प्य कचिन्निक्षिप्तवानस्मि । तदिदं पंचशतपरिमाणं सुवर्णं । एतत्सर्वमहं ते ददामि । गृहाणैतत् । मामपि तव दास्ये स्थापय । अह तव किंकरो भवानि । अहं वर्षीयानिव बहिः प्रतीयमानोपि सर्वाणि कार्याणि युवेव कर्तुं पटुरस्मि ।" तच्छ्रुत्वा सुनंदन एवमाह । " आर्य ! सुदामन् कृतज्ञोसि । त्वय्येव दृश्यते प्राचीनमर्यादा । एतत्कालिकजना इव न भवान्कपटसौहृदः । एहि आवामुभावेकेत्र गच्छावः । यौवनसंपादितस्य तव धनस्य व्ययात्प्रागेव आवयोरुभयोर्देहयात्रासिद्ध्यर्थं पर्याप्तं धनमहं संपादयेयम् ।" एवमालोच्य तावुभौ स्वामिभृत्यावेकत्र प्रस्थितौ । इति कर्तव्यतामूढौ महांत पन्थानं समतिक्रम्याल्पैरेवाहोभिस्तदेवार्दनारण्यं जग्मतुः । यत्राहाराभावाज्जनिमीढालयिनीभ्यामनुभूतचरामेव दुर्दशा तावप्यनुभूतवन्तौ । कंचिन्मनुष्यावसथमन्विष्यन्तावितस्ततश्चिरं विचेरतुः । यावत्

क्षुत्पिपासाभ्यामर्दितौ कंठगतप्राणौ संजातौ तावदन्विष्यापि न मनुष्योचितप्रदेशं ददृशतुः । तत स्सुदामा एवमाह । "स्वामिन्नध्वपरिश्रमेण निर्यान्तीव मे प्राणाः । पदात्पदमपि गंतुं न शक्नोमि ।" इत्युक्त्वा तत्प्रदेशमेवात्मनः पितृकाननं मन्यमानस्सर्वांगस्पृष्टभूतलो भूमावशयिष्ट । ततस्सुनंदनोऽन्त्यावस्थामापन्नं तं चिरंतनभृत्यं बाहुभ्यामादाय कस्यचिद्रमणीतरोरधश्छायायां निधायैवमाह । सुदामन् ! क्षणमात्रमत्र दुस्सहायासखिन्नमात्मानं विश्रामय । मरणकथां माकार्षीः। तत स्सुनंदन आहारार्थमितस्ततोऽन्विष्यन् दैवयोगेन राजनिवासभूतमरण्यैकभागं प्राप । प्रभावतीपिता स राजा सद्यएव मित्रवर्गेण सहशाद्वले निषण्णो भोक्तुमुद्यतः । अत्रांतरे सुनंदनो भोक्तुमुद्यतं तं दृष्ट्वा बुभुक्षापीडया प्राणान् धारयितुमशक्तो जीविताशानिरपेक्षो खड्गमाकृष्य तेषां पुरतः स्थितमन्नं बलादाहर्तुकाम इदमाह । भोः क्षमस्व । मया भक्षणीयं तन्माजक्षीरिति । राजा प्राह । किं भवान् दुर्गतः एवं विधं साहसं कर्तुमुद्यतोसि । अहोस्विन्मर्यादानभिज्ञः । असभ्योसि ।

सुनंदनः—आर्य ! अहं क्षुधार्तः । एवं कर्तुं व्यवसितोस्मि ।

एवं वादिनं सुनंदनं राजा स्वागतेनाभिनंद्य "आर्य ! अस्माभिस्सह भोक्तुमितो निषीद" इत्यनुजग्राह । तथा विनय-

मधुरं भाषमाणं तं राजानं दृष्ट्वा अन्नार्थिन आत्मनः पारुष्येण ह्रेपितस्स्वापराधक्षमां प्रार्थयमानस्तस्य पादयोर्निपत्यैवं जगाद । आर्य ! मूर्खस्य ममापराधं क्षंतुमर्हसि । आरण्यकानि सर्वाणि सत्वानि क्रूराणि निर्दयानीति मत्वा प्रथमं तथाविधपारुष्येणाहं भवंतं धर्षितवानस्मि । अस्मिन्नरण्ये स्थित्वा शनैः कालं यापयंतो यूयं यादृशस्तादृशो वा भवत । यदि कदाचिदपि यूयं बुद्धिमन्तः यदि कदाचिदपि कस्यचिन्निर्याणदशासाक्षिणः यदि कदाचिदप्युत्सवेषु निमंत्रिताः यदि कदाचिदपि दयार्द्राः यूयं नेत्राभ्यामश्रु मुंचथ । परेषु दुःखितेषु दयाप्रदर्शनं वा जानीथ । इदानीं मत्परिदेवनैर्जातकारुण्यास्सन्तो मयि मनुष्योचित दाक्षिण्य दर्शयत । तच्छ्रुत्वा राजाब्रवीत् । "त्वदुक्तनीत्या सत्यं वयमेकदा भाग्यदशापन्ना एव । सर्वप्राणिभयंकरेऽस्मिन्नरण्ये इदानीं वसंतोपि पुरा महानगरीस्थितमनोज्ञसौधेष्वावात्साम । प्रेतनिर्हरणसमये पूजागृहनादितघंटारवैरसकृदामंत्रितास्स्म । अस्माभिर्बहवो महोत्सवा अध्यक्षीकृताः परव्यसनदुःखिता वयमनल्पं बाष्पमुत्सृष्टवंतः । तस्मादस्मास्वनुग्रहबुद्ध्या आसनपरिग्रहं कुरु । यथाभिलषितमस्माभिः क्रियमाणमतिथिसत्कारं स्वीकुरु । यत्ते रोचते यदस्मास्वायत्तं तत्सर्वं भवदीयमित्यवेहि ।

सुनंदनः—आर्याः ! अस्ति कश्चिद्वृद्धो मदनुयात्रिको यस्तपस्वी मयि निर्व्याजभक्त्या मामनुयच्छन्नियन्तं दूराध्वानमागतः जरावैक्लव्यसहकृताध्वपरिश्रमेण पीडितः क्षुत्परीतस्स्थातुमशक्तो मया वृक्षाधः प्रदेशे शायितः अस्मिन्निर्जने वने यंकंचिन्मनुष्यनिवासमन्विष्यता मया मद्भाग्यवशादार्यमिश्रा अत्र दृष्टाः । भवद्भिरनुज्ञातस्तमिहानेतुमिच्छामि ।

राजा—शीघ्रं गत्वा तमत्रानय । आत्वन्निवर्तनं वयं प्रतिपालयंतः स्थास्यामः ।

ततस्सुनंदनो निजशावकायाहारमुपनेत्री मृगीव द्रुततरं प्रधाव्य तं सुदामानं स्कन्धेन वहन् तत् क्षणमेवागतः ।

राजा—आर्य ! त्वद्भारमवरोपय ।

ततस्स राजा तं वृद्धमभोजयत् । सोप्यचिरेणैव प्रत्युज्जीवितः । स्वास्थ्यं गमितः ।

अथ स राजा "को भवानिति" तं सुनंदनं पप्रच्छ । चिरन्तनप्रियसुहृदो जयसिंहस्य पुत्र इति तं ज्ञात्वा स्वरक्षणे निदधे । एवं सुनंदनस्तद्भृत्यश्च राज्ञा सह तस्मिन्नेव कानने सुखमूषतुः ।

जनिमीढालयिन्योस्तत्रागतयोर्दीर्घकालेऽनतिक्रांते सुनंदनोपि तदरण्यमाजगाम । पूर्वोक्तरीत्या तौ गोपकुटीरमेकं चिक्रयतुः ।

जनिमीढालयिन्यौ प्रत्यरण्यवृक्षमुत्कीर्णानि प्रभावतीनामाक्षराणि लिखितानि प्रभावतीनामाकितानि शृंगारगीतानि च दृष्ट्वा परं विस्मयाविष्टौ बभूवतुः । कथमिदमत्र सभाव्यत इति चिंतयंतौ तावटवीमध्ये सुनंदनं ददृशतुः । प्रभावतीदत्तमुक्तावळी च तत्कंठे समदृश्यत । सुनंदनो जनिमीढवेषधारिणीं प्रभावतीं प्रत्यभिज्ञातुं न शशाक । सा सकृद्दृष्टापि स्वदाक्षिण्यप्रह्वीभावाभ्या तन्मनः प्रविश्य यथाऽरण्यवृक्षवल्कलेषु अस्या नाम मुद्रयन् तत्सौंदर्यवर्णनपराणि तद्गोत्राकितानि गीतानि विरच्य गायन् । यथाकाळं स निनाय तथा तन्मन आचकर्ष । सुनंदनोप्यस्य गोपयूनोस्सविलासाकारेणातिमात्रं प्रीतो जनिमीढेनासकृत्सबभाषे । इयमाकृतिः प्रियायाः प्रभावत्या आकृत्या संवदत्यपि तद्गाभीर्यं न विद्यत इत्यमन्यत । यतोयं जनिमीढस्स्वचेष्टासु बाल्ययौवनवयोमध्यस्थतरुणस्य यादृशं प्रागल्भ्यं तादृश प्रागल्भ्यं धाष्ट्यं चादर्शयत् एकदा महतीं रसिकता दर्शयन् कंचित्कामुकमुद्दिश्य भाषमाणोयं जनिमीढस्सुनंदनमेवमाह । आर्य ! अज्ञातनामधेयः कश्चिदस्मदटवीमाहिंडमानः प्रभावतीनामाक्षरमुद्रणेन बालवृक्षान् दूषयति । तरुशाखाग्रपत्राणि गेयाधिष्ठितानि करोति । प्रभावतीगुणकथनपराः करुणरसप्रधाना गीतीः गोपकुटीरेषु निदधाति । एतत् सर्वं प्रभा-

वतीगुणवर्णनपरतयोपक्रियते । यद्यहं तं कामुकं जानीयां तदा तदनुरागोपक्रमपरं कंचिदुपायमुपदेक्ष्यामि ।

ततस्सुनंदनो जनिमीढमेवमाह । त्वयोक्तस्सकामुकोऽहमेव । इत्यभ्युपगम्य तदुक्तं तदनुरागप्रतीकारं पप्रच्छ जनिमीढेन चिंतितोऽनुरागप्रतीकारोपायोऽयमेव । यत्प्रत्यहं सुनंदनेन तेषां निवासभूतं कुटीरं प्रत्यागंतव्यमिति ततो जनिमीढ एवमाह । अहं प्रभावतीवदात्मानं दर्शयामि । त्वं तावत्प्रभावतीमिव मामभ्यर्थय यावत्कामेन ह्रेपितो भवसि । तावदहं प्रियेषु स्वैरिणीनां विलक्षता गीतीस्ते प्रदर्शयितुमनुक्रमिष्ये । युष्मदनुरागं प्रतिकर्तुं मया चिंतित उपायोयमिति । सुनंदन एतन्नातीव श्रद्दधे । तथापि प्रत्यहं जानिमीढस्य गृहं गंतुं परिहासोपासनं कर्तुं चानुमेने । यथानुमतं सुनंदनः प्रतिदिनं जनिमीढालयिन्यौ द्रष्टुं तन्मंदिरं जगाम । गोपं जनिमीढं स्वप्रियां प्रभावतीं चक्रे । प्रायशो लोके विवाहात्प्राक्कन्यानां प्रार्थयितारो विलासिनो युवानो वधूमनोरंजनार्थं यानि चाटुवाक्यानि प्रयुंजते तान्यन्वहं सुनंदनस्तत्सन्निधौ बभाषे । जनिमीढदृष्टेनानेनोपायेन सुनंदनस्य प्रभावतीगतानुरागो लेशतोपि चिकित्सित इव नाबभौ ।

तत्त्वतोऽयं जनिमीढ एव स्वदयिताप्रभावतीति स्वप्रेप्स्यजानन्सुनंदनएतत्सर्वं परिहास इति मन्वानोऽपि मनोगतनिखि-

लोत्कंठानिवेदकवचनोपन्यासावसरलाभेन जनिमीढस्येव स्वचापल्यमपि भृशं समतर्पयत् । एतास्सर्वा अनुरागवाच उचितं जनं लक्षीकृत्यैव प्रवृत्ता इति परिहासरहस्यं ज्ञात्वा संतुतोष ।

एवं सुनंदनस्यैतयोस्संवासे बहुकालस्सुखमपययौ । सौशील्यवत्यालयिनी जनिमीढस्य सुनंदनमैत्री सुखप्रदाभूदिति ज्ञात्वा तस्य स्वेच्छावृत्तिमन्वमोदत परिहासप्रार्थनाया व्यावृत्ता आसीत् । सुनंदनमुखात्परिज्ञातनिवासस्य राज्ञः पितुः पुरत आत्मानं प्रभावतीति प्रकाश्यतामिति जनिमीढ बोधयितुमप्यनास्थापराभूत् ।

अथैकदा राजा नयनविषयीभूतं जनिमीढमाभाष्य तदन्वयनामनी पप्रच्छ । भवानिवाहमपि सद्वंशजातएवास्मीति वदंतं तं दृष्ट्वा राजा स्मितमकरोत्। यतस्सचारुदर्शनो गोपयुवा राजवंशोत्पन्न इति शंका तस्य राज्ञो मनसि नोदियाय । ततस्स युवा राज्ञे स्वरहस्यमुद्घाटयितुमनिच्छन् तूष्णीं स्थितः ।

अथैकदा प्रत्यूषसमय उत्थाय सुनदनो निर्वर्तितकाल्यकृत्यो यथा पूर्वं जनिमीढदर्शनाय गच्छन् मध्येमार्गं कालाहिभोगवेष्टितकंठं भूतलमधिशय्य निद्राणं कंचित्पुरुषमद्राक्षीत् । प्रत्यासीदंतं सुनंदनं दृष्ट्वा सदंदशूको गुल्मान्तरितश्शनैरपासर्पत्। ततस्सुनंदनो नेदिष्ठो भूत्वा सुप्तं मृतं वा सिंहानभक्षयंतीति ज्ञातवत्तया मार्जालजागरूकतामवलंब्य निद्रितस्यास्य प्रबोधावसरं

प्रतीक्षमाणस्तदुपरिपतनोद्यता नतशिरोधरामेकां सिंहीमपश्यत् । सर्पपंचाननोत्थाद्विपद्द्वयादेनं निस्तारयितुं दैवप्रेषित इवागतस्तत्र सुनन्दनः । समीपं गत्वा सुनंदनेन तन्मुखे सम्यक्परीक्षिते पूर्वमेकदा तमग्निना दग्धुं यः प्रायतत सएवायमरिसिंहस्तस्य ज्येष्ठभ्राता । पूर्ववैरस्मरणेन कोपोद्दीपितमानसस्सुनंदनो भ्रातरं श्वापदाहाराय परित्यक्तुं प्रथममिच्छन्नपि पश्चाद्भ्रातृवात्सल्य-सौशील्याभ्यां प्रशमितकोपोद्रेकः कृपाणमाकृष्य सिंहीं द्विधा खंडितवान् । अपितु सिंहीवधात् पूर्वं तस्या निशातनखकुलिशै-र्विदारितैकबाहुरभूत् ।

सुनंदने सिंह्या युद्ध्यति सति प्रबुद्धोऽरिसिंहो मया पुरा विप्रकृतो मदनुजस्सुनंदन एवेदानीं स्वप्राणव्ययमप्यंगी-कृत्य मृत्युमुखान्मां निरमोचयदिति ज्ञात्वा पश्चात्तापसंयुक्तो लज्जितोऽभूत् । अथ तत्पादयोर्निपत्याश्रूणि विमुंचन्नात्मकृतान्स-र्वानपराधान् क्षंतुं तमभ्यर्थितवान् । सुनंदनोपि जातानुशयं भ्रातरं वीक्ष्य प्रमुदितस्तं चक्षमे तावन्योन्यं परिषस्वजाते । अरिसिंहो भ्रातृजिघांसयैवात्रागतोपि प्राचीनदुर्बुद्धिं विहाय ततः प्रभृत्यनुजे वास्तवीं भ्रातृप्रीतिमुवाह ।

सिंहप्रहारक्षतबाहुर्बहुळरक्तक्षरणात्सुनन्दनो बलहानिम-वाप्य जनिंमीढं द्रष्टुं स्वयं गंतुमक्षमो मय्यापतितमुपप्लवं तस्मै निवेदयेति" भ्रातरमादिदेश ।

अथ सुनंदनभ्राता अरिसिंहस्तथेत्यंगीकृत्य जनिमीढालयिन्यावुपगम्य सुनंदनस्य सिंहेन प्रवृत्तं घोरसंग्रामं ईश्वरानुग्रहेणात्मनोविपद्विमोचनमित्येतत्सर्वं वृत्तांतं ताभ्यां न्यवेदयत्। कथाते "अहं सुनंदनस्य ज्येष्ठसोदरोऽस्मि। तस्मिन्नहं पूर्वमात्सर्यमुत्सृज्य प्रीत्यावर्ते।" इत्यवदत्।

अरिसिंहो भ्रातरि स्वकृतापराधेभ्योयं शोकं प्रकाशितवान्सशोक आलयिन्या हृदि तथा गाढं लब्धपदमासीद्यथा तद्वार्ताश्रवणसमनंतरमेव तस्मिन्नन्वरज्यत्। निजवैक्लव्यनिवेदनेन जातानुकंपामिव तां ज्ञात्वाऽरिसिंहोपि तस्यामनुरक्तोऽभूत्। एवमरिसिंहालयिन्योर्द्वयलक्षितगतावनुरागे आक्रामति सति अरिसिंहस्सुनंदनं सिंहेन क्षतं जनिमीढाय न्यवेदयत्। स एतद्वार्ताश्रवणेन दुःखाकुलमानसो मूर्छितो न्यपतत्। पुनर्लब्धसंज्ञो भावनापरिकल्पितप्रभावती शीलेनाहमिमां कपटमूर्छां गतोस्मीत्यभिनीयारिसिंहमेवमाह। ब्रूहि युष्मद्भ्रातरं कथमहं आत्मानं मूर्छितमिवादर्शयम्। तथाप्यरिसिंहस्तस्य मुखवैवर्ण्येन ससत्यं मूर्छित इति मत्वा तस्य यूनो दौर्बल्येन विस्मित इदमाह। यदि त्वं मूर्छाभिनयमकरोस्तर्हि स्वस्थचित्तो भव। आत्मानं पुरुषमिव दर्शय।

जनिमीढः—आर्य! तथैव करिष्यामि। अपितु मया तत्त्वतो स्त्रिया भवितव्यम्। एवमरिसिंहश्चिरमत्रैवैताभ्यां सह

भाषमाण आसीत् । अंते गृहं प्रति निवृत्त्यसोदरेण समागतस्सर्वमुदन्तजातं तस्मायाचख्या वित्थम् । अरिसिंहः । "भ्रातः ! सुनंदनो भुजे सिंहेन गाढं प्रहृत इति मत्तश्श्रुत्वा जनिमीढो मूर्छामवाप । प्रथमदर्शनसमयेपि तस्य स्वसा आलयिनी त्वद्दुरवस्थां मयि निवेदयति सति मदालापं सावधानं श्रुत्वा मम चक्षुः प्रीतिमवर्धयत् । अहमपि तस्यामनुरक्तोस्मि । तस्मात्तामवश्यं परिणीयाहमपि गोपो भूत्वा तया सहात्रैवारण्ये निवसामि। ततो मम दायं विभज्य देहीति।" सुनंदनः । महान्मे परितोषः। ममाप्येतत्सम्मतमेव । श्वः प्रभाते युष्मत्परिणयोत्सवो निर्वर्तनीयः । सपरिवारं राजानमामंत्रयामि । त्वत्पाणिग्रहणमंगीकर्तुं गोपप्रिया गत्वा अनुनय । इदानीं सा एकाकिनी स्थिता । ततोऽरिसिंह आलयिनीसविधं जगाम । जनिमीढोपि सिंहेन प्रहृतस्य सुनंदनस्यानामयतां ज्ञातुं तदंतिकं गतः । अरिसिंहालयिन्योर्हठात्संभूतमन्योन्यानुरागमुद्दिश्य जनिमीढेन सह भाषमाणस्सुनंदन एवमाह । श्वः प्रभाते परिणयमंगीकर्तुं युष्मत्प्रियां प्रोत्साहयेति मम भ्रातरमुपादिशम् । सोपि तत्सन्निधिं प्रेषितः । अहमपि प्रियां प्रभावतीं परिणेतुं बलवदुत्कंठितोस्मि ।

जनिमीढोप्येतत्संविधानमत्यर्थमभिनंदन्निदमाह । यदि सत्यं सुनंदनस्य प्रभावत्यामनुरागोऽस्ति तर्हि स युवा पूर्णकामोऽ-

स्तु । यतश्श्वः प्रभाते साक्षात्प्रभावतीमेव दर्शयितुमुद्युंजे । तयापि सुनंदनः परिणेतव्यः । जनिमीढ एव प्रभावती भवेदित्यद्भुताभासं कर्तुमतिसुकरमपि जनिमीढो मातुलान् शिक्षितेंद्रजालविद्यामाहात्म्येनाहं प्रभावतीमिहानेतु प्रभवामीति समर्थितवान् ।

प्रभावतीदर्शनोत्कंठितोऽयं सुनंदनो जनिमीढप्रतिश्रुतार्थे सशयालुर्जनिमीढमिदमपृच्छत् । किं त्वं सत्यं ब्रवीषि ।

जनिमीढः—सत्यमेव । जीवितेन शपामि ते । प्रभावतीं श्वः परिणेतुमिच्छसि चेद्वरयोग्यं वेषमादधातु भवान् । विवाहोत्सवदर्शनाय समित्रगणं पार्थिवमपि सन्निधापयतु । अवश्यमागमिष्यत्यत्र प्रभावती ।

अथ परेद्युः प्रातरेवारिसिंह आलयिन्यास्सम्मतिमधिगम्य तया सह राजसन्निधिमियाय । सुनन्दनोऽपि तावन्वयात् । एतद्विवाहद्वयं यथाविध्यनुष्ठातुं सर्वेषु सम्मिळितेषु "अद्याप्येकैव वधूर्दृश्यते । अपरा वधूः कुत आगमिष्यति ? कुत्र वर्तते ?" इति विस्मयवितर्काकुळमानसाः । जनिमीढस्सुनन्दनं परिहसितुं कंचित्कपटप्रबन्धमालोचयतीति बहवो मेनिरे ।

अथ राजा स्वदुहितैवानया विधया विवोढुमानेतव्येति श्रुत्वा प्रतिश्रुतार्थनिर्वहणे स गोपयुवा जनिमीढस्समर्थ

इति " किं त्वमविश्वमीरिति । सुनन्दनमन्वयुंक्त । तदुपरि सुनन्दनेपि " न किमपि वक्तुमहं जाने " इति प्रत्युत्तरं वदति सति जनिमीढः प्रविश्य राजानं वीक्ष्येदमुवाच । राजन् ! सुनन्दनेन पतिवती भवितुं दुहितरमनुजानासि ।

राजा—यदि मम राज्यमप्यस्तिचेत्ते न सह तां जामात्रे दातुमिच्छामि । सुनन्दनाभिमुखो भूत्वा " जानिमीढएव माह। यदि सा इहानेष्यते किं ता नून परिणेष्यसि ।

सुनन्दनः—ममापि स एव मनोरथः ।

अथ जनिमीढालयिन्यौ बहिर्जग्मतुः । जनिर्मीढश्चिराद्धृतं पुरुषवेषमवरोप्य यथोचितं यथापूर्वं वधूनेपथ्यमाधायेन्द्रजालविद्यासामर्थ्यं विनैव प्रभावती संवृत्ता । आलयिन्यपि जानपदवधूपरिधानमुन्मुच्य राजावरोधवधूचितानि महार्हाणि वासास्याभरणानि चामोच्य सुकरं सुशीलापरिणता । जनिमीढालयिन्योर्गृहगमनसमये राजा सुनन्दनं दृष्ट्वा " अयं गोपयुवा रूपसंपदा मम दुहितरं प्रभावतीमनुहरतीति मन्ये । किं भवान्मन्यसे " इत्यवदत् । तयोराकारसंवादो मयापि लक्षित इति सुनन्दनः प्रत्यवोचत् ।

अथ विवाहदर्शनार्थं समवेतेषु सर्वेषु कथं वेदं परिणमेदिति निभृतं चिन्तयत्सु परमाश्चर्यमावहन्त्यौ सुशीलाप्रभावत्यौ स्वस्वरूपेण विवाहमण्टपं प्रविविशतुः । इन्द्रजालविद्या-

प्रभावेनैवाहमत्रानीतास्मीति वदन्ती प्रभावती पितुः पादयो-र्निपत्य कुशलं पप्रच्छ। हठाद्दृष्टिपथं गता तामवलोक्य तत्र-त्यास्सर्वे विस्मयोत्फुल्लनयना इंद्रजालमाहात्म्येनैवं संवृत्तमिति निश्चिक्युः। ततः प्रभावती बाल्यचापल्यं परित्यज्य आत्मनो विवासनप्रकारं गोपवेषधारणेनारण्ये निवासस्सुशीलायास्तदनु-यानं चेत्येतत्सर्वं वृत्तातं पित्रे निवेदयामास।

राजा—तस्याः परिणयाय स्वदत्तपूर्वामनुमतिमिदानीं दृढीचकार। सुशीलाप्रभावत्योः पाणी यथाक्रमं युगपदेवारि-म्हिसुनंदनाभ्या जगृहाते। उचितलौकिकबाह्यशोभाडंबरवर्जि-तोपि तेषा विवाहोत्सवदिवसस्तस्मिन्नरण्ये सर्वेषां प्रहर्षजनको वभूव। नूतनवधूवरसहितेषु तत्र स्थितेषु सर्वेषु वृक्षच्छायासु निषीद्य मृष्टान्नानि भक्षयत्सु दुहितृसमागमेन जामातृलाभेन च राज्ञि आनंदसागरो परिप्लवमाने प्रदरापहृतं राज्यं पुनाराज्ञे प्रत्यर्पितमिति संतोषवार्तां तस्मै निवेदयितुं तदनुजेन विसृष्टो दूतस्संप्राप्तः।

राज्यापहारी अस्य भ्राता प्रदरस्स्वदुहितुस्सुशीलाया अरण्यगमनेन भृशं क्रुद्धः प्रोषितं ज्येष्ठभ्रातरं द्रष्टुं बहवस्सत्पु-रुषा अर्देनारण्यमनुदिनं गच्छंतीति श्रुत्वा "विपद्गतोप्यरण्यं प्रपन्नोप्ययं वराकः पौरैः पूज्यत इत्यनल्पाभ्यसूयः प्रदरो महतीं चमूमादाय सपरिवारं भ्रातरं निहन्तुमर्देनारण्यं प्रतस्थे। अघटि-तघटनापटीयस ईश्वरसंकल्पादस्य दुरात्मनः पापसंकल्पः विप-

र्यस्तः । यतस्तस्मिन्नर्दनारण्यपरिसरमुपसर्पति सति कंचित्तपोधनमद्राक्षीत् । स तेन सह चिरं संलपन्नास्त । तत्संवादे ससारस्यासारतां विभवस्य नश्वरतां दारपुत्रादिसंगतेस्सौदामिनीस्फुरणचंचलतां सत्पुरुषसंवासमाहात्म्यं च तेन चिरं बोधितश्चिकीर्षिताद्भ्रातृवधरूपपापादकाडे विनिवर्तितमानसो बभूव । ततः प्रभृति जातानुशयः अन्यायाक्रांतं राज्यं परित्यज्य वने वसन्नायुश्शेष मीश्वराराधनेन यापयितुं निश्चिकाय । बलादपहृतं भ्रातृराज्यं तस्मै प्रत्यर्प्य विपद्बंधूनां भ्रातृनुजीविना भक्तानां द्रविणजातं मदपहृतं तेषां पुनर्ददामीति निश्चित्य प्रथमं दूतं प्राहिणोत् ।

अतर्कितोपनतैषा हर्षवार्ता विवाहमहोत्सवसमये प्राप्ततया तत्र त्यानां सर्वेषां महान्तं प्रहर्षमजनयत् । अनेनाभ्युदयेन सुशीलाप्रभावतीमभिननंद । एवं प्रभावती पुनः पितृराज्याधिगमेन तद्राज्यस्य स्वामिनी बभूव । एवं तयोर्भगिन्योरसूयारहिता परस्परप्रीतिरवर्धत ।

निजविभवं परित्यज्यदारसुतादिकमनादृत्य निजसौख्यमविगणय्य तेन सह वनमनुयातान्विधेयाननुजीविनस्सत्कर्तुं राज्ञा अवसरो लब्धः । तदनुव्रताएते तेन सहानुभूतविपद्दशा अपि चरमे प्रमोदनिर्भरानवोन्मिषाद्विभवानि निजमंदिराणि प्राप्य स्वजनैस्संगताः पर हर्षं लेभिरे ।

यथेच्छसि समाप्तम्

---

## 14. Two gentlemen of Verona

### (विरोचननगरीसुजनद्वयं.)



Dramatis Personæ

1 Verona = विरोचननगरी.

2 Valentine = सुमतिः.

3 Proteus = कामपालः.

4 Julia = मालिनी.

5 Lucetta = लासिता, मालिन्याश्चेटी.

6. Milan = महिळानगरी.

7 Sylvia = शीलवती.

8. Robinhood = रभसः.

9. Theerio = तूर्यः.

10 Mantua = मन्थानपुरी.

11. Eglamour = अग्र्यरोमा.

# ॥ विरोचननगरीसुजनद्वयम् ॥

## (TWO GENTLEMEN OF VERONA)

आसीन्निजविभवाधः कृतराजराजनगरी विरोचननगरी नाम पुरी। तत्र प्रतिवसतिस्म सुमतिकामपालनामानौ द्वौ युवानौ। तयोश्चिरात्प्रावर्तत गाढतमाविच्छिन्नमैत्री। तावुभावेकत्र विद्याभ्यासमकुरुताम्। स्वस्वकार्यनिर्वर्तनानंतरं लब्धक्षणौ परस्परसंलापेन विश्रान्तिवेळा निन्यतुः। यदा कदा वा कामपालो मित्रपार्श्वं विहाय तन्नगरवास्तव्या निजवल्लभी कृतां मालिनीनाम्नीं कांचित्प्रमदां द्रष्टुं गच्छति स्म। प्रियादर्शनाय कामपालस्य गतागतानि तस्यानुरागप्रकाशनं च सुमतिर्नान्वमोदत। अस्मिन्नेकस्मिन्विषयएव तौ भिन्नौ। यतस्सुमतिर्मदनव्यापारपराङ्मुखतया सर्वदा प्रियसुहृदा वर्ण्यमाना मालिनीसंबंधिनीः कथाश्श्रोतुं जातनिर्वेदस्तं परिजहास। मृदुवचोभिरेव कामवृत्तिं निनिंद। वनितानुरागपरवशस्य तव सभयोत्कंठावस्थायाममेदं सुखस्वेच्छाजीवनमेवातिमात्र सुखकरमिति समर्थयस्तादृगिंद्रियचापल्येनास्पदीक्रियमाणमात्मानं न कदाचिदिच्छामीत्यसकृज्जगाद।

अथैवं गच्छति काले एकदा सुमतिः प्रभातसमये कामपालमुपगम्य "महिळापुरीं जिगमिषोर्मम प्रवासदौर्म-

नस्यं त्वया कंचित्कालं सोढव्यम्" इत्यकथयत्। सोपि मित्रविरहमसहमानस्तं प्रस्थानान्निवारयितुं बह्वीरुपपत्तीः परिकल्प्य चिरं वादमकरोत् तथापि सुमतिस्तदुक्तीस्तिरस्कृत्य एवमाह । "वयस्य! कामपाल! मा मोपरोत्सीः । अनुजानीहि मां देशांतरगमनाय । तुन्दपरिमृजस्सन्गृहावस्थानेन मम यौवनं जरयितुं नेच्छामि । गृहे निद्रालवो यूनः प्रायशस्सर्वदा परिहासकथासक्ता वृथाकालं यापयंति । मालीनीमधुरनयनांतावलोकनवागुरासु हरिणायमानचित्तवृत्तिर्न भवसि चेद्विदेशीयाद्भुतवस्त्ववलोकनकुतूहलि चेत्तव मनो मामनुगंतु भवन्तं प्रार्थये "कामिन्यनुरागलंपटस्सन्गृहेवतिष्ठसि चेत्प्रकाम सफलकामो भव"। इति परस्परं प्रीतिवचनानि व्यतिहरंतौ तावन्योन्यं विजहतुः ।

कामपालः—"वयस्य सुमते शिवास्ते पन्थानस्संतु । विदेशे यत्किंचिच्चित्ताकर्षकं वस्तु दृष्टं चेन्मामपि स्मर । त्वदनुभूयमानसौख्ये मामप्यंशभाजं गणयेति"। प्रियायै मालिन्यै अनंगलेखं लिखित्वा चेट्या प्रेषयितुं समुद्यतं मित्रमापृच्छ्य तस्मिन् दिनएव सुमतिर्महिळानगरीं प्रतस्थे । यथा कामपालस्तस्यामनुरक्तस्सापि तस्मिंस्तथानुरक्ता । तथापि सा आत्मनोऽत्युदारप्रकृतितया सुलभेन परस्य वशं वदा भवितुमभिजातकन्यकानामनर्हमित्यमन्यत । तस्मात्सा कामपालस्य रागवृत्तिम

जानतीव बहिर्दर्शयती तत्प्रणयप्रार्थनांगीकारे तस्याधिकसंतापं जनयामास । स्वचेट्या लासितयाऽनीतां कामपालस्य पत्रिकां न प्रतिजग्राह । प्रत्युत तत्सकाशाल्लेखानयनाद्धेतोस्तां चेटीं विनिद्य स्वगृहाद्बहिर्गंतुमादिक्षत् । तथापि पत्रिकागतं वृत्तांतं ज्ञातु-कामा तां पुनश्शब्दापयामास । तस्यामागतायामेवमाह सा । लासिते! इदानीं कियती वेला? । ततो लासिता "इयं वेलाधिगमादधिकतरं पत्रिका वाचयितुं अभिलषितवती" इति संलक्ष्य तस्याः प्रश्नस्योत्तरमदत्वा निरस्ता पत्रिकां पुनरदात् । तदुपरि मालिनी "इय मे भुजिष्या मन्मनोगतं परीक्षितुका-मेवैवं विधं स्वातंत्र्यमवलंबते" इति सुसंक्रुद्धा तत्पत्रिकामा-दाय खंडशो विदार्य भूतलेऽवाकिरत् । पुनस्ता गृहादपसारया-मास । अथ बहिर्गच्छन्ती लासिता विदारितपत्रिकाशकलानि भूमौ प्रकीर्णानि संचेतुमुपचक्रमे । तत्पत्रिकाशकलनाशमनि-च्छन्ती मालिनी कृतककोपेनैव मवोचत् । "त्वमपेहि । तानि तत्रैव संतु । मा पुनः प्रकोपयितुं तान्यंगुळीभिः परामृश-सीति" । अथ मालिनी पत्रिका शकलानि यथाशक्ति स्वयं-समाहर्तुमारेभे । प्रथमं यथाक्रमं समाहृतशकलेषु सा एतान्य-क्षराण्यपश्यत् । "कामशरव्रणितः कामपाल इति" ततः क्रमेण संचितेभ्यश्शकलेभ्यस्तस्यानुरागानिवेदकान्यन्यानि वचा-स्युपलभ्य तदर्थं दीर्घं मनासि चिंतयित्वा विलपंती व्रणितं जनं

पर्यंकिकायामिव तं जनं मम हृदयपुंडरीके निवेशयामीति तेभ्यश्शकलेभ्यः प्रतिश्रुत्य तद्व्रणविरोपणायैव तान्यसकृच्चुचुंब ।

एवं सा शैशवचापल्यमवलंब्य चिरं तैश्शकलैस्संलपन्ती आसीत् । ततस्सर्वाणि शकलानि सन्चित्य पत्रिकागतं कृत्स्नं वृत्तान्तमुपलब्धुमशक्ता तादृशमधुरवचनोपन्यासायाः पत्रिकाया विध्वंसने आत्मनोऽविमृश्यकारित्वमकृतवेदित्वं च मुहुर्विनिन्दन्ती दूयमानमानसा ततोऽधिकतरानुरागसूचकपदप्रयोगबहुळां पत्रिकामेकां कामपालाय लिलेख कामपालस्स्वलेखस्यानुकूलप्रत्युत्तरं दधतीमेना पत्रिका वीक्ष्य भृशं तुतोष । तां वाचयन्नित्थं जगर्ज । "अहो मधुरोऽस्या भावबन्धः । अहो मधुरो वचनोपन्यासः । मधुर मे जीवितं । एवमानन्दमहोदधौ मज्जनोन्मज्जनानि कुर्वाणस्सः । "पुत्र ! किमेतद्वाचयसि" इति पृच्छता पित्रा मध्ये प्रतिबद्ध आसीत् । कामपालः । तात ! महिळापुरं गतेन मत्प्रियवयस्येन सुमतिना प्रेषितेयं पत्रिका ।

पिता । सकृद्देहि मे तत्पत्रं । तत्रत्योदन्तमहमपि वाचयामि ।

कामपालः । भय नाटयन् । तात ! न कोऽप्यत्र वार्ताविशेषः । मम मित्रमेवं लिखति । "अहं महिळापुराधीशितुः प्रीतिपात्रमासम् स नित्यं मय्यभ्युपपत्तिं दर्शयति । त्वमपि ममर्धेस्सहभागी भवेत्यभिलषामी"ति ।

पिता। पुत्र ! कथं भवान्मन्यते तत्प्रार्थनाम् ।

कामपालः—तात ! भवच्चित्तानुवर्तनपरोऽयं जनः । न तु मित्रप्रार्थनापराधीनः ।

अत्रान्तरे कामपालस्य पिता केनचिदाप्तेन सह एतत्प्रकृतविषयमेव भाषमाणस्तेनैव मुक्तः । "आर्य ! किं तव पुत्रं प्राप्तयौवनं गृहएवावस्थातुमनुमन्यसे । इतरे बहवो निजपुत्रान् तत्सवयसो गौरवसंपादनाय विदेशं प्रेषयन्ति । केचिदैश्वर्यकामास्संग्रामेभ्यो ययुः । अपरे समुद्रेद्वविष्ठानन्तरीपान्प्रकाशयितुं जग्मुः । केचन विदेशस्थितपाठशालासु विद्याधिगमाय प्रतस्थिरे । पश्य त्वत्पुत्रमित्रं सुमतिरपि महिळापुराधिपस्य सभां जगाम । भवत्सूनुरपि पूर्वोक्तेषु यत्किंचिदपि कर्तुं क्षम एव । तस्मात्स वार्धके सुखं जीवितुमिच्छति चेत्सर्वकर्मक्षमे यौवने तस्य गृहावस्थितिर्नश्रेयस्करी"

अयमाप्तोपदेशोऽवश्यं कर्तव्य इति कामपालस्य पिता अमंस्त । सुमतिप्रार्थनानुरोधेन स्वपुत्रं महिळानगरं प्रेषयितुं निरचिन्वत । आत्मन आकस्मिकपरिच्छेदहेतुमविवृण्वन्स्वतनूजे जनकोचिताधिकारं विनियुंजन् सएव मब्रवीत् । मत्सङ्कल्पोऽपि सुमतीच्छामेवानुसरति । एतद्वचनाकर्णनेन विस्मयाविष्टं पुत्रं दृष्ट्वा "वत्स महिळापुराधीशस्य सभाम् कंचित्कालं त्वमाश्रयेरिति मम हठात्कृतामाज्ञां श्रुत्वा विस्मयाकुलो माऽभूः ।

यतो मया यदाज्ञप्तं तत्त्वयावश्यमाचरणीयं । न तत्पर्यनुयोज्यं श्वस्सज्जो भव प्रस्थानाय । विकल्पानि मा वद यतोहमनतिक्रमणीयादेश." इति । निजाज्ञोल्लंघनासहिष्णोर्जनकस्य वचननिषेधादुपयोगो नास्तीति निश्चित्य प्रियानंगलेखा निगूह्य पितर्यसत्यप्रतिपादनरूपापराधादुपस्थितप्रियाविरहेण नितांतं विषण्ण आत्मनः अविमृश्यकारित्व मुहुर्निनिंद ।

अथ मालिनी कामपालस्य दीर्घप्रवासदुःखं मनसि विचिंत्य तस्मिन्पूर्वानादरं तत्याज । तौ परस्परविरहसमाकुलचित्तौ सविषाद परस्परमापृच्छ्य परस्पराविस्मरणार्थं बहून् शपथाश्चक्रतुः । अंगुळीयकविनिमयं चक्रतुः । एवमतिकृच्छ्रेण प्रियाभ्यनुज्ञातः कामपालो मित्रनिवासभूत महिळापुरं प्रतस्थे । कामपालस्य मृषाविज्ञापनानुगुण्येन सुमतिर्महिळेशस्य प्रसादपात्रमभूत् । अथापरो व्यतिकरस्संबभूव । तं कामपालस्स्वप्नेपि नाजानात् । यः कामपाळस्य कामवृत्ति पुरा निनिंद सोपि सुमतिरिदानीं स्वाहंकारहेतुं स्वस्वातंत्र्यं परित्यज्य कामपाल इव कामुक आसीत् । अहं सर्वदा कामविकारशून्य इति प्रगल्भमानस्य सुमतेर्मनसः कयाचिदबलया विकृतिरुदपादीति श्रोतॄणामाश्चर्यमावहत् । महिळापुराधीशस्य दुहिता शीलवत्यभिधाना तद्विकारहेतुरासीत् । सापि तस्मिन्बद्धभावाऽभूत् । तयोः परस्परानुरागं महिळापुराधीशो न विवेद । यतस्स राजा

तस्मिन्कृतप्रसादोप्यनुदिन स्वमन्दिरे आतिथ्यं ग्राहयन्नपि तूर्य-नाम्ने कस्मैचिद्यूने राजवल्लभाय स्वदुहितरं दातुमैच्छत् । सुमतिरिव नासौ विवेकी गुणवान् । ततस्सशीलवत्यै नारोचत ।

अथैकदा एकामिषाभिलाषितयाप्रतिस्पर्धिनावेतौ कुमारौ शीलवतीं द्रष्टु जग्मतुः । सुमतिस्तूर्योक्तानि सर्वाणि वचांसि परिहासेनाक्षिपन् हठात्कुमारीमदिर प्रविष्टेन राज्ञा दृष्टः । प्रियमित्रस्य कामपालस्यागमनवार्तां श्रावितः राजानमिदमुवाच । महाराज ! मम बाल्यमित्रमिमा पुरीमागतः । त द्रष्टुमुत्कंठितोस्मि । कामपालनामासौ मम प्रियसुहृदेतावंत कालमितस्ततः पर्यटनपरोपि मनोज्ञगुणसंपदा शरीरसौष्ठवेन बुद्धिकुशलतया च मामतिशेते । तादृशः काल सुष्टूपयोक्ष्यति चेद्भवादृशा प्रभूणां पूर्णदयापात्रं भवेत् ।

राजा—वत्से शीलवति ! तूर्य ! युवामेव नूतनागतमतिथि सत्कुरुत । राज्ञि एवं ब्रुवति सति कामपालोपि तत्राजगाम । आगतं प्रियमित्रं वीक्ष्य सुमतिस्ससंभ्रममुत्थाय स्वागतं निवेद्य परिष्वज्य कुशलवार्तानुयोगादिना संभाव्य तत्समागमेन परां निर्वृतिं लेभे । शीलवत्यै तं प्रदर्श्य इदमाह । आर्ये ! इममपि मामिव भवत्याः दास्यपदे अभिषेक्तुमनुगृहाण ।

अथ सुमतिकामपालौ शीलवती मापृच्छ्य स्वावसथं गत्वा तत्रैकांतेऽवस्थितौ । तदा सुमतिः कामपालं दृष्ट्वा इदं

पप्रच्छ । "वयस्य कुत आगतोसि । प्रियाविरहखेदमप्यपरिगणय्य कथमेवं ते मनः प्रवासक्लेशसहनाय बद्धश्रद्धमासीत् । अपि कुशलिनी मालिनी । त्वयि कथं वर्तते तस्या अनुरागः ।

कामपालः—वयस्य मत्कामकथाश्रवणेन भवांश्चिरं निर्विण्णः । कामकथा न ते प्रीतिमावहतीति सुष्ठ्वहं जाने ।

सुमतिः—प्रियवयस्य! कामपाल! ससुमतिरिदानीं गतः । अपरस्संवृत्तोस्मि । अहं पुरा मुक्तसंगो यतिरिव कामवृत्तिमद्वेषम् । मन्निदितः काम इदानीं मयि वैरनिर्यातनाय मन्नेत्रेभ्यो निद्रामपजहार । सखे कामपाल! त्रिभुवनैकवीरः खलु कंदर्पः । सर्वलोकमौळिमालाकृताज्ञः । इदानीं मां निवर्तयितुमाप्तोपदेशोनिरर्थकः । दूरं विक्षिप्तोहं तेन । कामएव सकलपुरुषार्थसारतम इति मे निश्चयः । इदानीं श्रृंगाररसं विना नान्यद्रोचते मे । कामकथाप्रसंगेनाहारं निद्रां च परित्यजेयम् । सुमतेर्मनसि रागकृतविक्रियाभ्युपगमः कामपालस्य महान्विजय आसीत् । सुमतिः कामपालं सुहृच्छब्देन व्याहर्तुं नैच्छत् । यतस्ताभ्यामिदानीं स्तूयमानः कुसुमायुधस्तस्य मनः प्रविश्य क्रीडन्नासीत् । एतावंतं कालं निर्व्याजमैत्र्या उदाहरणभूतः कामपालश्शीलवती सकृद्दर्शनेन कपटाशयश्शठश्च संवृत्तः । शीलवतीप्रथमदर्शनेन मालिनीगतानुरागस्सर्वस्वप्रहृष्टपदार्थ इवैकपदे तिरोबभूव । चिरप्रवृद्धसुमतिमैत्र्यपि शीलवती-

चित्ताकर्षणे यतमानं कामपाळं निवारयितु न शशाक । प्रायशस्सत्स्वभावा अपथप्रवृत्तास्संतो यदाचरितुमभ्यस्तास्तदेवायमाचरितुमयतत । मालिनीगतानुरागं परित्यज्य सुमतेः प्रतिस्पर्धीभवनात्प्राग्बहून्संशयानगाहत । अंततः पूर्वानुरागं निरस्य विवर्जितानुशयो नूतनप्रार्थनापरतंत्रोऽभूत् । ततस्सुमतीरहासि शीलवतीकटाक्षसंपादननिमित्तां सर्वां कथां तत्पितूराज्ञे तद्गोपनं कामपालाय कथयित्वा पुनरप्येवमाह । वृद्धस्तत्पिता आवयोर्विवाह नागीकरिष्यतीति नैराश्येनास्या निशायामेव पितृभवन परित्यज्य मया सार्धं मंथानाभिधं नगरमागंतव्यमिति शीलवतीमहं प्रत्यबोधयम् । एका रज्जुविनिर्मितनिश्श्रेणिकां तस्मै प्रदर्श्य अस्या निशि समुपस्थितेन्धकारे पितृसौधस्य वातायनमूर्ध्नो निर्गंतुमियं निश्रेणिका सहायं करिष्यतीति मत्वा तामप्यत्रास्थापयम् ।

अथ कामपालो मित्रस्य सर्वमेतद्रहस्यवृत्तांतं श्रुत्वा राजनिकटं गत्वा राज्ञे निवेदयामीति निरणैषीत् । सुहृच्छद्मांतारतोय रिपुः कामपालस्ता कथा प्रौढरीत्या कथयितुमारेभे । "महाराज मैत्रीधर्ममाश्रित्य देवपादाना पुरतो यत्किंचिन्निगूहनीयमपि मया प्रकाशनीयं । तथापि भवतोऽनुग्रहपात्रेण मादृशेन भृत्यपरमाणुना पुष्कले राजद्रोहकारणे संभवति वृद्धि गत आमय इव नोपेक्षणीय इति मत्वा स्वामिभक्तिबलात्कृतेन मया

किंचिद्विज्ञाप्यते । भवदनुग्रहसंपादनार्थं स्वदेशादत्रागत्य भवत्सभां प्रविष्टो भवत्पादपद्मोपजीवी सुमतिर्भवत्कुमार्यां शीलवत्यां द्रोहमाचरितुं प्रवृत्तः । अस्यां निशायामेव तां बहिर्निर्यापयितुं निश्श्रेणिकादिसाधनमपि सज्जीकृतवान् । श्रुत्वा देवः प्रमाणमिति ।

कामपालो मित्ररहस्यगोपनात्तद्भेदएव वरमिति निश्चित्य स्वामिभक्त्या तथाकृतवानिति राजा तमत्यर्थं प्रशस्य केन चिदुपायेन सुमतेरपराधं तस्मै प्रदर्शयितु विचित्य "एतद्रहस्यं मया ज्ञातमिति सुमतये मानिवेदनीयमिति कामपालमादिदेश ।

एतत्प्रयोजनाय राजा सायं सुमतेरागमनं प्रतिपालयामास । प्रदोषसमये सौधपरिसरं शीघ्रमायांतं तं ददर्श । उत्तरीयातर्निगूढ किमपि वस्तु दृष्ट्वा सैव निश्श्रेणिकेत्यभ्यूहितवान् ।

राजा—तं वीक्ष्य "सुमते कुत इयता वेगेन" इति पप्रच्छ ।

सुमतिः—महाराज ! नकोपि विशेषः । कश्चिद्वार्ताहरो मित्रेभ्यो मल्लिखितानि मत्त आदातुं मां प्रतिपालयन्नास्ते तदिमानि पत्राणि तस्य हस्ते दातुं सत्वरमिहागच्छता मयात्र महाराजो दृष्टः । कामपालेनपित्रे विज्ञापितमनृतभाषितमिव सुमतेरपीदं वचनं मोघमेवाभूत् । तस्मादधिकतरं फलं न प्रासूत ।
राजा । किं तानि पत्राण्यावश्यकानि ।

सुमतिः—न हि न हि । महाराजप्रसादेनाहमत्र सुखं वसामीति मत्पित्रे मम क्षेमोदन्तनिवेदनमात्रान्नाभ्यधिकतरप्रयोजनम् ।

राजा—तथैवास्तु । त्वं तु क्षणमात्रमत्रैव तिष्ठ । कस्मिंश्चिद्विषये त्वा मंत्रं पृच्छामि ।

ततस्स राजा सुमतेरहस्योद्घाटनाय प्रस्तावनामिव कांचिच्चमत्कारगर्भां कथा कथयन्सुमतिमाह । सुमते ! तूर्याय मे दुहितरं दातुमहं निरचिन्वमिति त्वमपि जानासि । अपितु सा भृशमिदानीमविधेया अविनीता मदाज्ञामुल्लघयितुमेवेच्छति । सा मम पितृत्वमात्मनः पुत्रीत्वमपि न लक्ष्यीकरोति । मत्तो न बिभेति । तस्या अनया दुर्विनीत्या तस्या मम प्रीतिर्निरस्ता । प्रत्युत तस्या द्वेष एव जायते । इदानीमहं पुनर्दारपरिग्रहं कर्तुमिच्छामि । सा वराकी यस्य कस्य वा हस्ते पततु तस्या रूपमेव यौतकं भवतु । मां मद्विभवं च सा न गणयति ।

सुमतिरेतत्सर्वं श्रुत्वा किं वा भवेदस्य वचनोपन्यासस्य पर्यवसानमिति वितर्कयन्विस्मित एवमाह । महाराज ! अस्मिन्विषये किं कर्तुं मामाज्ञापयसि ।

राजा—यामहमुद्वोढुमैच्छम् । सा मनोरमा विनीता मितभाषिणी अप्रगल्भा च मम जराप्रलपितानि न गणयति । अपिच वधूप्रार्थनाप्रकारो मत्कालेऽन्य विध आसीत् । इदानीमतीव विपर्यस्तः । वधूप्रार्थनाप्रकारं ममोपदेष्टुं भवंतं प्रार्थये ।

ततस्सुमतिस्तत्कालीनतरुणजनैरनुष्ठीयमानं वधूप्रार्थनाप्रकारं सामान्यतो निरूपितवान् । यः कश्चिद्युवा कस्यांचिदासक्तस्सन् तदनुरागसंपादनाय पारितोषिकप्रेषणमुहुर्दर्शनादिना तां संभावयेदिति तस्मै आचख्यौ ।

राजा—मया सबहुमानं प्रेषितं पारितोषिकं मत्प्रिया नांगीकृतवती। चंद्रलेखेव दिवा न केनापि द्रष्टुं शक्यते। सापि पित्राज्ञया गाढं नियंत्रिता सुमतिः तथा चेत्तां द्रष्टुं नक्तं गच्छतु भवान् ।

राजा—इदानीं स्ववचनाभिप्रायं प्रकटीकरिष्यन् चतुरो राजा इत्थमवोचन् । निशि सर्वदा तत्कपाटं पिहितं भवति ।

तदुपरि सुमतीरज्जुनिर्मितनिश्श्रेणिकासहायेन तन्निशायां राज्ञा तत्प्रियामंदिराभ्यंतर मवश्यं प्रवेष्टव्यमिति मत्वा तत्प्रयोजननिर्वर्तनाय किंचित्साधनमुपकल्पयामीति दैवोपहततया तस्मै प्रतिशुश्राव। मद्धारितसदृशेन वस्त्रेण ता निश्श्रेणिकां प्रच्छाद्य गंतव्यमित्यप्युपदिदेशान्ते । राजा सुमतेरुत्तरीयं बलादाकृष्य कक्षे न केवल निश्श्रेणिकामपितु शीलवतीप्रेषितमनंगलेखमपि साक्षात्कृतवान । लेखमुद्घाट्य वाचयति सति तदुद्दिष्टगूढपलायनवृत्तांतमपि तस्मिन् लिखितं ज्ञातवान् ।

ततो राजा स्वकृतोपकारस्य पुत्रिकाहरणरूपप्रतिकृतिं चिकीर्षतस्सुमतेः कृतघ्नता नृशंसता च मुहुर्विनिंदंस्तं स्वसभा-

यास्स्वपुर्याश्चापुनरावृत्ति निष्कासयामास। सुमतिस्सद्य एव तद्दे-शमुत्सृष्टु बलात्कृतश्शीलवतीं पुनर्द्रष्टुं न शशाक ।

एवं कामपाले दुष्टे सुमतेर्मित्रद्रोहं महिळानगर्यां कुर्वति सति मालिनीविरोचननगर्यां कामपालस्य विरहेण भृशमतप्यत। चिरंतद्विरहं सोढुमसहा सती दयितदर्शनकांक्षया कुलवधूशालीनता परित्यज्य महिळापुरीं गंतुमध्यवससौ। पथि पुरुषधर्षणादात्मानं रक्षितुं चेटचा लासितया पुरुषवेषं धृत्वा प्रतस्थे। विश्वासघातुकस्य कामपालस्य शाठ्याद्यस्मिन् दिने सुमतिर्महिळानगरान्निर्वासितस्तस्मिन् दिवस एव लासिताद्वितीया मालिनी तां पुरीं प्राप। मध्याह्नसमये तन्नगरीं प्राप्य कस्मिंश्चिन्मठे निवासमकरोत्। विदितसर्वभावतया मालिनी कामपालस्य वृत्तांतं जिज्ञासमाना मठाधिकारिणा चिरं संवादमकरोत्। सोपि युववेषनिगूढां ता सत्ययुवानं मत्वा परं हृष्टः बाह्याकारसंपदा कोप्यभिजनवास्तरुण इति निश्चित्य तेन सह सुविस्रब्धं संस्तुत इव चिरं संललाप। सत्स्वभावतया विषण्णमिव दृश्यमानं तं दृष्ट्वा सोपि विषसाद। प्रियातिथिं विनोदयितुं केन चित्साधुजनेन परिकल्पितां गानगोष्ठीं नेतुं निश्चिकाय।

आत्मन अनालोचितोपक्रमं ज्ञात्वा कामपालः किं वामन्यत इत्यजानाना मालिनी भृशं विषण्णाभूत्। यतस्तस्या आभिजात्यरूपौदार्यादिगुणसंपदं दृष्ट्वा तस्यामनुरक्तः कामपाल इदा-

नीमनेनाविमृश्यकारित्वेन स्वस्मिन्निकर्षबुद्धिं करोतीति सा बिभयाञ्चकार अस्मादेव हेतोस्सा सदा व्याकुलितेवादृश्यत ।

मठाधिकारिणा सह संगीतगोष्ठीं गंतुं तत्र गानं श्रोतुं सांऽगीचकार । यतस्सकामपालस्तस्यां जनससदि दृश्येतेति तस्या आशंसा । किंतु मठाधिकारिणा मालिन्यां गानमंदिरं प्राप्तवत्यां सत्यां तदुद्देशस्यातिमात्रविपरीतं फलं संबभूव । यतस्तत्र शीलवतीं गीतैराह्लादयंतं तद्गतचित्ततया तद्रूपसपदं वर्णयंत मस्थिरानुरागं चपलचित्तं कामपालं वीक्ष्य सुदुःखिताऽभूत् । अनुव्रतप्रियापरित्यागसाहसं सुमतौ तत्कृतमित्रद्रोहं च कामपालस्य विनिंदंतीं शीलवतीं मालिनी वातायनाच्छुश्राव । ततश्शीलवती तद्गानं तत्संभाषणं च श्रोतुमनिच्छन्ती तत्प्रदेशाद्बहिः प्रययौ । यतो विवासिते सुमतौ सा भक्तिमती जातविश्वासा च । कुटिलमतेर्मित्रद्रोहिणस्तस्य दुश्शीलत्वं भृशं जगर्हे । सद्यो दृष्टायाः कामपालस्य प्रवृत्ते मालिनी भग्नाशापि तस्मान्मनो निवर्तयितुं न शशाक । स इदानीं परिचारकहीन इति श्रुत्वा दयालोर्मठाध्यक्षस्य सहायेन कामपालस्य दास्ये आत्मानं विनिवेशयितुमयतत । सोपीयं मालिनीत्यज्ञात्वा तद्द्वारा पत्रिकोपायनादीनि तत्सपत्न्यै शीलवत्यै प्रजिघाय ।

कामपालो मालिनीद्वारा शीलवत्यै ऊर्मिकां पारितोषिकं प्रेषयामास । सा तां नोपाददौ । सुभाषितेति नाम्ना व्यवह्रिय-

माणा किंकरवेषधारिणी सा मालिनी परित्यक्तमालिनीगतं कामपालस्य प्रथमानुरागं शीलवत्यै चिरं व्यवृणोत् । साप्येवं जगाद । आर्य मम मालिनीपरिचयोस्ति । प्रथममयं कामपालस्तस्यामासक्तचित्तो भूत्वा तामकांडे परितत्याज । मालिनी मत्प्रमाणा । मत्सदृशाकृतिः । नूनं मालिनीपुंवेषं धारयति चेत्सुन्दरपुरुष इव दृश्येत । एवं शीलवती चपलचित्तेन कामपालेन परित्यक्ता मालिनीं स्मृत्वा दयार्द्रहृदया बभूव । कामपालेन प्रेषितमंगुळीयकं प्रतिषिद्ध्य शीलवत्येवमुवाच । "प्रियायै मालिन्यै दत्तमंगुळीयकमेव मह्यमुपहारीकुर्वन्न जिह्रेति । नाहं तत्प्रतिगृह्णामि । इदमंगुळ्याभरणं मालिनीमह्यमुपायनं दत्तवतीति तन्मुखादेवाहमश्रौषम् । सौम्य ! हृष्टास्मि तव सौजन्येन । एतद्धनग्रांधिं गृहीत्वा मालिन्यै प्रयच्छ" इति सपत्नीमुखाच्च्युतान्यमृतबिंदुसम्मितान्यक्षराणि वेषांतरापन्नायामालिन्या दुःखितं मनो भृशं समाश्वासयन् ।

अथ राज्ञः कोपाद्विवासितस्सुमतिरितिकर्तव्यतामूढो दुस्सहावमानाग्निप्लुष्टहृदयो पितृमुखावलोकनाक्षमस्स्वगृहं गंतुं नैच्छत् । महिळानगरोपांतस्थितारण्ये परिभ्रमन् दस्युभिरवरुरुधे । ततस्सुमतिर्धनापजिहीर्षयागतांस्तान्मलिम्लुचान्वीक्ष्य सधीरमिदमुवाच । "रे रे लुंटाकाः ! अरण्ये विवासितस्य व्यसनोपहतस्य मम हिंसया किं लप्स्यते । अहं धृतवासोमात्रधनोस्मि । न किमप्यस्ति मन्निकटे" इति ।

ततस्ते तस्करास्तद्दीनालापान् श्रुत्वा तं दैवोपहतं ज्ञात्वा तस्याकारसौष्ठवेन पौरुषावष्टम्भेन च विस्मितास्सन्तः । "भवानस्मत्कुम्भीलकयूथस्य नाथो भूत्वाऽस्माभिस्सह सुखेन जीवितुमर्हसि । अस्मत्प्रार्थनां यदि नांगीकरोषि तदाऽद्यैव त्वां यमक्षयं प्रापयाम" इति तमभाषयन् । तदुपरि सुमतिरपि आत्मनि पतितमुपप्लवं किंचिदप्यविगणय्य सधीरमेव मब्रवीत् । "यदि यूय स्त्रीभ्यो निस्स्वपथिकेभ्यश्च न द्रुह्येत तर्हि युष्मद्वचनानुरोधेन युष्मत्समाजस्य नेतृत्वमवलंबितुमुत्सहे" इति । तेपि तदनुमेनिरे ।

एवं सुमतिरपि काव्योपगीतचरित्रो रभस इव धर्मबाह्यानां निष्करुणानां दस्यूनामधिपो बभूव । एतदवस्थाया सशीलवत्या प्रत्यक्षीकृतः । पित्रा बलवत्प्रेरितापि शीलवती तूर्यं परिणेतुमनिच्छंती स सुमतिर्मन्थानननगरे स्थित इति कर्णाकर्णिकया श्रुत्वा पितृसदनं परित्यज्य तमेवानुगंतुमध्यवस्यत् । किंतु साऽस्मिन्विषये तया विदितो वृत्तांत स्सत्यो न । यतस्सोऽद्यापि तस्कराध्यक्षो भूत्वाऽरण्ये तस्करैरेव जीवति स्म । तदा हृतलोप्त्रस्यैकदेशमप्यगृहीत्वा तैरपहृतधनेष्वध्वगेष्वनुकंपावद्भिर्भवद्भिर्भवितव्यमित्युपदेशदानएव तद्दत्ताधिकारं विनियुंजंस्तैस्सह विचचार ।

अथ शीलवती अग्र्यलोमाख्यस्य कस्यचित्प्रवयसो योग्यस्य सहायेन केनाप्यलक्षिता पितृगृहात्पलायितुं प्रायतत ।

सा सतस्करस्य सुमतेर्निवासभूतमरण्यं समया अनुचरेणागच्छंती मध्ये कातारं दस्युभिर्गृहीता । तदनुयात्रिकोऽप्यलोमाभिधस्तदुपद्रवात्कथंचिदात्मान विमुच्यापचक्राम ।

अथ शीलवत्या ग्रहीता तस्करोभयकंपितांगीं तां दृष्ट्वा एवमाह । "भद्रे! माभैषीः । अस्मन्नायको यत्र वसति तामद्रिगुहा भवतीं नेष्यामि । ततोऽधिकतरं न पीडयामि । अस्मत्स्वामी उदाराशयः । त्वद्विधेष्वबलाजनेषु दयालुः ।" धर्मशून्यतस्कराधिपतेः पुरतो बंदीत्वेन नीयमानमात्मानं तद्वचनेन ज्ञात्वा लब्धहृदयसमाश्वासना । "रे रे सुमते! त्वत्कृतेऽहमीदृशं बीभत्समनुभावितास्मि दैवेने त्युच्चैररोदीत् ।

किंकरवेषधारिण्या मालिन्याऽद्याप्यन्वासितः कामपालश्शीलवतीं पितृमंदिरातपलायिता श्रुत्वा तां विचेतुमरण्ये परिभ्रमन शीलवतीं पर्वतकंदरं नयंत तस्करमुपरुरोध । दस्युहस्तात्ता निरमोचयत् । तादृश्यापत्समये दैववशात्तत्रागत्य प्राणान् रक्षितवतः कामपालस्य महोपकृति बहुमन्यमाना शीलवती आत्मनः कृतज्ञतासूचकानि कानिचिद्वचासि वक्तुं मनासि विचिंतयत्येव यथापूर्वं कामपालेन निजमनोरथपूरणाय निरबन्धि । परिणयाय ता कामपाले निर्बध्नति सति किंकरवेषधारिणी मालिन्यपि तत्र सन्निहिता । कामपालकृतमहोपकारक्रीतस्य आामन आनृण्यासिद्धिं संपादयितुं या कांचिन्निष्कृतिमदत्वा न

निवर्तते शीलवती कथं वेदं परिणमेदित्युत्कंठया अवलोकयंती तत्र तस्थौ मालिनी ।

तत्समये स्ववर्ग्यैः काचित् स्त्री बंदीगृहीतेति श्रुत्वा तां विमोच्य समाश्वासयितुं तत्रगतस्य सुमतेर्हठाद्दर्शनेन शीलवती कामपालादयस्सर्वे विस्मिता बभूवुः ।

शीलवतीं प्रार्थयमानः कामपालः प्रियमित्रेण सुमतिना प्रत्यक्षीकृतो व्रीडितः पश्चात्तापसमन्वितो बभूव । मित्रस्य पादयोर्निपत्य स्वकृतापराधान्निवेद्य भृशं दुःखितोऽभूत् । उदारहृदयो मित्रव्यसनी सुमतिस्त न केवलं चक्षमे अपितु पूर्वमिव तस्मिन्नुदग्रतरमैत्रीमेव दर्शयन् वीरबुध्युन्मेषं प्रकाशयन्निदमाह । अहं स्वच्छंदस्त्वां क्षमे । शीलवतीगतां सर्वां प्रीतिं त्वत्कृते परिजहामि ।

अथ किंकरवेषेण पार्श्वस्थिता मालिनी सुमतेस्तामुदारां प्रतिज्ञां श्रुत्वा इदानीं कामपालश्शीलवतीं निषेद्धुं न शक्नोतीति भिया मूर्छिता पपात । तत्रत्यास्सर्वे तदवस्थां तां प्रकृतिमापन्नां चक्रुः लब्धसंज्ञा सा इदमाह । एतदंगुळीयकं शीलवत्यै दातुं मम स्वामी मामाज्ञप्तवान् । अहं विस्मृतवत्यस्मीत्यंगुळीयकमदर्शयत् । कामपालस्तदंगुळ्याभरणं दृष्ट्वा मालिन्यै दत्तां निजोर्मिकां प्रत्यभिज्ञाय किंकरवेषधारिणीं तामिदं पप्रच्छ । रे भृत्य! कुतस्त्वयेदं समासादितं । इदं मालिन्या अंगुळीयकं ।

किंकरवेषधारिणी मालिनी । मालिनी स्वयं मह्यमदात् । तयैवात्रानीतं ।

अथ कामपालस्सुनिपुणं तां निर्वर्ण्य सुभाषिताख्यस्मभृत्यो मालिन्यैवेति प्रत्यभिजज्ञे । ततस्तस्या दृढानुरागं स्थिरभक्तिं च ज्ञात्वा विस्मितः पुनस्तामात्मनः प्रीतिपात्रमकरोत् । अनुरूपवल्लभानुरक्तायां शीलवत्यां स्वकृतकानुरागमत्याक्षीत् ।

अथ सुमतिकामपालौ पुनः परस्परसमागमजनितसौख्यमनुभवंतौ स्वस्वदयितयोरनुव्रतत्वं श्लाघमानौ शीलवतीगवेषणाय तदरण्यं प्राप्तयोस्तूर्यमहिळानगराधीशयोराकस्मिकदर्शनेन विस्मितावभूतां । तूर्यस्सुमतेस्समीपमागत्य "मदीयेयं प्रिया शीलवती" इति तां बलाद्गृहीतुमयतत । तदुपरि सुमतिस्तद्वचनमाकर्ण्य सधैर्यमिदमुवाच । "अरे! तूर्य! इत अपेहि । दूरे तिष्ठ । शीलवती मदीयेति यदि पुनरपि वक्षि तर्हि प्राणास्त्वदीया न भवेयुः । इयमत्रैव स्थिता । तां स्पृश । अयं न भवसि । तव निश्वासवायुरपि तां स्पृशति चेत् क्षणांतरे ज्ञास्यसि यद्भवेत् । " सुमतेरिमा बिभीषिका श्रुत्वा प्रकृतिभीरुस्तूर्य "अनया वराक्या न मे प्रयोजनं । अन्यस्मिन्ननुरक्तायै प्रमदायै को वा मूर्खस्स्पृहां कुर्वीत" इति व्याहरंस्तस्मात्प्रदेशाच्छनैरपासरत् ।

अथ प्रकृत्या शूरो साहसिकश्च राजा क्रोधाविष्ट इदमूचे । तूर्य ! मय्यननुरक्तेति दुर्बलहेतुं परिकल्प्य तां जिहासन् भृशमनार्य इव लक्ष्यसे । सुमतेरभिमुखो भूत्वा, "सुमते ! अतिमात्रं श्लाघनीया भवद्धैर्यसंपद् । अतएव महाराजकुमारी पाणिग्रहणायार्हत्तमः । अस्तु ते प्रिया शीलवती यतस्त्वमपि तस्या अनुरूपो वरः । ततस्सुमतिस्सप्रश्रयं राज्ञः पादौ प्रतिजग्राह । तत्कृतकन्याप्रदानरूपोपहारं प्रत्यैच्छत् । अयमेव साधीयानवसर इति मत्वा सुमतिर्यैस्सह मिळित्वाऽरण्ये कंचित्कालमुवास तास्तस्करान् क्षंतुं प्रसन्नं राजानमयाचत । यदि पुनस्ते संस्कृतास्साधुगोष्ठ्या प्रवेशितास्तेषा बहवस्साधुशीला राजनियोगानुष्ठानदक्षा भवेयुरिति राजानं प्रत्याययत् । यतस्तेऽपि सुमतिरिव कृतराजापराधतया विवासिताएव । राजाप्येतत्प्रार्थनामंगीचकार । इदानीं स्वल्पमप्यवशिष्टं नाभूत् । कामपालः बलवत्पश्चात्तापतप्तः कामवशंगतेनात्मना प्रयुक्तस्य मित्रद्रोहस्य कथामादितः प्रभृति राज्ञः पुरतो वर्णयामास । मित्रद्रोहजनितलज्जैव तस्य युक्तदंडोऽभूत् । अथ सपरिवारो वधूवरवर्गोऽरण्यान्महिळानगरं प्रतिनिवधृते । तत्र राजमंदिरे वागतीतविभवेन विवाहमहोत्सवस्समवर्तत ।

समाप्तं विरोचननगरसुजनद्वयम् ।

---

## 15. A midsummer night's Dream.

(वसन्तनिशास्वप्नम्)

Dramatis Personæ.

1. Athens = ज्योतिष्मतीपुरम्.
2 Egeus = विजयः=ज्योतिष्मतीपुरे कश्चिद्वृद्धः.
3. Hermia = हर्म्या=वृद्धस्य पुत्री.
4 Theseus = प्रतापवर्धनः=ज्योतिष्मतीपुरनाथः.
5 Oberon = अभ्रगः-यक्षणामधिपः.
6 Titania = सतीव्रता-तन्महिषी.
7. Puck = पालकः-कश्चिद्यक्षः.
8 Robinson Good-fellow = सुमुखः - पालकस्य नामान्तरम्.
9 Helena = मलयवती.
10 Lysander = रक्तालकः.

# ॥ वसन्तनिशास्वप्नम् ॥

## (A MIDSUMMER NIGHT'S DREAM)



आसीत् कस्मिन्काले ज्योतिष्मतीपुर्यां कश्चिद्धर्मशास्त्रविहितो नियमः येन तत्पौरा स्वदुहितॄरनिच्छतीरपि स्वेष्टवरेभ्यो दत्वा प्रसभं विवाहं कर्तुमधिकारवंतो बभूवुः । यदा याकन्यका स्वपित्रा समुद्दिष्टं युवानं परिणेतुं नेच्छति तां जनको हंतुमनेन नियमेनाधिकार्यासीत् । प्रायशो यदि ताः कदाचिन्निजाज्ञोल्लंघनपरा अपि भवेयुः पितरो दुहितृवात्सल्येन ताव्यापादयितुं नैच्छन् तस्मात्तन्नगरवासिप्रमदाजनस्स्वपितृभिर्वारं वारंवध दंडेन वित्रासितोऽप्ययं नियमोऽनुष्ठानपदवीं न कदाचिदारोपितः ।

अत्रायं कश्चित्पुरातनेतिहासश्श्रूयते । आसीत्तत्रैव नगर्यां विजयो नाम कश्चिद्वर्षीयान् । तस्यैका दुहिता हर्म्या नामाभूत् सा तन्नगरवासिने कस्मैचिदभिजाताय यूने दामोदराख्याय पित्रा प्रतिपादितापि तमनिच्छंती रक्तालकनामानं तत्पुरवासिनमन्य चकमे । तदुपरि तत्पिता विजयस्स्वतनयाया दुष्प्रवृत्त्या भृशं क्रुद्धस्तदानीं ज्योतिष्मतीपुरपालकस्य प्रतापवर्धननाम्नो राज्ञस्सन्निधि तामानीय राजकृतनियमातिक्रमणाद्वधदंडेन तां योजयितुं प्रार्थयत ।

अथ हर्म्यापि राजसविधमुपेत्य "महाराज! मत्प्रियसखी मलयवती दामोदरे चिराद्गाढानुरागा आसीत् सोपि तस्यामुत्कटानुरागादुन्मत्तस्संजातः। तस्मादहंमत्प्रियसखीवल्लभं दामोदरमेनं नामभिलषामीति स्वप्रतीपाचरणस्य हेतुं व्यवीघृतत्। किंतु संमाननीया स्वपुत्रिकोक्तोपपत्तिः विजयस्य कठिनहृदयेऽकिंचित्करी बभूव। राजा प्रतापवर्धनो दयालुर्महात्मापि राजशासनमन्यथा कर्तुं न प्रबभूव। ततो दामोदरो वरणीयो वा नवेति सम्यग्विमष्टुं दिनचतुष्टयमात्रमवकाशो दत्तः। निर्दिष्टदिनाभ्यंतरे यदि सा दामोदरं परिणेतुं प्रत्याचष्टे तदा सा हंतव्येति व्यादिदेश।

तदा हर्म्याराजभवनाद्विनिष्क्रम्य निजदयितं रक्तालकमुपगम्य आत्मन उपस्थिता विपदं तस्मै निवेदयामास। त्वां परित्यज्य दामोदरं वा वरिष्यामि चतुर्षु दिनेषु प्राणान्वाहास्यामीति"

अथ रक्तालको हर्म्यामुखादेतद्विषादबहुळां वार्तां श्रुत्वाऽत्यर्थं खिन्नस्ता मित्थमुवाच "प्रिये! शृणु मद्वचनं। इदं राजशासनं ज्योतिष्मतीपुरसीमभ्यो बहिर्नानुवर्तते। एतन्नगर्या नातिदूरे स्थिते कस्मिंश्चिद्ग्रामे मम मातुलानी निवसति। तस्मात्त्वमस्यां निशायामेव वेषांतरनिगूढा पितृमंदिरात्केनाप्यलक्षिता मन्निकटमागच्छ आवां मन्मातुलानी निवासग्रामं गमिष्यावः।

तत्रावयोर्विवाहो निर्विघ्नं भविष्यति । निशीथसमये बाह्यो-द्याने भवत्या आगमनं प्रतिपालयन्वर्ते " इत्युपदिदेश "

अथ सानंदमंगी चकार तत्कर्तव्यनिर्देशं हर्म्या मलयवतीं विना न केनापि ज्ञातं तस्याश्चौर्याभिसरणं । प्रायशो लोके मूर्खाः प्रमदास्स्वमनोरथपूरणायाकृत्यानि कुर्युः । प्रियसखीरहस्योद्घाटनेनात्मनो लाभलेशाभावेपि कामातुरप्रमदाजनसुलभया बालिशबुद्ध्या मलयवतीविश्वासहीनस्य तत्कामुकस्यानुयानमात्रफलकमानंदमप्यमृष्यमाणा दामोदरं गत्वा हर्म्यायाचौर्याभिसरणं निवेदयितुं निश्चिकाय । हर्म्यामन्विष्यन् दामोऽदरोपि तदुद्यान गच्छेदिति सा जज्ञौ । यस्मिन्निष्कुटे हर्म्यारक्तालकौ परस्परसमागमाय समयं चक्रतुः सोप्सरो विहारप्रदेशः अभ्रगोप्सरसामधिपस्तन्महिषी सतीव्रता तदनुयायिवर्गश्चास्मिन्नुद्याने निशीथसमये पानगोष्ठीसुखमन्वभूवन् । अथैतास्मिन्समये राज्ञो महिष्याश्च चिताकरो महान्विवादस्समजायत । अस्मिन् रमणीयकानने वृक्षच्छायास्थितस्ततो विहरंतौ चंद्रिका न ददृशतुः । तदा सर्वे पिशाचाः प्रकाशभीता वृक्षानारुह्यात्मानं निजुगूहुः । अनयोः कलहस्येदं निमित्तं । राजमहिषी सतीव्रता प्रियसख्याः कस्याश्चित्कृतकपुत्रं शिशुं दयितायाभ्रगाय दातुं नैच्छत् अथ तच्छिशोर्मातरि मृताया सा पिशाचराजमहिषी धात्रीकराभ्या तच्छिशुमाच्छिद्येदं काननमानिनाय ।

अथ हर्म्यारक्तालकयोः परस्परसमागमायोद्दिष्टायां तस्यां शर्वर्यामेव प्रियसखीभिरन्वासिता सतीव्रता तदरण्ये परिक्रामन्ती पिशाचसखानुयातमभ्रगं समुपागतवती ।

राजा—मानिनि ! सतीव्रते ! पश्य मां । अहमेक एव चंद्रिकाविहारसौख्यमनुभवामि ।

देवी—अहो अभ्रगस्संप्राप्तः । हे पिशाचाः ! इतो द्रुतमपसरत । परित्यक्तो मया तस्य सहवासः ।

राजा—चंडि ! तिष्ठ - तिष्ठ - किं नाहं ते प्रियः । प्रियमभ्रगं मा किं लघूकरोषि । देहि मे युष्माच्छिशुं मा किं कर्तुं ।

देवी—"राजन् ! स्वस्थो भव । मोत्ताम्य । अस्मिन्नर्भके निराशो भव । युष्मत्सर्वपिशाचराज्यविनिमयेनापीमं शिशुं मत्तोऽधिगंतुं न शक्नोषि" इति निष्ठुरं भाषमाणा कोपपराङ्मुखी भर्तृसकाशादुच्चचाल ।

अभ्रगः—साधय चंडि ! साधय । श्वः प्रभाते द्रक्ष्यसि । कथं कृतं प्रतिकरिष्यते । एतन्न्यक्कारस्य फलमनुभवासि ।

अथाभ्रगः—आत्मनः प्रियसुहृदं गूढसचिवं पालकनामानमाकारयितुं कंचिदादिदेश । अयं पालकस्सुमुख इति नामांतरेण व्यवहृतः । विदग्धो हास्यशीलः । समीपग्रामेषु

परिहासकराः क्रीडा आचरन् जीवति स्म । क्रीडाशीलस्सपालकः कदाचिद्दधिमन्थनगृहं प्रविश्य दुग्धमर्कमपनयन् कदाचिद्गोदोहिनीमध्यमानकालशेयभाडे क्षेपिष्ठवायुमयरूपधृत् केनाप्यदृष्टो मज्जन् दधिमंडान्नवनीतमुद्धर्तुं प्रयतमानां गोपिकां वीक्ष्य विकटाकारेण ननर्त । ताम्रस्थाल्यां पच्यमानां यवसुरां स्वचापलेन दूषयामास स्निग्धेषु केषुचित्पानगोष्ठीसुखमनुभवितुं सम्मिळितेष्वसौ शूलाकृतकुळीररूपेण यवमद्यभाजने उत्पत्य कस्या चिद्वृद्धागनायां मद्यं पातुं कृतोद्यमाया तस्या अधरं पद्भिस्ताडयित्वा जराविशीर्णे तस्याश्चुबुकेऽसुस्रवत् । तदनु तस्यामेव वृद्धनार्यां वेत्रासने निषीद्य चिंताकुलां कांचित्कथां कथयितुमारभमाणायां पालकोऽधस्तात्प्रविश्य तदासनं कंपयामास । ततस्ते सर्वे वृद्धा जहसुः । एतादृशउल्लासकरस्समय इतः पूर्वं नोपलब्ध इत्यूचुः ।

अथाभ्रगो दूरादेनमल्पकायं परिहासशीलं नक्तंचरं दृष्ट्वा "पालक! इत एहि । आनय ममैकं तत्पुष्पम् यत्तरुणीभिः "आलस्यकाम" इत्य (Love in Idleness) भिधीयते । यद्रसस्स्वपतां नेत्रपक्ष्मणोर्न्यस्तस्तेषां प्रबोधानन्तरं तान् प्रथमदृष्टे वस्तुन्यभिलाषुकान्करोति । तत्पुष्परसं निद्राणायास्सतीव्रताया नेत्रच्छदयोर्निषिंचामि । प्रबुद्धा सा चक्षुरुन्मील्य यं पश्यति स सिंहो वा भल्लूको वा अन्यापारण्या-

पूतश्शाखामृगो वा गोलांगूलो वा भवतु । तमेव निकाममभिलषति । अनया मायया ता विमोह्य यथा तच्छिशु मे किंकरीभवितुं ददाति तथा करोमि ।

अथ कुत्सितचेष्टारतः पालकस्स्वामिनस्संकल्पितलीलया प्रहृष्टहृदयस्तत्पुष्पं विचेतुं प्रतस्थे । ततो राज्ञि अभ्रगे पालकस्य प्रतिनिवृत्तिं प्रतिपालयति सति तदरण्यं प्रविशन्तौ मलयवतीदामोदरौ दृष्टौ । मलयवत्यनुयानेन रुष्टस्य ता निंदतो दामोदरस्य कंठध्वनिमभ्रगश्शुश्राव । समलयवतीं हृदयमर्माविद्भिर्दुरुक्तैस्तन्मनः ततक्ष । तथापि सा तस्य पूर्वानुरागं स्मारयंती तं मृदुवचोभिस्सात्वयामास । एवमनुनाथमाना तामेकाकिनीमरण्ये परित्यज्य श्वापदकृपायत्तजीवनां कृत्वा पलायमानं तं साप्यन्वियाय ।

अथाकृत्रिमकामुकेषु वत्सलो यक्षराजोऽभ्रगस्तदवस्थां मलयवतीं दृष्ट्वा दयार्द्रचित्तोऽजनि ।

अथ तद्रक्तपुष्पमादाय पालके प्रत्यावृत्ते अभ्रगस्तमाह । एतत्पुष्पस्यैकं भागं गृहीत्वागच्छ । अस्त्यत्र ज्योतिष्मतीनगरे काचित्सुंदरी युवतिः । या कस्मिंश्चित्सावज्ञे यून्यनुरक्ता । यदि तं निद्राणं पश्यसि तस्य पक्ष्मणोरेतत्पुष्परसं निषिंच । यथा स प्रबुद्धः प्रथमं तामेव पश्यति तथा तस्यास्सन्निधावेव एतत्कर्तुं यतस्वेति । तत्परिहितेन ज्योतिष्मतीनगरीप्रोतवाससा तं

जानीहि ।" अथ पालक एतत्कर्मातिनिपुणं निर्वोढुं प्रतिजज्ञे । ततोऽभ्रगस्वजाययाऽनवलोकितो वितानायितविविधकुसुमलताप्रतानस्य मालतीवकुळपुन्नागसुरभिळामोदसमाकृष्टचंचरीककुलचरणोद्धूततिरस्करिणीकृतसुमरजःपटलस्य निकुंजकुटीरस्यान्तिकं शनैराजगाम यत्र सतीव्रता निशापर्यटनखेदापनिनीषया विश्रमितुं संकल्प्यावकुंठयितुं पर्याप्तप्रथिमानं भुजंगनिर्मोकं शय्याप्रच्छदपटं कृत्वा शय्यामभजत् ।

देवी—भो पिशाच्यः । युष्मासु काश्चन स्थलकमीलनीलतासु कीटानपनयत । अन्या मम कंचुकनिर्माणाय चर्ममयपक्षान्संपादयितुं तैलपायिभिस्सह युद्ध्यध्वम् । अपराः कामिनीधार्यान्कंचुकान्सीव्यत नक्तं घुत्काररवं कुर्वन्तं मुखरवायसारातिमदन्तिकागमनान्निवारयत । प्रथमं मम स्वापगीतानि गायत । इति सर्वास्ता आज्ञापयामास । तास्सर्वा इत्थं जगुः ।

श्लो. सर्पाबिन्दुकिताङ्गका द्विरसनाश्शल्याश्शलौघांचिता
नोदृग्गोचरतामुपैत सरटाः कीटा जहीतानयम् ।
देवी यक्षपतेः प्रसुप्तिमभजन्मासन्निदध्यात ताम्
किंचित्पंचमरागमालपपिकप्रस्वापगीतैश्च नः ॥

श्लो. देव्यस्तु ते चिरसुखं शयनं कदाचि-
न्मा तेऽस्तु हानिरुत मंत्रबलोपरोधः ।
निद्रां भज प्रियतमे सुखमेधि गीतै-
रात्रिस्तु ते सुखकरी भवतु प्रकामं ॥

एव ताः पिशाच्यस्तां देवीं सतीव्रतां स्वापगीतैस्स्वापयित्वा तदादिष्टनियोगमनुष्ठातुं सर्वतोदिक्कं प्रचलिताः ।

ततोऽभ्रगश्शनैर्देवीसमीपमागत्य तत्पक्ष्मणोस्तत्पुष्परसं निषिच्येत्थमवदत् । "सुप्तोत्थिता भवती यत्प्रथमं पश्यति तत्पूर्णाभिलाषेण गृहाण ।"

अत्रान्तरे हर्म्या दामोदरपाणिग्रहणप्रत्याख्यानादापतितमात्मनिधनं परिहर्तुं तन्निशायामेव पितृगृहाद्बहिर्निर्जगाम । साऽरण्यं प्रविश्य निजपितृष्वसृगृहं आत्मानं नेतुं प्रतिपालयंतं प्रियं रक्तालकमपश्यत् ।

तदा तदरण्यार्थपथप्रविष्टयोस्सतोर्जीविताशापरित्यागेनापि दर्शितानुरागायां तस्यामतीव जागरूको रक्तालकस्तां दुस्सहमार्गायासपरिश्रान्तां पदात्पदमुत्क्षेप्तुमप्यशक्नुवंतीं तां वीक्ष्य खिन्नमानसः कस्मिंश्चिद्धरितशाद्वले नदीरोधस्याप्रभातं विश्रमितुमनुयुयोज । स्वयमपि तस्या नातिदूरे विशश्राम । एवं तावुभौ क्षिप्रं गाढनिद्रामवापतुः ।

अथ पालकोपि स्वप्रभुणाऽभ्रगेन यथादिष्टं इतस्ततो विचिन्वन् कस्मिंश्चित्प्रदेशे ज्योतिष्मतीपुरनिर्मितवासांसि वसानं कंचिद्युवानं तन्निकटे प्रसुप्तां मनोज्ञां कांचित्प्रमदा च दृष्ट्वा स्वस्वामिना अभ्रगेनोदाहृता कामुकी सैवेयमिति स

एवासौ तस्यां सावज्ञोऽभिक इत्यापाततोऽनुमीय प्रबुद्धस्सन्प्रथमं सतामेव पश्यतीति । निश्चित्याधिकायासं विना तच्छोणपुष्परसं तन्नेत्रयोरुत्स्रष्टुं मतिं चक्रे । किंतु दैवयोगादन्यदापपात । तेन यूना निद्राते नेत्रयो रुन्मीलितयोर्हर्म्यास्थाने दैवादत्रागता मलयवती प्रथमं दृक्पथे पपात। अहोऽचिन्त्याद्भुतशक्तिरोषधिः। यच्छक्त्या हर्म्यां गतस्तस्य तादृशानुरागो विननाश मलयवत्या दृढमनुरक्तवान । यदि प्रबुद्धो रक्तालकः प्रथमं हर्म्यामेवाद्रक्ष्यत् पालकानुष्ठितः प्रमादो निष्फलोऽभविष्यत् । यत इतः पूर्वमेव तस्या बद्धभावस्सः । ततोऽधिकतरानुरागमुत्पादयितुं न शक्यते । अकृत्रिमानुरागा हर्म्यां निरस्यान्यसंक्रातहृदयोऽरण्ये निद्रानिलीढनयनामेकाकिनीं ता परित्यज्य गतः । एव तस्याअनर्थ आपतत् । पूर्वोक्तरीत्या तां परित्यज्य निर्दयं धावंतं दामोदरमनुप्रधावितुमयतिष्ट मलयवती । स्त्रीभ्यः पुंसां दूरप्रधावनेऽधिकतर जंघालतया तमनुगंतुं न सा शशाक । सोपि सहसा तस्या दृक्पथात्तिरोबभूव । तदा अनाथा अशरणा अविश्रान्तभ्रमणसंजातदुस्सहायासपरिम्लानगात्रयष्टिश्च्युतधैर्या श्वापदमात्रसहाया तृणचलनेपि प्रतिपदं भयनिमित्तान्युत्पेक्षमाणा कथं कथमपि तत्प्रदेशमाजगाम यत्र रक्तालको निद्रामुपययौ ।

मलयवती—हन्त ! स्वपन्नयं रक्तालक इव लक्ष्यते । अत्रायं भूमौ शयितः । किमसौ सुप्तो मृतो वा । इति तं शनैः

करपल्लवेन स्पृशन्ती आर्य ! यदि जीवितं धारयसि तर्हि प्रबुध्यस्व। ततो रक्तालकश्चक्षुषी उन्मील्य तत्पुष्परसमहिम्ना तस्मिन्नेव क्षणेऽमितानुरागव्यंजकैर्वचोभिस्तस्या महते आश्चर्याय तामभिधातुमुपचक्रमे।

रक्तालकः—मलयवतीमुद्दिश्य। प्रिये ! काकोलराजहंस्योर्यावदन्तरं तावदंतरं युवयोः। त्वदर्थेऽहमनलं प्रवेक्ष्यामि। इत्येवं विधानि बहूनि चाटुवाक्यान्यवदत्।

अथ मलयवत्यपि तं हर्म्यासक्तमानसं तामुद्वोढुं कृतप्रयत्नं ज्ञात्वा तच्चाटूक्तीः श्रुत्वाऽक्रुध्यत तस्मै। परिहासार्थमेवं जल्पतीति सा मेने।

मलयवती—हंत ! अहं सर्वेषां परिहासपात्रं जातास्मि। धिङ्मां मंदभागिनीं। दामोदरो मयि नकदाचित्स्निह्यति। नालपति। भवांस्तु मयि सावज्ञ इति मदभिप्रायः। एवं परुषं वदंती मलयवती तस्मात्प्रदेशादुच्चचाल रक्तालकस्तु स्वपंतीं हर्म्यां तत्रोत्सृज्य मलयवतीमेवानुजगाम।

अथ हर्म्या प्रबुद्धा विजनेऽरण्ये आत्मानमेकाकिनीं विज्ञाय रक्तालकस्य गतिमजानंती तदन्वेषणार्थं कांतारमभितो बभ्राम। अत्रांतरे दामोदरो हर्म्यां या रक्तालकस्य च गतिमधिगन्तु मशक्नुवन्निष्फलान्वेषणेन परिश्रांतः क्वचिन्निद्राणोऽभ्रगेन दृष्टः। मयोक्तादन्यस्य लोचनयोर्मूढः पालकस्तत्पुष्परसं निषि-

क्तवानिति तस्य भाषणैरेवाभ्रगो ज्ञातवान । ततः पालकः प्रथमो-
द्दिष्ट पुरुषमान्विष्य दृष्ट्वा स एवायमिति निश्चित्य निद्रितस्य दामो-
दरस्य नेत्रे तदोषधिरसं न्यषिचत् । स तत्क्षणमेव शयनादु-
त्थाय तत्र स्थितां मलयवतीं प्रथमदृष्टिपातेन संभावयन् शृंगा-
ररसपरीवाहैर्वचोभिर्निजानुरागं तस्यां प्रकाशयितुमारभत ।
अथ तस्मिन्नेव समये मंदबुद्धेः दुर्भगस्य पालकस्य प्रमादेनाभि-
कमनुधावंती हर्म्यो रक्तालकश्चोभौ दृष्टौ । तदा रक्तालकदा-
मोदरावन्योन्यं संगतौ भाषमाणौ वीर्यवत्तरौषधिरसानुभाव-
परवशतया मलयवत्यामनुरक्तौ विवदमानौ तामेव चकमाते ।

अथ विस्मयवशं गता मलयवती दामोदरो रक्तालकः
पुरा प्रियसखी हर्म्या च ता परिहसितुमित्थमुपजेपुरित्यमंस्त ।
हर्म्यापि मलयवतीव विस्मयाविद्धा बभूव । पूर्वं स्वस्मिन्ननुरक्तौ
रक्तालकदामोदरौ कथमिदानीं मलयवत्या बद्धभावौ संजाता-
विति निश्चेतुं नाशकत् । एतत्सर्वं तस्याः परमार्थइवा-
बभासे । पूर्वमत्यंतस्निग्धयोर्हर्म्यामलयवत्योरिदानीं प्रबलशात्रवं
समजनि ।

मलयवती—हर्म्ये ! कठोरहृदये ! त्वमेव कृत्रिमश्ला-
घाभिर्मां संतापयितुं रक्तालकं बोधयसि । यस्तेऽन्यः कामुको
दामोदरः पूर्वं मयि सर्वदाऽवधीरणाबुद्धिरासीत्स इदानीं मां
"सौंदर्याधिदेवता अप्सरोविभ्रमादिव्याकृतिरिति" मिथ्याभि-

वर्णनैस्स्तोतुं भवती तस्योपदिष्टवती किम् । मामुपहसितुं यदि तं न प्रेरयसि तदा स एवं कृत्रिमस्तुतिवचांसि न ब्रूयादेव । त्वत्प्रियसखीं मा परैर्मिळित्वा किमवमन्यसे । कथमेकपदे पाठशालासहाध्ययनमैत्रीमपि व्यस्मरः हर्म्ये स्मर । कियच्चिरमावामेकासने निषण्णे एकामेव गीतिं गायंत्यौ एकस्मिन्नेव सूचिकर्मादर्शे सीवनकर्मारचयाव । लतायुगळीवैकत्रवर्धमाने कदाचिदपरैरविरहितैः दृष्टे । हर्म्ये नेदमनुरूपं चिरंतनसख्यस्य स्त्रैणस्य वा यन्मम निंदकैर्मिळित्वा मामभिभवसि ।

हर्म्या—सखि ! विस्मितास्मि तव कोपवचनैः । नाहं विनिंदामि भवतीं । त्वमेव मा निदंतीव लक्ष्यसे ।

मलयवती—आम् । अभिनिविष्टा भव । कृत्रिमकोपकटाक्षान्मुंच मयि उपहस । परस्परमक्षिसंज्ञां दत्वा परिहासाद्विरमाव । यदि ते कृपासौशील्यं वा स्यात्तदैवं मां न ब्रूषे ।

एवं हर्म्यामलयवत्योस्सकोपं विवदमानयोस्सत्योरक्ताळकदामोदरौ मलयवत्यधिगमाय मल्लयुद्धं कर्तुं विमर्दक्षमांभूमिमवतेरतुः । मलयवती हर्म्या च स्वस्वदयितावन्विष्यंत्यौ कांतारे परिभ्रमतुः ।

अथ तेषु चतुर्षु गतेषु यक्षराजोऽग्रगः पालकात्तेषां कलहं श्रुत्वा तमित्थमवादीत् । पालक तव प्रमादेनैवेदृशं कृतं ।

किमिदं बुद्धिपूर्वकं कृतं । आहोस्वित्प्रमादः । तत्त्वं ब्रूहि । पालकः—स्वामिन् ! यक्षराज! श्रद्धत्स्व मम वचनं । प्रमादेनैवं कृतमित्यवधारय । ज्योतिष्मतीनगरवाससा तं पुरुषं जानीहीति कि भवता नोक्तम् । तथापीदमित्थमापतितमिति नाहं खिद्यामि । यतस्तयोः कलहध्वनिरस्मानाह्लादयत् ।

अभ्रगः—रक्तालकदामोदरौ युद्धभूमिमवतीर्णाविति त्वत्तो मया श्रुतं । यथा एतौ कामुकौ मिथः कलहायमानौ अंधकारपिहितदृष्टी परस्परमनवलोकयंतौ उत्पथं गमिष्यतः तथेमां रात्रिं कुहेडिकया (fog) समाच्छादयितुं त्वां समादिशामि । त्वं तावत्तयोर्द्वयोः कंठरवमनुकुर्वाणस्त्वामनुयातुं तौ कठोरैर्निंदावचनैः प्रकोपय । यतस्तौ प्रतिपक्षस्य कंठध्वनिरयमिति वितर्कयतः । यथा तौ परिश्रांतावधिकदूरं गंतुमक्षमौ भवतस्तथा कुरु यदा तौ परिश्रांतौ निद्रामापन्नौ भवतस्तदा रक्तालकस्य नेत्रयोस्तत्पुष्परसं निषिंच । स प्रबुद्धो मलयवत्यां नूतनानुरागं विस्मृत्य पूर्वप्रियायां हर्म्यायां पुनरनुरक्तो भविष्यति । ततस्ते प्रमदे निजदयिताभ्यां सह संगतौ सुखं जीविष्यतः । अतीतमेतत्सर्वं स्वप्न इति ते मन्येते । पालक ! शीघ्रं स्वनियोगमशून्यं कुरु । अहमपि गत्वा प्रेयसीं सतीव्रता संभावयामीति । ततोऽभ्रगो निद्राणा सतीव्रतां सन्निपत्य तदंतिके शायितमरण्ये पथस्खलितं कंचित्कृषीवलं दृष्ट्वा "अनेन जाल्मेनास्म-

त्सतीव्रतायाः कामुकेन भवितव्यम्”इति मनसि चितयन् दोर्भ्यां रासभस्य शिर आदाय तस्य मूर्ध्नि निदधे । ततस्तस्य सहजं शिरस्तिरोहितं सत् तदंसयोस्स्वतः प्ररूढमिव रासभशिर एवादृश्यत । अथ यक्षराजेन तदुपरि तन्मूर्धा शनैस्संयोजितोपि तन्निद्रां बभंज । स उत्थितोऽक्षिणी प्रमृजन् देवीनिकुंजाभिमुखं प्रतस्थे । अथ सतीव्रता उन्मील्य नेत्रे पूर्वनिषिक्तौषधीरसबलात्तं वीक्षमाणा “अहो देवदूत इव लक्ष्यसे । किमस्ति ते रूपानुगुणा बुद्धिरपि कृषीवलः आर्ये ! अस्माद्रण्याद्बहिः पन्थानं ज्ञातुं मम बुद्धिरस्ति चेत्तावतैवालं मम । तस्मिन्नासक्त्या देव्युवाच । अरण्याद्बहिर्मागमः । अहमनर्घा अप्सराः भवत्यनुरक्तास्मि । अत्र मया सह विचर । त्वा सेवितुमप्सरसो दास्यामीति चतस्रः अप्सरस आजुहाव यासां नामानि सती नकपुष्पा मर्कटका । झिल्लिका । सर्षपबीजा ।

देवी—अन्वाध्वमेनं सुंदरं । तस्य पुरत एकपादेन नृत्यत । तदभ्यवहाराय स्वादूनि फलान्याहरत । सरघाः प्रच्याव्य मधुच्छत्राण्यानयत । जानपद ! एहि निषीदात्रासने मया सह । लोमशे त्वत्कपोले परिचुम्बन्ती कृतार्था भविष्यामि ।

रासभशिरा जानपदो देव्यनुरागमबहुमन्यमानो नूतनपरिचारिकास्स्ववशा इति गर्वमुद्वहन् सती नकबीजा कुत्रेत्यपृच्छत् ।

सती नकबीजा—एषाहमस्मि आर्य । आज्ञापय ।

जानपदः । कंडूयस्व मम शिरः । लूतातंतुः कुत्र ।

लूतातंतुः—एषास्मि आर्य ।

जानपदः—लूतातंतो गोक्षुरकाग्रस्थित पुरतो दृश्यमानं तद्रक्तषट्पदं हत्वाऽनय । मा कर्मण्यतिमात्रमात्मानं क्लेशय । अनवधानतया मधुकोशं माभांक्षीः । सर्षप बीजा कुत्र ।

सर्षपबीजा—एषास्मि आर्यको नियोगः । आज्ञापय ।

न किमपि । मच्छिरः कंडूयमानायास्सती नकपुष्पायास्सहायं कुरु । अह मुंडनाय नापितस्य गृहं गंतुमिच्छामि । यतोहं लोमशोमुखे । देवी । यत्किमप्यत्तुं वांछसि ? । मन्निकटे धृष्णुरेका पिशाची वर्तते । साचिक्रोडसंचयं तवानेतुं प्रभवति ।

जानपदः—देवि ! शुष्कसतीनकानां प्रसृतिरस्ति । गर्दभाशिरस्कतया गर्दभक्षुधाविष्टोस्मि । तदलं मे । मम निद्रा आयाति । युष्मासु न कापि मन्निद्रां भनक्तु ।

देवी—तर्हि स्वपिहि मद्भुजान्तराळे वीजयामि ताळवृंतेन । हा कथं त्वय्यनुरक्तास्मि । ततो यक्षराज आगत्य भुजान्तराळशायितशूद्रां देवीं वीक्ष्य रासभानुरक्ता ता निनिंद । आत्मापराधं निह्नोतुं देवी न शशाक । अथाभ्रगः कंचित्कालं तां पीडयित्वा कृतकपुत्रं तं शिशुं पुनर्ययाचे । देवी तु नूतन-

कामुकेन वृषलेन संगता भर्त्रा दृष्टास्मीति भृशं लज्जिता भर्तु-शिशुप्रार्थनां प्रत्याख्यातुं न दधर्ष । किं करं कर्तुं चिरप्रार्थितं शिशुं शनैरेवं सतीव्रतायास्स्वजायाया आकृष्याभ्रगस्व-कपटप्रयोगेनैवेतादृशीमयशस्करीमवस्था प्रापिताया देव्या सतीव्रतायां जातानुकंपोऽथापरस्य कस्यचित्पुष्पस्य रसं तस्या नेत्रयोर्न्यषिंचत् । सा देवी क्षिप्रमेव प्रकृतिं गता वृष-लानुरागाद्विरम्य पुनः पूर्वज्ञानमापन्नाऽहमिदानीमस्य बीभत्स-रूपस्य दृष्टिमपि जुगुप्सामीति वदंती वृषले आत्मनोऽनुचि-तानुरक्तत्वं विचिंत्य ह्रीणाऽभूत् । ततोऽभ्रगस्तस्य खरशिरो निरस्य पुनस्तदंसयोर्यथापूर्वं सहजं शिरो निदधे । आप्रबोधं स्वपितुं तमन्वजानात् । इदानीमभ्रगससतीव्रता च प्रणयकोपं परित्यज्य पुनः परस्परं संहितप्रणयावभूतां । तदा अभ्रगस्तेषां कामुकानां चरितं निशीथे तत्कलहं तस्यै आचख्यौ । अथ सा तयोर्दामोदररक्तालकयोस्साहसव्यवसायपर्यवसानं द्रष्टुं भर्तार-मनुयातुमंगीचकार । ततस्तौ नातिदूरे मृदुहरितशाद्वले निज-रमणीभ्यां निद्रावशं गतौ तौ कामुकौ ददृशतुः । यतः पालक इदानीं आत्मना कृतं पूर्वस्खलितं प्रमाष्टुं परस्पराज्ञातं तान्सर्वा न्महताप्रयत्नेनैकं प्रदेशमानिनाय । ततो यक्षराजदत्तेन विष-घ्नागदेन रक्तालकस्य नेत्राभ्यां पूर्वनिषिक्तमोषधीरसं निरन्वयम-पासीसरत् । हर्म्या प्रथमंप्रतिबुद्धा इतः पूर्वमदृष्टमिदानीं स्वस-

विधे स्वपंतं रक्तालकं वीक्ष्य तस्यास्थैर्यं विचित्य परं विसिस्मिये । ततस्सोपि नेत्रउन्मील्य प्रिया हर्म्या मंतिके पश्यन्नोषधीरसप्रमुषितं पूर्वज्ञानं पुनरुपलभ्य पुनस्तस्यामनुरक्तोऽभूत् । "किमिदं परमार्थतस्संवृत्तमथवा आवाभ्यामुभाभ्यां दृष्ट मेकं व्यामोहकरस्वप्नं वा उत शांबरी वा किमपि न ज्ञायत" इति तद्रात्रिकथामुद्दिश्य सलपन्तावास्ताम् । मलयवतीदामोदरावप्यद्य प्रबुद्धौ । कोपकलुषीकृतमानसा मलयवती इदानीं गाढनिद्रानुभवप्रसन्नचित्ता दामोदरेण कृतास्सर्वा अनुरागप्रतिज्ञास्सोल्लास श्रुत्वा ता अकृत्रिमा इतीदानीं बुबोध ।

एता निशाचर्योऽप्सरसश्च पूर्वमात्सर्यं विहाय पुनर्गाढमैत्रीमुपागताः । अन्योन्यनिष्ठुरभाषणानि व्यसस्मरुः । प्रकृतावस्थायामस्माभिः किं कर्तव्यमिति तास्सर्वा अव्याकुलमालुलोचिरे । दामोदरो हर्म्यायां कपटबुद्धिं जहौ । ततस्तस्या विहितं दंडं विनिवर्तयितुं तत्पितरमनुनेतुं दामोदरेण यतितव्यमिति सर्वे निश्चिक्युः । अथ यथोद्दिष्टमेतन्मित्रकार्यनिर्वहणाय दामोदरे ज्योतिष्मतीनगरीं जिगमिषति पलायितां पुत्रीं हर्म्यामन्वेष्टुमरण्यमागतं विजयं दृष्ट्वा सर्वे विस्मिताः ।

अथाभ्रगस्तन्महिषी चैतत्सर्वं वृत्तातमंतर्धानगतौ पश्यंतौ स्वप्रयुक्तानुकूलोपायैस्स्वोद्यमैश्चैतत्कामुकोपाख्यानं शुभनिर्वहणे पर्यवससाविति ज्ञात्वा परां निर्वृतिमापतुः ।

ते सर्वे यक्षास्संभूय तेषा वधूवराणां वैवाहिककर्मातिविभवेन निरवर्तयन् ।

श्लो. ब्रूते यस्सुमतिर्मृषोद्यमिदमित्यस्मत्कृतं नाटकं
यक्षाणां चरितं सएवमभिधातव्यस्सदा पाठकैः ।
स्वप्नं पश्यसि निद्रितो निशि यथा तद्वत्कथेयं कवेः
किं न स्यादितितर्कयात्र पठतां हृद्यानवद्याच सा ॥

समाप्तं वसन्तनिशास्वप्नम् ।

———

## 16 Story of Pericles—( परकालचरितम्.)

Dramatis Personæ.

1. Pericles = परकालः, तारानगराधिपतिः.
2 Tyre = तारानगरं.
3 Antiochus = अमिताघः
4. Tarsus = तार्क्ष्यपुरं.
5. Helicanus = हालिकः, परकालस्य मंत्री.
6 Cleon = क्षमयानः तार्क्ष्यनगरपालकः.
7. Dionyza = दयानिशा, क्षमयानस्य भार्या.
8. Pentapolis = पंचफलपुरं.
9. Thaisa = कमलिनी, परकालस्य भार्या.
10 Simonides = श्रीनाथः पंचफलदेशाधिपतिः
11 Marina = वार्धिजा, परकालस्य पुत्री
12 Lychorida = मंदारिका वार्धिजाया धात्री.
13 Neston = निस्तुलः परकालस्य भृत्यः.
14. Nicondon = निचोळकः भृत्यः.
15. Leonine = लयनयः वार्धिजायाहन्ता.
16. Lysimachus = अनंतवर्मा, मिथिलाधिपतिः.
17. Mytilene = मिथिला.

# ॥ परकालचरितम् ॥

## ( PERICLES )

अमिताघनामाग्रीकुदेशचक्रवर्ती रहसि स्वकृतं पापकर्म लोके प्रकटीकृतवंतं तारानगराधिपं परकालं तद्राष्ट्रप्रजाश्च विध्वंसयिष्यामीत्यभाययत् । प्रायशो महतां रहः कृतपापकर्मणा प्रकाशनं महतो वैरस्य कारणं । ततः परकाल एतां विपदं विनिवर्तयितुं राज्यतंत्रनिष्णाते नीतिनिपुणे भक्तिमतिविचक्षणे हालिकनाम्नि स्वमंत्रिणि राज्यभारं विन्यस्य स्वच्छंदतो विदेशपर्यटनपरो बभूव । प्रथमं स राजा तार्क्ष्यपुरं जगाम । तत्समये तन्नगरवासि जना महोग्रक्षामपीडयार्दिताः । क्षीणानि सर्वसस्यानि । क्षीणस्रोतसो नद्यः । पंकशेषाणि पल्वलानि । बहुळीभूतं तस्करकुलं । प्रजा अन्योन्यमभक्षयन् । एतादृशविपद्बहुले काले स राजा परकालस्स्वधनव्ययेनाहारपदार्थान् क्रीत्वा तत्पौरेभ्यो दत्वा क्षामबाधां निरास्थत् । ते सर्वे पुष्कलान्नप्राप्त्या तुष्टाः पुष्टाश्चाभवन् । भगवत्प्रेषितस्येवा तर्कितोपनतस्य राज्ञस्साहाय्येन तार्क्ष्यनगरपालकः क्रमयानः परं संतुष्टस्तं भक्त्या पूजयामास । स राजा न तत्र चिरमुवास । कुतः । "अमितावस्स्वप्रणिधिभ्यस्तार्क्ष्यनगरे भवदव-

स्थानं ज्ञात्वा भवद्विनाशाय यतेत । ततश्चिरं महाराजेन न तत्र स्थातव्य " मिति तत्सचिवेन लिखितं लेखं वीक्ष्य तत्पुरवास्तव्यानामभिवादनाशीर्वादस्तुतिकोलाहलमुखरितादिगन्तरः पुनस्समुद्रे नावा प्रतस्थे ।

समुद्रे नावा तस्मिन्नातिदूरं गतवति हठादुद्भूतेन भयंकरझंझामारुतेन प्रवहणो भग्नः परकालादृतेनाविनिषण्णास्सर्वे जलधिनिमग्ना नेशुः । अंबरचुंबिभिः प्रबलसमुद्रोर्मिजालैः कस्यांचिदपरिचिततीरभूमावुद्भूतो दिग्वासास्संजातः । तत्रेतस्ततस्संचरंतं तं केचिद्दरिद्रधीवरा दृष्ट्वा जातानुकंपास्स्वगृहमानीयाशनाच्छादनदानेन स्वस्थचित्तं चक्रुः तेन पृष्टास्त इत्थमूचुः । "आर्य! पंचफलनामायं देशः । तं श्रीनाथ इति विख्यातः कश्चिन्महीपतिः प्रशास्ति । तस्य साधुवृत्तेन प्रजारंजनशक्त्या च साधुः श्रीनाथ इति कीर्त्यते । अस्त्येका दुहिता कमलिनीनाम तस्य निरवद्यलावण्या । श्वस्तस्या जन्मदिवसः । तस्यास्स्वयंवरमहोत्सवः प्रवर्त्यते । तस्मिन्नानादिग्देशागता बहवश्शूरा आयुधप्रयोगनैपुणीप्रदर्शनतत्परा राजपुत्रास्तां वरीतुं समवेता भवेयुरिति " अथ राजा तत्कथित वृत्तांतं श्रुत्वा मदीयं बाणमिदानीं मन्निकटेऽस्ति चेत्तेन दर्शितोत्र समागतान्सर्वान् शूरमानिन एकपदे विजेतुं शक्नुयाम् तन्ममाधन्यतया समुद्रे प्रणष्टमिति शोचन्नासीत् । तदा दैवयोगेन कश्चिद्दा-

शस्समभ्येत्य "राजन् अद्य समुद्रे मत्स्यग्रहणसमये मज्जाललग्न-मिदं कवचं कस्यापीत्यु"क्त्वा पूर्णकवचमेकं तस्मै ददौ। इदमेव राज्ञः प्रणष्टं कंकटं "तदा परकालो नष्टवस्तुप्रापकं स्वानुकूल-दैवं प्रशस्य बह्वीनां विपदामनंतरमेतदभ्युदयो मया प्राप्तः । मरणसमये मत्पित्रा मह्यमिदं दत्तं । तस्मादिदं ममातीव प्रीति-पात्रं । यत्र यत्र गमिष्यामि तत्र तत्र तेनाशून्योऽहं भवामि । क्षुब्धो महोदधिरिद मत्तो व्ययूयुजत् । इदानीं शातः पुनर्मह्यं प्रत्यर्पयत् । बहुनामोपकृतं मम समुद्रेण । ततः प्रणमामि तं । यतो मत्पितृदत्तं वस्तु पुनर्लब्धं ततो नौकाभंगं विपदं न गणयामि । "

अथ परेद्युः परकालः पितृदत्तं कवचमामुच्य श्रीना-थस्य सभा जगाम । यत्र कमलिनीपाणिग्रहणबद्धाशया समाग-तान्भुजपराक्रमशालिनश्शस्त्रविद्याविशारदान्सर्वान्स्वदोर्विक्रम - पराजितान्कृत्वा शस्त्रविद्याद्भुतानि प्रदर्शयन् रंगे विचचार । स्वयंवरेषु पतिंवरा राजपुत्रीः कामयमानान् योधवरान्सर्वान् यदा यः कोपि स्वबाहुबलेन विजेतुं शक्नुयात्तदा सएव स्वयं वरवध्वा बहुमानपात्रं भवेत् । कमलिन्यप्येतमाचारमजहती विमथितवीरकदंबकस्य परकालस्य कंठे सबहुमानं सानुरागं वरणस्रजमाबध्य तत्पराजितान्स्वगृहान्गतुमचोदयत् । दर्शनक्ष-णादारभ्य परकालस्तस्या भृशमनुरक्तो बभूव ।

अथ श्रीनाथोपि परकालस्य भुजविक्रमेणात्मगुणसंपदा नितांतमावर्जितमानसोऽभूत् । परकालस्तारानगराधीश इति श्रीनाथो न विवेद । यतस्स आत्मनो राज्याधिपतित्वं प्रच्छाद्य तारानगरवास्तव्योस्मीत्येवाकथयत् । तस्मिन्स्वदुहितादृढानुरक्तेति ज्ञात्वा अज्ञातकुलशीलादिकमपि तं स्वजामातृत्वेन ग्रहीतुमैच्छत् ।

अथ कमलिनीपरकालयोर्विवाहानंतरं कतिपयमासाभ्यंतरे "अमिताघः पंचतामुपगतः । तारानगरे सर्वाः प्रकृतयो भवतो दीर्घप्रवासमसहमाना मच्छासनोल्लंघनं कर्तुमुद्यताः । अराजकत्वभीत्या मा त्वच्छिंहासनमाक्रमितुं, प्रेरयंति भवतो विधेयोहं न तथा कर्तुमिच्छामि । अविलंबेन स्वस्थानमागंतव्यम्" इति परकालस्य सचिवेन हालिकेन लिखितं लेखमालोक्य श्रीनाथो यः कश्चित्सामान्यनर इति मतस्स्वजामाता परकालो महाराज इति ज्ञात्वा अमितमानंदमाश्चर्यं चावाप । इदानीं जामात्रा दुहित्रा स्वस्य वियोगो भविष्यतीति अंतर्वत्नी कमलिनी समुद्रयानक्लेशं सोढुमसमर्थेति श्रीनाथश्चिंतापरोऽभूत् । आशिशुप्रसवान्तं पितृगृहे स्थातव्यमिति भर्त्रा समादिष्टापि कमलिनी पतिमेवानुगंतुमैच्छत् । प्रसूतेः पूर्वं सा तारानगरं सुखेन प्रवेक्ष्यतीत्याशंसमानस्तत्पिता तस्या भर्त्रनुगमनमनुमेने । किंतु दुर्भगस्य परकालस्य समुद्रश्शत्रुरजनि ।

यतस्तारानगरतीरावतरणात्प्रागेव भयंकरो जंझावातस्समुत्थितः ः तेन कमलिनी यथा रुजाक्रांता भवति तथा वित्रस्ता । ततः क्षणांतरे कमलिन्या धात्री मंदारिकाख्या हस्ताभ्यां स्त्रीशिशुमादाय परकालमेत्य गर्भमोचनानंतरं कमलिनी मृतेति दुर्वार्तां कथयित्वा एतादृशप्रदेशे स्थातुं केवलमनर्होयं शिशुरित्यवदत् । दयितामरणवार्तां श्रुतवतः परकालस्य दुःखं वागतीतमभूत् । चिरं शोकावेगेन विसंज्ञः पपात । परिजनेन समाश्वासितो लब्धसंज्ञः । "हे देवताः प्रीत्यास्पदानि पारितोषिकान्यस्मभ्यं दत्वा पुनस्तानि किमाच्छिन्दत ।" इत्याचक्रंद । धात्री । महाराज ! क्षमामवलंबस्व । अस्मद्देव्या - एतदेव परित्यक्तं । इमां पुत्रिकामवेक्षस्व । मा विक्लबोभूः ।

परकालश्शिशुमादाय वत्से ! शांतजीवना भव । मातृमरणसमये जातासि । अस्मिन् लोके तवागमनमितरराजपुत्रीविसदृशं । इतः परं कल्याणमस्तु ते ।

चंडवातोऽतिभयंकरभंग्या प्रवातुमारेभे । अद्यापि न विरराम । नौकायां शवो विद्यते चेन्न चंडमारुतो विरमतीति मूढविश्वासा नाविका राजानं परकालमुपेत्य राजन् ! धैर्यवान्भव । त्वामीश्वरोऽवतु ।

परकालः—सविषादं । बाढं धैर्यवानस्मि । चंडवातान्न बिभेमि । स मे पूर्णहानिमकरोत् किमतः परं कर्तुं शक्ष्यति । तपस्विन्या अस्याः कृते चंडानिलश्शाम्येदित्यभिलषामि ।

नाविकाः—देव! भवद्देवीशरीरं समुद्रे क्षेप्तव्यम्। वार्धिर्महोर्मिजालैरंबरं स्पृशति। उच्चैर्घुष्यति। यावन्नौका-मृतकळेबरविमुक्ता न भवति। तावच्चंडवातो न शाम्यति। परकालो नाविकानामयं मूढविश्वासो निर्मूल इति जानन्नपि क्षमया तत्प्रार्थनामंगीकृत्य "कुरुत यथा रोचते भवद्भ्य" इति प्रत्यवदत्। मंदभाग्या एषा राजमहिषी समुद्रे प्रक्षेप्तव्या आसीत्। सांप्रतं दुःखभागयं राजा अपश्चिमदर्शनाय प्रेयस्या मुखं वीक्ष्य "प्रिये! भयंकरमरिष्टशय्यामधिरूढासि। नास्ति दीपो नास्त्यग्निः। शत्रुभूतानि भूतानि त्वां साकल्येन विसस्मरुः। मरणालंकारेण त्वामलंकर्तुमपि नावकाशो मे। प्रत्युत समुद्रे प्रक्षेप्तुं सन्नद्धः। त्वत्स्मारकचिह्नमपि निर्मातुं दुश्शकं। यतो जलशुक्तिकाभिस्सह वर्तमानां तव तनुं समुद्रसलिलान्यभिभवेयुः।

मंदारिके! सुगंधद्रव्याणि। मषीभाजनं। लेखिनीं। पत्रिकामानेतुं निस्तुलं शवभाजनमानेतुं निचोळकं चादिश। शिशुमुपधाने कुरु। मंदारिके! गच्छ। सर्वं सज्जीकुरु। अहं पुरोहितकृत्यं निर्वर्तयामि।"

यथाज्ञप्तं ते भृत्या बृहतीं पेटिकां राज्ञ उपनिन्युः। तस्यां गंधचूर्णेन कीर्णां देवीं तदाभरणानि च निदधे। "यः कोपि साधुरिमां पेटिकां दैवात्पश्यति चेदुद्घाट्य तत्रत्यां

मज्जायां भूमौ निखनितुं प्रार्थये" इत्येकां पत्रिकामपि लिखित्वा तस्या निहितवान् । स्वहस्ताभ्यामेव तां पेटिकां समुद्रे चिक्षेप । प्रशान्ते जंझावाते नौकां तार्क्ष्यनगरीं नेतुं नाविकानादिदेश । यतस्तत्र शिशोस्संरक्षणं सुष्ठु भवतीति परकालोऽमंस्त ।

अथ या निशा जंझानिलेनातिभयप्रदा आसीद्यस्यां निशायां कमलिन्याश्शवभाजनं समुद्रे क्षिप्ता तस्यां निशायां प्रभातायां सत्यामबीशनगरवासी सद्भिगम्यो जयंतनामा कश्चिद्‌गदंकारस्सागरतीरे संचरंस्तरंगैस्तीरभूमिं प्रापितां कांचित्पेटिकामद्राक्षीत् । भटैस्तां स्वगृहं प्रापयामास । तामुद्घाट्य जयते दृष्टवति सति तस्य महते विस्मयाय यवीयस्याः कस्याश्चित्सुंदर्या मृतकळेबरं दृष्टं । सुरभिगन्धिना तद्वाससा परिमळमाघ्राय तदाभरणसमुद्गकं च दृष्ट्वा "इयं महाकुलप्रसूता काचित् स्त्री । एवं श्मशानीकृतसमुद्राऽभवदित्यध्यवससौ । मंजूषाभ्यंतरे इतस्ततो विचिन्वन्कस्मिंश्चित्कोणे एकं पत्रमप्यपश्यत् । यस्मिन्नेषा तारानगरपतेः परकालस्य महिषीति लिखितम् । तादृशविपदो वैचित्र्येण विस्मयमानः मनोहराकृत्या अनया वियुक्तं तद्भर्तारं शोचन् जयंतः "परकाल! यदि त्वमद्यापि जीवसि तर्हि तव हृदयं शतधा स्फुटितं भवेत्" । सावधानं कमलिनीवदनं परीक्षमाणः "अहो! कथं प्रसन्ना तद्दृष्टिः । मृतौ नैतादृशी भवेत् ।

अविमृश्यकारिणस्ते ये भवतीं समुद्रे क्षिप्रं प्रक्षिप्तवंतः । इत्यवदत्" यतस्सा मृतेति स न प्रत्येयाय । अथ सस्वभृत्यानाहूय । "संधुक्ष्यतामग्निः आनीयंता साधिष्ठानि पुष्टिप्रदानि पेयानि । गीयतां मधुरगीतं । यानि तस्यास्संभ्रान्तं चित्तं प्रकृतिमानेतुमुपकरणीभवंति" इत्याज्ञापयत् । इयं पुनरुज्जीविष्यति । विस्मयाकुलतया विलोकयतस्तां परिवार्य संघीभूतान्नरानित्थमवोचत् । "आर्याः ! वायुप्रसरणमार्गं मापिधत्त । वायुस्स्पृशतु तद्गात्रं । एषा पुनर्जीवलोके प्रतिष्ठिता भवेत् । मूर्छितायास्तस्याः पंचघटिका नातीताः । पश्यत । इदानीं सा सप्राणा । चलत इव पक्ष्मणी । एषा वरवर्णिनी स्वदुर्दशां अस्माकं श्रावयित्वा दुःखं जनयितुं जीवेदिति" जयंतः प्राह । शिशुजननानंतर कमलिनी गाढमूर्छानिमग्ना बभूव । तादृशामवस्था दृष्ट्वा सर्वे सा ममारेति निश्चिक्युः । अपित्विदानीमस्य साधोर्जयंतस्य सादरोपक्रमेण पुनः प्राणिता । सा शनैरुन्मील्य चक्षुषी जगाद । "क्वाहमस्मि । कुत्र मम नाथः परकालः । कोयं लोकः । "

अथ जयंतस्तस्या आपतितां विपदं शनैश्शनैर्बोधयामास । यदा सा कार्त्स्न्येन प्रकृतिमापन्ना तदा स तद्भर्त्रा लिखितां पत्रिकां तदाभरणसमुद्रकं च दर्शयामास । अथ सा पत्रं वाचयित्वा "इमानि मम भर्तुस्स्वहस्तलिखितान्यक्षराणि

समुद्रे नौकायां निवेशितास्मीति यत्तदहं स्मरामि । नाहं शिशुजननमवधारयामि । इतःपरं मद्भर्तुर्दर्शनस्य दुर्लभत्वाच्छुद्धवेषं धृत्वा विरक्ता भवितुमिच्छामि । ”

जयंतः—आर्ये ! यदि ते रोचते मम गृहस्य नातिदूरे एकं देवतायतन विद्यते । तत्र शुद्धवेषधारिणी वस । अपिच यदीच्छसि मम भ्रातृपुत्री भवत्यास्सहायिनी भविष्यति । महानयं प्रसाद इति कमलिनी तस्योपदेशमंगीचकार । यदा सा स्वस्थचित्ता बभूव तदा ता देवतायतने निहितवान् । तत्र सा देवतापूजनपराऽभूत् । भर्तुस्संभावितनाशेन दुःखिता कालं यापयतिस्म ।

परकालस्स्वदारिकाया वार्धौजातत्वाद्वार्धिजेति नाम कृत्वा स्वोपकृतितोषितस्य तार्क्ष्यनगराधिपतेः क्रमयानाह्वयस्य राज्ञस्तद्भार्याया दयानिशायाश्च सरक्षणे मातृहीनशिशुं निधातुं निश्चित्य तन्नगरीं प्रापत् । अथ क्रमयानः परकालस्यापतितां जायावियोगरूपां विपत्तिं श्रुत्वा तेन समदुःख इत्थमवोचत् । “अहो मनोज्ञा भवन्महिषी अत्रानीताचेद्वयं धन्या अभूम । परकालः—आर्य ! ईश्वराज्ञा दुर्लंघ्या । समुद्रेणेवोद्धृष्टं मया । किं प्रयोजन । यथाविधि विहितं तथैवाभूत् । मच्छिशुं युष्मत्संरक्षणे निवेशयितुमिच्छामि । राजपुत्र्यः यादृशीं शिक्षामर्हन्ति तादृशी शिक्षा अस्याअपि भवता दातव्येति

प्रार्थये । अथ तद्भार्याभिमुखो भूत्वा दयानिधे दयानिशे । साध्वि । दयया मच्छिशुपोषणेन मामनुगृहाण । दयानिशा प्रभो ममाप्येका दारिकास्ति । तन्निर्विशेषं भवत्पुत्रिकामपि पश्यामि ।

क्रमयानः—महाराज परकाल ! भयंकरक्षामदिनेषु सर्वासां मद्राज्यप्रजानां भवत्कृतस्यान्नदानस्य भवच्छिशुपोषणं विहाय का वान्यां निष्कृति दातुं शक्नुयाम् । प्रभो । ममाप्य-स्त्येका पुत्रिका । सापि मे त्वत्कुमार्या नाधिकतरप्रेमास्पदा भवेत् । युष्मत्कुमारीं यद्यहमुपेक्षे तदा मत्प्रजास्तस्मिन्कर्मणि मा बलात्कुर्युः यदि तदाप्युपेक्षे तदा देवा मयि कुपिताऽशा-त्वं दर्शयेयुः" एवं परकालो दंपतीभ्यां क्रमयानदयानिशाभ्यां शिशुरक्षणेऽभयदानेन दृढीकृतो धात्रीं तद्रक्षणे निधाय स्वदेशाभिमुखः प्रतस्थे । तत्समये वार्धिजाशिशुतयास्वस्मिन्ना-पतिता विपत्तिं नाज्ञासीत् । मदारिका तद्धात्री राज्ञः प्रस्थान-समये बहुव्यलपत् ।

परकालः—मंदारिके ! मारोदीः । भर्तृदारिकाम-वेक्षस्व ।

अथ परकालस्सुखेन तारानगरं प्राप । स्वराज्यासनं भूयोऽध्यतिष्ठत् । राजा यां मृतेत्यमंस्त शोचनीया सा तस्य देवी अवीशनगरे स्थिता । तत्पुत्रिका वार्धिजायाजननात्प्रभृति स्वमात्रा न दृष्टा सा क्रमयानेन महाकुलप्रसूतरुचितविधिना

पोषिता शिक्षिता च । सा यदा चतुर्दशवर्षदेशीया तदा तत्काले विद्यमानास्सर्वाविद्याः कलाश्चाभ्यस्य तात्कालिकान्सर्वान्विदुषोऽत्यशेत । किं नरीव गातुं अप्सरा इव नर्तितुं नैपुण्यमवाप । सूच्या कौशेयतंतुभिः पुष्पाणि फलानि पक्षिणश्च सहजवस्त्वतिशायितया रचयितुं महतीं नैपुणीमाससाद । सर्वविद्यावैदुष्यसमार्जितप्रशस्तिं सर्वजनाश्चर्यपात्रीभूतां वार्धिजा वीक्ष्य क्रमयानस्य जाया दयानिशा स्वदुहितुर्मंदबुद्धित्वात्तादृशविद्यावैशारद्यं नासादितवतीति जातमात्सर्या तस्यां शात्रवमुवाह । एतां निहंतुमेकं न्युङ्क्त । तत्समय एव महाविश्वासपात्रं तद्धात्री मंदारिका ममार । वार्धिजा व्यापादनमुद्दिश्य लयनयाख्येन स्वभृत्येन सह दयानिशाया भाषमाणायां वार्धिजामृतां मंदारिकां शोचंत्यासीत् । एतद्वधकर्म कर्तुं दयानिशया प्रेरितो लयनयो महानृशंसोप्येतादृशकर्मणि प्रेरयितुमनर्हः । यतस्सवार्धिजा शीलगुणसंपदा समावर्जितमना बभूव । सा साधुवृत्तेति सोऽब्रवीद्दयानिशां । अतएव देवताभ्य उपहारीकर्तुमर्हति । स्वधात्र्या मंदारिकाया मरणेन भृशं दुःखिता इत एवागच्छति सा पश्य पश्य । किं मदाज्ञामनुवर्तितु मिच्छसि ।

लयनयः—तदाज्ञोल्लंघनाद्बिभ्यत् । आर्ये ! कर्तुं निश्चितं मया । निरुपमानायास्तस्या मृत्युरेकवाक्येनैव निश्चितः । अथ वार्धिजा पुष्पभाजनहस्ता तयोस्सविधं गत्वा एतैः पुष्पैर्मंदारि-

कायाश्मशानभूमिमास्तृणामीत्यवदत् । वसंततौ नीललोहिता-
नीमानि पाटलानि रक्तानि करवीराणि तस्याश्मशानधरण्यां
विन्यस्तानि चित्रकम्बलवत्प्रतिभान्ति। हन्त दुःखभागिन्यहम् ।
जंझावातसमये जातास्मि । मातृहीनाचास्मि संवृत्ता । अयं
लोकस्स्वजनादपकर्षन् जंझानिल इवाभाति मे । प्रतारणशीला
दयानिशा । वार्धिजे ! कथमेकाकिनी स्थिता विलपसि । क्व
गता मे पुत्रिका । मंदारिका माशोचः । अहमेव ते धात्री ।
प्रयोजनशून्येनानेन दुःखेन ते रूपं परिवृत्तिमभजत् । एहि ।
पुष्पाणीतो निधेहि । समुद्रानिळस्तान् ग्लपयेत् । लयनयेन
गच्छ । उपसेव्योयं वायुस्त्वामाह्लादयति आगच्छ लयनय ।
एनामादाय गच्छ । वार्धिजा आर्ये असन्निहितभृत्या माभव ।
कपटहृदया दयानिशा लयनयेन सह तां परित्यक्तुं सव्या-
जमिदमाह । राज्ञि परकाले त्वयि च मे महती प्रीतिः । त्वत्पि-
त्रागमनमत्रानुदिनं वयं प्रतीक्षामहे । सोत्रागत्य शोकावेगेन
परिक्षीणां चंद्रकळामिव स्थितां त्वां पश्यति चेत्त्वत्संरक्षणे वयं
श्लथादरा इति तर्कयेत् । तस्माल्लयनयेन सह गच्छ । विहर
समुद्रतीरे । भूयो हर्षमवाप्नुहि । यूनः स्थविरस्य च चित्ता-
कर्षकं त्वल्लावण्यं माप्रमोषमुपयातु । एवं तया निर्बध्यमाना
वार्धिजा मनसीत्थमचिंतयत् । गंतुं नेच्छामि । तथापि गमि-
ष्यामि । दयानिशा निष्क्रामंती लयनयमुद्दिश्य । इदमाह-
मयोक्तं मा विस्मर ।

अथ वार्धिजा स्वजननसदनं समुद्रमभितः पश्यंती। लयनय ! कि वातः दक्षिणस्या दिशो वाति।

लयनयः—न हि न हि नैर्ऋतिदिशो वाति।

वार्धिजा—मज्जननसमये वायुरुत्तरस्यां दिशि ववौ। ततो जंझानिलपीडा पितुरापतितानि दुःखानि मातृमृतिरित्येतत्सर्वं वार्धिजामनस्यपतत्। ततस्सा इत्थं जगाद। "मज्जनको दीर्घपीवराभ्या स्वबाहुभ्या नौकारज्जूराकृष्य कूपदंडानाश्लिष्य "हे नाविकाः धैर्यमवलबत" इत्याचुक्रोशेति मम धात्री मंदारिका मामवोचत्। लयनयः। एतत्कदा समभवत्।

वार्धिजा—मज्जननसमये। तदानीं वायूद्धूतसमुद्रक्षोभस्सर्वेषामदृष्टपूर्वः। अहो तत्समये नाविकानामुद्वेगः कर्णधारस्याक्रंदरवः नौकाधिपतेरुच्चैराह्वानमित्येतत्सर्वं मिळित्वा नौकाया व्याकुलत्वं त्रिगुणं चकारेति मदारिका ममासकृदकथयत्। एतद्वृत्तान्तं सर्वं तयोक्तमद्यापि मम स्मृतिपदमवगाहते। एवं भाषमाणां वार्धिजां लयनय आह। आर्ये भाषणाद्विरम। इतः परं स्तुतिभिरीश्वर प्रीणय। वार्धिजा। किमप्यजानंती। भयाद्वेपमाना। कस्तवोद्देशः।

लयनयः—ईश्वरं प्रार्थयितुं यदि किंचिदंतरं वांछसि दास्यामि। मा चिरय। ईश्वरस्त्वत्प्रार्थनां द्रुतं शृणुयात्। शीघ्रं मम विहितं कर्म कर्तुं मया प्रतिज्ञातं।

वार्धिजा—किं मा व्यापादयसि । हंत किमर्थं ।

लयनयः—मम स्वामिन्याः मनस्तृप्त्यै ।

वार्धिजा—सा किमर्थं मां घातयितुमिच्छति । नापराधलवोपि तद्विषये मयाकृत इति सुष्ठु जाने । नोक्तपूर्वं मया परुषवचनं न कस्यापि प्राणिनो हिंसामजनयम् । विश्वसि हि मम वचन । न कदाचिन्मूषको मक्षिका वा मया हतः । यदि कश्चित्कीटः प्रमादात्पादाक्रातो म्रियेत तदा शोचामि तं ।

लयनयः—मत्स्वामिन्याज्ञानिर्वर्तनमेव मम प्रयोजनं । नतूत्तरोत्तरप्रत्युक्तिः ॥

अथ तां हंतुं तस्मिन् दुरात्मनि कोशात् कृपाणमाकर्षति समुद्रदस्यवः तत्तीरेऽवतीर्य हठादागत्य वार्धिजामादाय प्रदुद्रुवुः ।

अथ वार्धिजापहर्तो सदस्युस्ता गृहीत्वा मिथिलानगरं ययौ । तत्र कस्मैचिद्दासाय तां विचिक्राय । तादृग्विपद्दशायामपि वार्धिजास्वगुणसंपदा रूपसंपदा च तस्यां मिथिलानगर्यां क्षिप्रं सुप्रसिद्धा बभूव । तया संपादितेन द्रविणेन तस्याः क्रेता धनाढ्योऽभूत् तत्रत्यबालिकाभ्यस्संगीतविद्यां नाट्यं सूचिकर्म च शिक्षित्वा ताभ्योधिगतं धनं स्वस्वामिनस्तद्भार्यायै चादात् । तस्याः पांडित्यविशेषश्चित्रकळानैपुणीमिथिलाधिपस्यानंतवर्मण-

श्श्रुतिपथमयात् । रतिप्रतिमसौंदर्यां सकलजनश्लाघनीयचरितां ता द्रष्टुं स राजा स्वयं तन्निलयमगात् । तया सह संभाषणेनानंतवर्मा महान्त प्रहर्षमवाप । स राजा वार्धिजायाः प्रशंसनीयचारित्रमितः पूर्वं श्रुतवानपि प्रत्यक्षदर्शनादधिकतरं जज्ञे । सर्वदा भवत्या ह्यपरित्यक्तसत्पथया अजहदुद्यमया च भवितव्यमित्युपदिश्य राजा अनंतवर्मा स्वगृहमगात् । वार्धिजा सदसद्विवेके । आभिजात्ये शरीरलावण्ये चाद्वितीया तस्या अपकृष्टस्थितिमप्यगणयित्वा सर्वथा ता परिणेतुं स राजा आशशंसे । सा सत्कुलजेत्यमंस्त । यः कश्चित्तदन्वयजन्मवृत्तातं ता पृच्छति चेत्सा कुत्रचिन्निषण्णा रोदितिस्म ।

अत्रातरे तार्क्ष्यनगरे लयनयो दयानिशाया भीतो "मया वार्धिजा निहतेति तस्यै न्यवेदयत् । अथ सा दुष्टयोषित्तन्मरणवार्तां सर्वतस्संप्रकाश्य और्ध्वदेहिकक्रियाः कारयंतीव दर्शयंती उज्ज्वलमेकं स्मारकचिह्नं निरमापयत् । चिरात्स्वदुहितुर्दर्शनाभावात्ता द्रष्टुं स्वगृहमानेतुकामः परकालोऽमात्येन हालिकेनानुयातस्तारानगरात्तार्क्ष्यपुरं समुद्रयानेन गतः शैशवे यद्दिवसे ता दारिकां क्रमयानतत्पत्न्योर्हस्ते न्यास इव दत्तवान् तद्दिवसात्प्रभृति सता नाद्राक्षीत् ततः कुमारीदर्शनोत्कंठया नौकावतरणसमनंतरमेव क्रमयानस्य गृहं गत्वा तं वीक्ष्य "क गता मे पुत्री"ति पप्रच्छ सा दिवं गतेत्युक्तस्त-

त्स्मारकचिह्नं च दर्शितो दुःखेन महता स्फुटितहृदयो मूर्छाम-वाप । चिराल्लब्धसंज्ञस्तद्देशदर्शनमपि सोढुमशक्नुवन् प्रवहण-मारुह्य तार्क्ष्यनगरीतः प्रतस्थे । नौकाप्रवेशदिनादारभ्य स राजा दुःखातिशयेनावचनो मूक इव जडइवोन्मत्त इव बभूव ।

अथ तार्क्ष्यनगरात्तारापुरं गच्छंती नौका मध्येमार्गं मिथिलां प्राप । यत्र वार्धिजा स्थिता । मिथिलेशोऽनंतवर्मा तीराद्राजनौकामालोक्य "कोवा तस्यामास्ते" इति जिज्ञासुः वहित्रेण स्वकुतूहलापनयनाय धूमनौकापार्श्वं जगाम । पर-कालस्य मंत्री हालिकस्तमत्यादरेण प्रत्युद्गम्य स्वागतं व्याहृत्या-वदत् । "आर्य तारानगरादागता नौका । अस्मत्प्रभुं परकालं तत्रैव नयामः । सदारपुत्रिकावियोगदुःखेन बलवदर्दितः । मासत्रयात्प्रभृति न केनापि भाषते नाहारं स्वीकरोति । संततं चिंतासंततिं दीर्घीकरोति । तद्दुर्दशाया वक्तुश्श्रोतुरपि मनो द्रवति अथानंतवर्मा दुःखितं तं राजानं सकृद्द्रष्टुं हालिकस्यानुज्ञां ययाचे । हालिकेनाभ्यनुज्ञातोऽनंतवर्मा परकालं दृष्ट्वा । "जयतु जयतु महाराजः" रक्षंतु त्वां देवताः" इत्यवदत् । किंत्वस्या भाषणं निष्फलमेवाभूत् । राजाप्रतिवचनं न ददौ । स्वनिकट-मागतमागंतुकं द्रष्टुमपि नैच्छत् ।

अथ मिथिलेशः वार्धिजा अत्रागत्य मधुरया वाण्या भाषते चेन्नूनमसौ प्रत्युत्तरं दद्यादिति मत्वा तामवानेतुमनुज्ञातो वार्धिजामानिन्ये। सा नौकामारुह्य दुःखेन क्वचित्कोणे निषण्णं पितरमद्राक्षीत्। नौकाश्रितास्सर्वे तां विलोक्य चिरपरिचिता इव प्रीतिपुरस्सरं तस्यै स्वागतं व्याजह्रुः। इयमतीव रम्यदर्शना प्रमदेति चक्रंदुः। अनंतवर्मा तेषां स्तुतिवाचश्श्रुत्वा भृशं ननंद। सा सत्कुलप्रसूतेत्यमंस्त। तां भार्यात्वेन वरीतुमकामयत।

अनन्तवर्मा—वार्धिजे अत्र विषादगृहीतमानसः कश्चिन्महाराजोस्ति स न केनापि सम्भाषते किं तव नैपुण्येन तं स्वस्थचित्तं सुखित कर्तुं शक्नोषि ?।

वार्धिजा—मां मच्चेटीं च वर्जयित्वा इतरेषां तन्निकटे प्रवेशो न दीयते चेत् तं प्रकृतिमानेतुं यथाशक्ति प्रयतिष्ये। मिथिलाया मप्रमत्ततया स्वजन्मवृत्तान्तं निगूहितवती सा "अहं राजवंशोत्पन्ना इदानीं दासीभूतास्मीति वक्तुं ह्रीणा आत्मन उन्नतपदभ्रंशं निवेदयन्ती स्वभाग्यविपर्ययं परकालायाकथयत्। तं स्वपितरं जानंतीव तस्य पुरतस्स्वदुःखं साविस्तरमुवाच। एवं कर्तुं को हेतुरिति चेद्दैवोपहतान्समदुःखसुखान्कर्तुं तदग्रे स्वविपत्तिवर्णनान्नान्यत्साधनमास्ति। तस्या मधुरस्वरोऽवसन्नं राजानमुदबोधयत् चिरान्निमीलिते अक्षिणी स उन्मिमील। वार्धिजा मुखं दृष्ट्वा तस्यां स्वमहिष्याः पूर्णसादृश्यमुपलक्ष्य स राजा

परं विस्मितोऽभूत् । प्रबुद्ध इत्थमवदत् । "मत्प्रेयसी एतत्कन्यकेवासीत् । अनया मत्कुमार्या भवितव्यं । नतभ्रु । शरच्छशाकनिभं पुंडरीकदळायताक्षं तन्मुखं पुनरधुना दृष्टं । "कुमारि ! कुत्र निवससि । पितरौ कौ । अहमिव त्वमपि विपन्नास्मीति वदसि । तव वृत्तांतं मे कथय । मम सहिष्णुतायां सहस्रांशं भवती जानातीति मन्ये । पुंसेव त्वया दुःखं सोढं । मयातु स्त्रियेव । आख्याहि तव वृत्तांतं प्रार्थये भवतीं । आगच्छ मत्पार्श्वे निषीद । मम नाम वार्धिजेति तया कथिते परकालः विस्मितोऽभूत् । यतो न तत्सामान्यनामेति स जानाति । वार्धौ जातेत्यर्थे तेनैव तन्नाम तस्या विरचितं ।

परकालः—अहो मां विडंबयासि । लोकस्य मां परिहासास्पदं कारयितुं क्रुद्धेन केनचिद्दैवेनात्र प्रेषितासि ।

वार्धिजा—आर्य ! क्षमस्व । अथवा नेतः परं कथयामि ।

परकालः—वत्से । कथय कथय । अहं तितिक्षुरस्मि । मन्नाम वार्धिजेति कथनात्कथमहमुद्विग्नोस्मि त्वं लेशमपि न जानासि ।

वार्धिजा—तन्नाम अधिकारवता राज्ञा मत्पित्रा दत्तं ।

परकालः—राजपुत्री भूत्वा वार्धिजाभिधानं वहसि । अपि त्वं मानुषी प्रत्यक्षेण न दिव्यागना । ब्रूहि । कुत्रजातासि । वार्धिजेति नाम कथं लब्धं ।

वार्धिजा। वार्धौ जातत्वाद्वार्धिजेति नाम लब्धं। मम माता कस्यचिन्महीपतेः पुत्री। मम प्रसूत्यनंतरं मम माता मृता। एतद्वृत्तातं मम धात्री मदारिका बहुवारं मह्यमकथयत्। राजा मत्पिना तार्क्ष्यनगरे क्रमयानतत्पत्न्योस्संरक्षणे मा निधाय स्वदेशं गतः। क्रमयानस्य भार्या क्रूरहृदया सती मां घातयितुमयतत। अत्रांतरे दैवात्समुद्रदस्युसंघः हठादागत्य मा विपदो निस्तारयामास। तैरेवेमां मिथिलां प्रापिता। आर्य! किमर्थं रोदिषि। किं मा वंचनपरेति मन्यसे। राज्ञः परकालस्य तनूजास्मि। स यदि जीवति। ततः परकालो हठादुद्भूतेनानंदेन संत्रस्तः वार्धिजोक्तिषु संदिहानस्स्वकंठरवश्रवणेन प्रहृष्टान्स्वकिंकरानुच्चैराजुहाव। मंत्रिवरं हालिकमुवाच। हालिक! मा गाढप्रहारविक्षतं कुरु। प्रकृतमनोव्यथां मा पुनः प्रापय। नोचेदयमानंदमहोदधिर्मामाप्लावयन् दर्शितनिजौद्धत्यः मां वशीकृत्य मारयति। हे वार्धिजे! एहि। समुद्रे जातासि। तार्क्ष्यनगरे निखातासि। पुनस्समुद्रे दृष्टासि। हालिक! जानुभ्यां स्थित्वा देवान्वंदस्व। एषा वार्धिजा। जाते! आशिषस्ते सन्तु। हालिक! नूतनवासासि मां परिधापय। नृशंसया दयानिशया दिष्ट्या न व्यापादिता। युष्मद्राज्ञीति तां व्यवहरत। अथ मिथिलेशमनंतवर्माणं दृष्ट्वा कोसावित्यपृच्छत्। हालिकः। महाराज भवंतं स्वजनवियोगदुःखितं द्रष्टुमागतः।

परकालः—आर्य ! परिष्वजे भवंतं । देहि मे वासांसि । तानि परिधायाहं मनोहरतया दृश्येय । हा भगवन् ! मम दारिकामाशिषा योजय । शृणु । अहो कीदृशी गीतिः । केनचिद्दयालुना देवेन प्रेषिता भवेत् । अथवा तद्गानं भावनाकल्पितं स्यात् ।

हालिकः—महाराज न किमपि श्रूयते ।

परकालः—न किमपि । तदुपरितनलोकेभ्यो निस्सरति ।

यत्र कुत्रापि गानध्वन्यभावादानंदपारवश्येन परकालस्य बुद्धिश्चलितेत्यनंतवर्मा निश्चित्येदानीं तेन सह विवादो निष्फल इत्यध्यवससौ । नूनं गानं श्रूयत इति ते तमूचुः । निद्रा मम चेतना मुकुळीकरोतीति वदंतं तमनंतवर्मानेतुमुपदिदेश । आनंदेन जडीभूतचैतन्यो स परकालो गाढसुषुप्तिनिमग्न आसीत् । वार्धिजा निद्राणं पितरमन्वास्य तस्थौ ।

अथ परकालो निद्रायां स्वप्नं ददर्श । येनाबीशनगरीं गंतुं निश्चिकाय । अबीशनगरीनिवासिना देवता डयानाभिधा तस्य स्वप्ने साक्षात्कृत्य “रे परकाल ! अबीशनगरे स्थितं मदालयं प्रत्यागंतव्यं । तत्र त्वज्जीवितचरित्रं त्वय्यापतिता विपदः मत्पुरत आख्यातव्य । यदि मदाज्ञामनुवर्तसे परमश्रेयोलाभस्ते भविष्यतीति मद्रजतमयधनुस्पृष्टिकया शपे । इत्य-

वदत् । तथा देवताज्ञानुसारेणाबीशनगरीं गंतुमुद्युक्तो बभूव । ततः परकालः प्रबुद्धोऽनिर्वचनीयं स्वास्थ्यं लब्ध्वा स्वप्नवृत्तांतं देवताज्ञानुवर्तने स्वनिश्चयं च वार्धिजादिभ्योऽकथयत् ।

ततोऽनंतवर्मा परकालं नौकाया अवतीर्य स्वनगर्यां मिथिलाया स्वकृतयथोचितातिथ्यं स्वीकर्तुं प्रार्थितवान् । परकालस्तन्निमन्त्रणं मुदा अंगीकृत्य तेन सह द्वित्राणि दिनान्यवस्थातुमूरीकृतवान् । मिथिलापुरीपालकस्तद्दुर्दशायां यामत्यादरेण संरक्षितवांस्तस्याः पितरं महाराजं सभाजयितुं तत्समये यादृशानुत्सवान्कृतवान् यादृशमतिथिसत्कारं रचितवान् तत्सर्वमस्माभिर्मनसा अभ्यूहनीयम् । विपद्दशायां स्वदुहितरि तत्कृतसंरक्षणं तत्कृतकर्तव्यानिर्देशे वार्धिजाया अप्रतिकूलत्वं च ज्ञात्वा परकालः वार्धिजानंतवर्मणोः विवाहांगीकारात्पूर्वं अबीशनगरीं देवतादर्शनार्थं मया सहागंतव्यमित्यनंतवर्माणमादिदेश । कतिपयदिवसानंतरं परकालस्तद्दुहिता अनंतवर्मा चेति त्रयोऽनुकूलवायुप्रणुन्नया नौकया सुखेनाबीशनगरीं प्रापुः ।

अथ सपरिवारे राजनि परकाले देवतालयं प्रविष्टे सति कमलिन्याज्ञाता जयंत इदानीं वर्षिष्ठः तदालयपरिचारिकावेषधारिणी कमलिनी च मुखमंटपं प्रविविशतुः । जायावियोगाकुलमानसतया यापितैर्बहुभिर्वर्षैर्विपर्यासितरूपस्य परकालस्याकृतिं तत्कंठरवं च प्रत्यभिज्ञाय तस्य संभाषणमानंदेनाश्चर्येण शुश्राव कमलिनी ।

मुखमंटपे परकालेनोक्तानि वचांसीमानि । "स्वस्त्यस्तु ते भगवति डयाने! अहं तारानगराधिपः । स्वदेशादागत्य पंचफलनगरे तत्पुराधीशस्य पुत्रिकां कमलिनीनाम्नीमुदूढवान् । सा दारिकामेकां प्रसूय समुद्रे मृता । सा कुमारी तार्क्ष्यनगरे क्षुमयानस्य भार्यया दयानिशया पोषिता चतुर्दशवर्षदेशीया संवृत्ता । तदा क्रूराशया दयानिशा तां हंतुमयतत । अपितु तदनुकूलदैवेन मिथिलामानीता । अहं तत्तीरमार्गेण प्रवहणेनागच्छन दिष्ट्या तामहं नौकायामद्राक्षम् । तत्र सा मां पितरं प्रत्यभिज्ञाय "तवास्म्यहं पुत्रिकेति" न्यवेदयत् ।

अथ कमलिनी तद्वचश्श्रवणादुत्पन्नमानंदसागरमात्मन्यमांतं निरोद्धुमशक्ता "महाराज! परकालस्त्वम्" इत्याक्रोशंती मूर्छिता अपप्तत् ।

परकालः—किमभिप्रैति सा । मरिष्यति । आर्याः परित्रायध्वमेनाम् ।

जयंतः—डयानायाः पुरतस्त्वदुक्तं सत्यं चेदियं तव भार्या ।

परकालः—नास्ति मे भार्या । आभ्यामेव हस्ताभ्यां तां समुद्रे प्राक्षिपम् ।

ततो जयन्तस्तदधिगमप्रकारं तस्मै सविस्तरं कथयित्वा डयानाया आलये तां परिचारिकापदव्यां निवेशितवानस्मीत्याचख्यौ ।

इदानीं कमलिनी पुनः प्रकृतिमापन्ना "महाराज! किं नासि परकालः । स इव भाषसे । स इव दृश्यसे । भवत्संभाषणे जंझामारुतं जननं मरण च कथितवानसि ।

परकालः—भृशं विस्मितः । मृतायाः कमलिन्याः कंठध्वनिः कथं पुनश्श्रूयते । कमलिनी । महाराज! या समुद्रे निमग्ना मृतेति संभाविता सैवास्म्यहं कमलिनी ।

परकालः—भगवति डयाने! सत्यासीति सभक्तिसाश्चर्यमाचक्रंद ।

कमलिनी—सुष्टु जानेहं भवंतं । पंचफलनगरे अस्मत्प्रस्थानसमये मत्प्रित्रा ते दत्तमिदमंगुळीयकं त्वदंगुळ्यां पश्यामि ।

परकालः—भो देवाः इदानीं भवदनुग्रहातिशयेनातीतानि दुःखानि स्मृत्वा आत्मानं विनोदयामि ।

कमलिनि! गाढाश्लेषं वितर । वार्धिजा । मम मातुरुरसि ससंभ्रममात्मानं पातयितुमुत्कंठते मे हृदयं ।

परकालः—कमलिनि! पश्य । या त्वद्गर्भात्संभूता या समुद्रेण दत्ता अत एव या वार्धिजेत्यभिहिता ता तव पुत्रिकामवेक्षस्व ।

कमलिनी—आनंदपरवशा पुत्रिकामालिंगति ।

तदा परकालो देवतासान्निध्ये जानुभ्यां स्थित्वा डया-नामुद्दिश्य । भगवति ! स्वप्ने भवत्यास्साक्षात्कारात्परमनुगृहीतोस्मि । प्रतिदिनं ते उपहारान्समर्पयामि ।

ततः परकालो भार्याया अनुमतिं गृहीत्वा श्लाघ्यगुणायानंतवर्मणे स्वां दुहितरं विवाहे दातुं प्रत्यशृणोत् ।

एवं विपदाक्रांतानामपि परकालतत्कलत्रतनयाना सद्वृत्तं, क्षमा, स्थैर्यं धैर्यं च लोकस्योदाहरणभूतान्यभवन् । उदारचरितस्य मंलिप्रकांडस्य हालिकस्य सत्यसंधत्वकृतज्ञत्वविधेयत्वादिगुणगणः लोके नान्यस्मिन् दृश्यते । अन्यस्य दुर्दैवात्स्वस्य राज्यप्राप्तौ समुपस्थितायां स्वलाभमपि परित्यज्य न्याय्यं स्वामिनमानाय्य कोवा सिंहासनमारोपयति । परोपकृतिरवश्यं कर्तव्येति ज्ञानसहितं सुजनत्वं देवस्वभावोचितमिति जयन्तस्य चरितेन बोधितास्स्मः।क्रमयानस्य दुष्टजाया दयानिशा स्वदुष्टताया अनुरूपं फलं प्रापिता । तार्क्ष्यनगरनिवासिनस्सर्वे परमोपकारिणो महोदारस्य परकालस्य दुहितरं वार्धिजां हंतुं कृतोद्यमेति श्रुत्वा कोपोद्दीपिता वैरनिर्यातनाय संघशउत्थाय तद्गृहेऽग्निं निक्षिप्य तौ दंपती तद्गृहोपकरणानि चादहन् । तत्कृतघोरकर्मणस्सदृशोयं दंड इति देवा अपि जहृषुः ।

॥ परकालचरितं समाप्तम् ॥

---

## 17. Story of Othello—(उत्तालचरित्रम्.)



Dramatis Personæ.

1. Othello = उत्तालः-कथानायकः,
2 Desdemona = दोपद्मना उत्तालस्य भार्या.
3 Brabantio = प्रबन्धुः दोषद्मनायाः पिना.
4 Cyprus = सीप्राद्वीपम्.
5 Iago = अयागः.
6 Cassio = कौशिकः.
7 Montano = मन्थानः.

## ॥ उत्तालचरितः ॥

### ( STORY OF OTHELLO )

आसीद्विनिशानगर्यां प्रबंधुनामा कश्चिदिभ्यो राजकीयसभास्तारः । बभूव तस्यैका दुहिता दोषदमनानाम चारुसर्वांगी । अंकुरितप्रथमयौवनायास्तस्या रूपसम्पत्तिर्धन-संपत्तिश्च बहूना कुलीनयुवमनःकुरंगाणामानायतामवापतुः अपितु तुल्यशीलवयोरूपेषु स्वदेशीयेषु तेषु प्रार्थयितृषु न कोप्यासीद्यस्मिन्सा स्वानुरागमाविष्कुर्यात् । यतोऽरूपहार्या गुणपक्षपातिनी उदारशीलेयमभिजातकुमारी कंचिद्यवनयुवानं तमालसच्छायं पितुः प्रणयिनं तेन स्वगृहमानीयानेकवारं ग्राहितातिथ्यं उत्तालनामानं श्लाघनीयापूर्ववृत्तया भाववृत्तेर्ल-क्षीकार । एवमुत्तालं दोषदमना पतिं वृतवतीति नोपालंभ-नीया । स युवापि न तस्या अननुरूपो वरः । शरीरस्य कार्ष्ण्यं वर्जयित्वा न किमप्यवद्यं तस्मिन् । यवनजात्या लब्धजन्मतया नासीत्कुलीनता तस्य । सतन्मनोलुटाकैस्सर्वै-रनवद्यगुणैः पूर्णः । स योधवरो विक्रांतो महासाहसिकश्चासीत् । यवनदेशीयैर्विषसमरेषु निजदोर्दंड प्रचंड पांडित्यस्य हेतोर्विनि-शाधिपतिना सर्वसैन्यानामाधिपत्येऽभिषिक्तः । बहुमानितो

राजवल्लभश्च बभूव । स बाल्यात्प्रभृति नानादेशपर्यटनकामो वर्तते । प्रायशः प्रमदानां साहसिकानुरक्तत्वाद्दोषदमनापितस्य देशयात्रासु तत्कृतानि साहसकृत्यानि श्रोतुमभिलषंती यथास्मृति तानि सर्वाणि कथयितुं तमेकदा प्रार्थयाचक्रे । तत उत्तालस्त्वेन कृतान्यायोधनानि अवस्कंदनानि शात्रवाभियोगान् स्थले जले च तस्यापतिता विपदः सुरंगाप्रवेशसमये मृत्युमुखात्कथमप्यात्मनो विमुक्तिं मदोद्धतैश्शत्रुभिर्जीवग्राहं गृहीतः कथ विष्टिकर्म कारित इत्यादिवार्ताभिस्संवर्धितकुतूहलरसान् तत्तद्विदेशेषु तेन प्रत्यक्षीकृतानां अपूर्वविषयाणां अरण्याना मरुधन्वनां विचित्रतरभूधरकंदराणा, दृषत्खनीनां, शिरश्शेखरीकृतपयोधरपटलाना महीधराणां गण्डशैलानां कबंधाकृतिभिरुपलक्षिताना पुरुषादकिराताना वृत्तांताश्चाशेषतस्तस्यै कथया मास । यथेयमंतरांतरा गृहकार्यनिर्वर्तनाय सखीभिराहूता क्षणव्यवधानेनापि समुत्पन्नमंतरायमसहिष्णुः पुनश्चिरोपोषिताभ्यामिव श्रवणांजलिपुटाभ्यां तन्मुखांबुजगलितमंजुलवाङ्मरंदं पपौ। तथैताः कथास्तस्या बुद्धिगजस्यालानबिभूवुः । एवं तस्याः कुतूहलेन स लब्धावकाशो भागशश्श्रुतं स्वचरित्रं कार्त्स्न्येन वर्णयितुमेकदा तया सम्प्रार्थितः । यथा सा सरोमांचा सवेपथुस्सबाष्पोद्गमाऽभूत्तथा बाल्येऽनु भूतान् क्लेशानवर्णयत् । कथांतेसाऽन्तस्संधुक्षितमनोभवाग्निसमुद्दीपितैर्मनोऽनुरागसूचकैर्दीर्घनिश्वासप्र-

वंधैस्तं सफलश्रममकार्षीत् । अवादीच्च सा मशपथ नजातु चिन्तयेदृशमतिलोकमत्यद्भुत करुणार्द्रं चरित्रमाकर्णितमिति ।

एव शालीनतासहकृतमनस्संवननमुखचद्रलावण्येन कमनीयकपोलतलारुणिम्ना आवेदिते दोषदमनायानिर्जेंगिते सव्याजं ज्ञाताशय उत्तालस्स्वानुरागद्वारमपावृणुत । अस्मिन्महार्घे समये दोषदमना तमुपांशु विवोढुं स्वाभिप्रायं व्यानज । प्रबंधोस्तु मनोदोषदमनामुत्तालाय दातुं न प्रववृते । कुतः वधूबधुचित्ताकर्षकं धनं वा रूपं वा किमपि तस्य नासीत् । तदानींतनविनिशानारी सामान्यमिव स्वदुहितार्यचिरेण कंचिद्राजकीयसभाप्रविष्ट वा शुभोदर्कं वा युवानं वरिष्यतीत्याशंसमानस्तस्यास्स्वाच्छद्यमेवानुमेने । अपित्वस्मिन्विपये स वंचितः । सा तस्मिन् श्यामलवर्णे यवनयूनि भृशमनुरक्ता । तस्याहृदयं धनं च तच्छौर्यधैर्यादिगुणेभ्यः पूर्णमूल्यं कल्पयामास । यथा सा विनिशानगरवासिनस्सर्वान्मनोहराकृतीन कुलीनान्यूनोप्यनादृत्यान्येषाममनोज्ञमपि तस्य नीलवर्णस्यैव रूपमभ्यधिकं प्रशशंस तथा तस्मिन्नासक्ता । तयोर्विवाहो रहसि संवृत्तोपि नातिचिर निगूह्यमानस्तस्या वर्षीयसो जनकस्य श्रवणगोचरतामियाय सोपि "असावुत्तालकोऽनात्मज्ञो मत्कृतातिथ्योपकारस्मृतिमपि दूरीकृत्य मदनुमतिं विना मुग्धां क्षीरकंठीं कोमलांगीं मत्पुत्रिका मणिमंत्रौषधीनां प्रभावेन

विमोह्यात्मनः पत्नीभवितुं स्ववशं निनायेति मत्वा तस्मै क्रुध्यन् तस्य दंडं विधातुं राजसभासद्भिर्मंत्रयति स्म । अथै-तस्मिन्संकटसमयेऽकस्मात्तथा संपपात किल । यथोत्तालस्य साहाय्य विनिशापतिरव्यवधानेनापैक्षत । यतो विनिशाराज्यां-तर्गतं शत्रोर्दुरधिगमं सीप्राद्वीपं पुनस्तस्मादाक्रष्टुकामास्तुरुष्का महता युद्धनौकासैन्येन तद्वीपं वशीकर्तुं तदभिमुखं प्रस्थिता इतिप्रवृत्तिरश्रूयत । अस्मिन्व्यतिकरे तुरुष्कयोधैः प्रतियोद्धुं तद्वीपपरिरक्षणधुरं वोढुं चोत्तालकएव समर्थइति सर्वे राष्ट्राधिकारिणो युगपदुज्जुघुषुः । तत उत्तालो राज्ञा समाहूतः सभासदा पुरत आत्मानं दर्शयामास । स एकधा राजकार्य-निर्वहणतत्परोन्यथा विनिशाराजशासनानुगुण्येन कन्यादूषण-रूपवधार्हापराधेन दंड्यश्च संजातः । प्रबंधोस्तस्य परिणतवय-स्कत्वेन राजकीयसभायां लब्धवर्णत्वेन च सर्वे सभासदस्तद्वशं गतास्तस्मिन्कृतगौरवास्तेनोपन्यस्तमखिलं सावधानमश्रौषुः । अपित्वतिमात्रं क्रुद्धोसौ वृद्धउत्ताले दोषदृढीकरणाय बहून् दृष्टातान्मिथ्याभियोगाश्चोपपादयन् मर्यादातिक्रमणेनाभियोगं प्रावीवृतत् । अथोत्तालोपि प्रत्युत्तरं दातुमाकारितस्त्वस्मिन् । दोषदमनाया अनुरागोत्पत्तिं तस्या निजानुरागप्रदर्शनं पूर्वोक्त-कथावर्णनैस्तस्याः प्रलोभनमित्येतत्सर्वमादितः प्रभृति राजसन्न-धावकृत्रिमेन वाक्पाटवेन स नृपाणां सर्वेषां सामाजिकानां

मनांस्यावर्जयन्नगूढमव्याजं तथा कथयामास यथाप्राड्विवाक-पदाधिरूढो राजापि तच्छ्रुत्वा तदुपन्यासविशुद्धत्वपहृतमानसः "वयमप्यस्य कथायाः श्रवणेनेदृशीमवस्थां गमिताः किमुतानेनाविदितलोकतंत्राया मुग्धायास्त्वत्पुत्र्या हृदयमहारीति प्रबंधुमभ्युपगमय्य तमुत्तालं निरागसं निरणैषीत् । तदा सामाजिकाः कामिजनसामान्यैः ऋजूपायकौशलैरेवोत्तालो दोषदमनाहृदयमाचकर्ष नतुमंत्रमायादिभिरिति सुस्पष्टं बुबुधिरे । तथाविधमधुरकथावर्णनानैपुण्यमेव तस्याःश्रवणेंद्रियविमोहने तेन प्रयुक्ता माया न त्वन्यदिति निश्चिक्युः । अत्रांतरे दोषदमनापि राजसन्निधिमुपेत्य उत्तालप्रोक्तं सर्वं तथ्यमित्यभ्युपजगाम । बभाण च "भोस्तात ! विद्याजन्मनोर्हेतौ त्वय्यहं स्थिरभक्तिरस्मीति प्रतिजानीयाम् । तथापि यथा मज्जनन्या निजजनकाद्भवान्प्रेयानभिमततरस्तथा भवतोपि मम प्राणदयितोयं स्वामी वल्लभतर इति किं न विभावयसीति" ॥

ततोसौ जरठराजवल्लभः प्रत्युत्तरं दातुमसमर्थः दीनस्वरेण यवनमाहूय सर्वलोकप्रत्यक्षं तस्मै स्वदुहितरं प्रायच्छत् । अवोचत च । "तां निगृहीतुं यद्यहं स्वतंत्रश्चेदभविष्यम् तां सर्वात्मना दूरे व्यसर्क्ष्यम् । अपत्यांतराभावाद्भृशं संतुष्टांतरंगोस्मि । मम यद्यपरापुत्रिकास्ति चेदनया दोषदमनादुष्प्रवृत्तया निर्घृणो भूत्वा तामहं निगळेन बध्नीयामिति" ।

अथ शनैरेवमतिवाहितेऽस्मिन्कृच्छ्रे समुपस्थिता उत्तालस्य दंडयात्रा यथेतरमनुष्या निसर्गतोऽन्नपानाभिरुचयो भवति तथायमुत्तालश्शस्त्राजीवितया युद्धक्लेशानुभवाभिरुचिरासीत् सीप्राद्वीपयुद्धसन्नाहे बद्धपरिकरो गमनाय मतिं चकार। दोषदमनापि दयितचित्तानुवर्तनमेव बहुमन्यमाना नवोढा जनमनीषितेषु क्षुद्रविषयोपभोगेष्वदत्तचित्ता सोल्लासं भर्त्रनुयानमंगीचकार। यावदेतौ जायापती स्थलेऽवतीर्णौ तावदेव तुरुष्काणां युद्धनौसैन्यमकांडचंडवातेनेतस्ततो विद्रावितमिति शुभोदंतोऽश्रावि। एवं दैवात्सीप्राद्वीपं शात्रवाभियोगभयशंकातिपतितमासीत्। किन्तूत्तालेनानुभविष्यमाणं संप्रहारमितः परं प्रस्योष्यते। तदित्थम्। निरागासि तत्प्रियायां पापाशया द्रोहबुद्धयः केचन तद्विद्विषः वैदेशिकेभ्योवा पाषंडेभ्यो वा स्वभावेन क्रूरतरास्संजाताः। अस्य चमूपतेरुत्तालस्य सर्वेषु सुहृत्सु कौशिकाख्यादन्यो नासीत्तदन्तरंगो रहोविस्रंभपात्रम् रसकौशिको युवा योधः विलासी रसिकः कामिनीमनोहारिगुणालापः वावदूकश्च। नूनं तादृशी तस्य रूपसंपत्। यया कश्चिदुत्तालविधो युवजानिर्वर्षीयानसूयतितस्मै। उत्तालस्त्वसूयारहित उदारश्च स्वयं न कदाचिदनार्यं कर्म चकार। दोषदमना प्रार्थनाव्यापारे तं कौशिकमुत्तालः कुट्टनीपदे न्यवेशयत्।

यत उत्तालो मधुरैर्वचोभिस्त्रीणां चित्तं रंजयितुं स्वयमक्षमस्तच्चित्ताकर्षणानुगुणचातुर्यं कौशिकेऽस्तीति विज्ञायात्मनः कृते ता प्रार्थयितुं वारं वारं तं तत्सन्निधिं प्रजिघाय। तादृशी निर्व्याजसरळता यवनशूरस्य शीलचंद्रे न कळंकः प्रत्युतालंकार एव। सर्वकार्येषु स्ववल्लभस्य प्रत्यनंतरीभूतं विस्रभालापेष्वभ्यंतरमेनं कौशिकं साध्वीकुलीनादोषदमनापि व्यश्वसीदिति न चित्रं। यतः कुलकुमारीजनानां भर्तृसखेषु स्नेहानुदर्शनं युज्यते हि। परिणयानंतरमपि ताभ्यां दंपतीभ्या तस्य विषये पूर्वप्रतिपत्तिरेव दर्शिता। न किमपि वैषम्यम्। कौशिकोपि प्रतिकलं तन्निकेतनमभिगम्य स्वैरालापैर्गंभीरस्वांतं निजमित्रमुत्तालमानंदयत्। वाग्यतजल्पाकावुत्तालकौशिकौ परस्परविरुद्धशीलौ बाधकस्वस्वशीलपरित्यागेन तेषु तेष्ववसरेषु कामपि निर्वृतिमीयतुः। विवाहात्प्रागिव दोषदमनाकौशिकौ मिथो हसित्वा नर्मगर्भं जजल्पतुः। एवं परिवर्तमानेषु दिवसेषूत्तालः कौशिकमचिरात्सेनाध्यक्षपदस्य सन्निहितं धुरीणैकनिर्वाह्यं सेनापतिप्रतिनिधेः पदमुदनीनमत्।

कौशिकादात्मनः प्रबलतराधिकारोस्तीति मत्वा अयागः तस्योच्चपदप्राप्त्याक्रुद्धस्तस्मि न्जातमत्सरो बभूव। स सर्वदा स्त्रीगोष्ठीलंपटो युद्धकळानभिज्ञः सेनायाव्यूहीकरणं न जानातीति तं तिरश्चकार। अयागः कौशिकं कौशिकपक्षपातित्वादुत्तालं

च दिद्विषे। उत्तालो मम जायाममलाख्यां कामयत इति शंका-परश्चासीत्। मनः कल्पित कोपोत्तेजनैरयागस्य कपटप्रबन्ध-प्रणयनचतुरं मनो वैरानिर्यातनायैकं दारुणमुपायमालुलोचे। येन कौशिकोत्तालदोषदमनास्त्रयो विनाशमुपगच्छेयुः।

अयागोऽतीव चतुरो मायावी मनुष्यस्वभावज्ञः। मनोऽरुंतुदासु मनुष्यस्य सर्वासु व्यथासु स्वभार्यायाः परपुरुष-संपर्कजनिताभ्यसूया शरीरोपतापादतिरिच्यत इति स सम्यक् जज्ञौ। उत्तालस्य मनसि कौशिकविषये शंकामुत्पादयितुं तस्य यत्नस्सफलो भवेद्यदि तदा वैरनिर्यातनाय तदेवातिप्रौढोपाय इति मेने। स एव कौशिकस्य वा उत्तालस्य वा उभयोर्वानिधने पर्यवस्यतीत्यमंस्त।

सभार्यस्य चमूपतेरुत्तालस्य सीप्राद्वीपप्राप्तिश्शत्रूणां च पलायनं तद्द्वीपवासिनां पर्वदिवसहेतुरभूत्। तत्रत्यास्सर्वे सोल्लासा उत्सवमकार्षुः। सर्वे मधुपानमत्ता अभूवन्। मधुधाराः प्रसुस्रुवुः पानपात्राणि सर्वतः प्रचेलुः। यथा पदातयोऽतिपानात्परस्परं कलहायमानास्तद्द्वीपवास्तव्यानां भय-जनका न विचरेयुस्तथा ते शासितव्या इत्युत्तालस्सेनानीः तन्निशि कौशिकमाज्ञापयत्। तस्यामेव रात्रावयागः हानि-करकपटोपायान्कल्पयितुमारेभे। प्रभुभक्तिप्रदर्शनव्याजेन कौशिकमतिपानेन प्रालोभयत्। प्रथमं कौशिकः कंचित्कालं

प्रत्याख्यानपरोऽप्ययागस्य कपटानुनयभंग्या प्रोत्साहितश्चिर-मात्मान नियन्तुमशक्नुवन्नमितं पपौ । तस्य जिह्वापि दोष-दमनागुणवर्णनव्यापृताऽभवत् । तस्य कुक्षिं प्रविष्टो द्राक्षार-सस्तस्य बुद्धिमचूचुरत् । अथायागप्रेरितस्य कस्यचित्प्रोत्साहनेन खड्गानि चकृषिरे । तद्विवादं प्रशमयितुं मन्थानो नाम कश्चिद्योग्योऽधिकारी माध्यस्थ्यं वहंस्तुमुलयुद्धे गाढं विक्षतः । इदानीमयं संक्षोभस्समंततो व्याप्तः । एतदनर्थस्य बीजम-यागस्सं त्रासाभिप्रवर्तने प्रधान आसीत् । अत्यल्पे पानकलहे समुद्भूते महोपद्रवकरसैन्यसंक्षोभस्समजनीति सूचयन्भयावेदक-घंटामवादयत् । घटारवश्रवणेन भग्ननिद्रः प्रबुद्ध उत्तालः क्षिप्रं वासांसि परिधाय बद्धपरिकरस्तत्प्रदेशं जगाम । किंनिमित्तोयं संक्षोभ इति कौशिकमपृच्छत् । इदानीं क्षीणमदो लब्धसंज्ञोपि कौशिकः प्रत्युत्तरं दातुं जिह्वाय । अयागः कौशिकेऽपराधमा-रोपयितुमनिच्छन्निव दर्शयन् तत्वं जिज्ञासुना उत्तालेन बलात्कृतस्स्वकृतदोषं प्रच्छाद्य कौशिकस्यापराधोऽल्पोपि यथा महापराधी इति स जानाति तथा तस्मै उत्तालायान्यत् सर्वं वृत्तांतं न्यवेदयत् । ततो दारुणशासन उत्तालः कौशिकं सहाय-सेनाध्यक्षपदवीतः प्रभ्रंशयांचकार ।

एवमयागस्य प्रथमः कपटोपायः सम्यक् फलितः।स्वशत्रु-कौशिकमेवमधः पतितं चकार । तस्या दारुणनिशायां संवृत्तस्य

साहसकर्मण उपयोग इतः परं वितन्यते । कौशिकोऽनेन दुर्जातेनापगताशेषपानमदः । "मूर्खोहं पशुवत्प्रवृत्तोस्मीत्यात्मानं मुहुर्विनिदन्पयोमुखविषकुम्भसदृशाय स्वमित्रायायागाय स्वदुरवस्थां कथयन् शुशोच । स इदानीं मुषितः । स्वपदवीं पुनर्देहीत्युत्तालं कथं याचेत् । त्वं मधुपानरतोसीति वक्ति । एवं स आत्मानमवमानितवान् । अयागस्तस्य शोकभारं लघूकुर्वन्निवेदमुवाच । "आर्य ! उत्सवसमये को वा मधु न पिबेत् । तत्र को दोषः" शृणु मद्वचनं । सेनाधिपतेर्भार्यादोषदमना इदानीं सेनाधिपतितुल्या । त्वदुपरि तस्योत्पन्नं कोपं सांत्ववचनैरपनयन्ती पुनस्त्वा निजपदव्या प्रतिष्ठापयितुं शक्नुयात् । ततो दोषदमनामभ्यर्थयस्व । सा निष्कपटहृदया । परोपकारनिरता । एतादृशीमुपकृतिं तेऽवश्यं करिष्यति । सेनापतिर्यथा तव पुनर्दयते तथा तं प्रतिबोधयितुं निपुणा । "

अथ कौशिकः अयागस्योपदेशानुसारतो दोषदमनासविधं गत्वा निजं व्यसनं तस्यै निवेद्य आत्मानं स्वपदे पुनः प्रतिष्ठापयितु मुत्तालं बोधयेति प्रार्थितवान् । " मद्भर्तारं प्रतिबोध्य मत्प्राणव्ययेनापि तव कार्यं साधयिष्यामी"तिसा कौशिकाय प्रतिजज्ञे। तदक्षाम्यापराधसंजनितकोपोद्रेक उत्तालोपि निषेद्धुं यथा न शशाक तथा दोषदमना कौशिकस्य विषये भर्तारं प्रसादयितुमुपाक्रमत । तादृशापराधीनाल्पकालेन प्रतिष्ठापयि-

तव्यः सोढव्यः कश्चिदवधिः। प्रतीक्ष्यतामित्युत्ताले वदति सति सा अनिच्छंती श्वः प्रभाते वा निशायां वा कौशिकस्स्वपदे सस्थापयितव्य इति भर्तारं पुनः पुनः निरबध्नात् । सा पुनरपि वल्लभमुत्तालमेवमुवाच । "आर्यपुत्र! पश्य! कौशिकः कथमुपागतः । कथं पश्चात्तापसमन्वितः" अथ कठिनचित्ततामवलंब्य तत्प्रार्थना नांगीकुर्वत्युत्ताले । "नाथ! यस्तवार्थे विवाहाय मन्निकटमागत्य मां प्रार्थितवान् यो मया निरस्यमानस्य तव पक्षमवलंब्य समर्थितवान् । तादृशातरंग-मित्रस्य कौशिकस्योपकर्तुं किमियद्वक्तव्यमस्ति । नेदं महत्कार्यं भवंतमेवं प्रार्थयितुं । मयि ते प्रीतिं परीक्षितुमितो गुरुतरं वस्तु प्रार्थये । उत्तालस्तस्याः प्रार्थनां निषेद्धुमशक्नुवन् दोषदम-नामिदमूचे"। "प्रिये! कौशिक पुनरहमवश्यं प्रतिष्ठापयिष्यामि। तस्मिन्पुनरहं प्रसन्नो भवामि । किंतु प्रतीक्षस्वाल्पकालं। अवधिनिर्देशस्वातंत्र्यं मम देहि ।"

यस्मिन्नपवरके दोषदमना तस्थौ तमेवायागोत्तालौ प्रविष्टौ । सद्य एव कौशिकस्स्वदुर्दशा तस्यै निवेद्य "आर्ये! अस्मत्प्रभोरुत्तालस्य कृपावृष्टिर्मयि यथा मयि पतेत्तथा तं प्रति-बोधयेति" संप्रार्थ्य द्वारांतरेण निर्गच्छंस्ताभ्यां दृष्टः । कपट-बुद्धिरयागः "तन्न मे रोचते" इति शनैस्स्वगतमवोचत्" उत्तालस्तद्वचो न लक्षितवान् । सपद्येव संभूतेन भार्यादर्शनेन

तद्वचो विस्मृतं । अनंतरं तत्सस्मार । तस्मात्प्रदेशाद्दोषदमनायां निर्गतायां अयागस्स्वमनस्समाधातुकाम इवोत्तालमपृच्छत् । स्वामिन्! विवाहात्पूर्वं दोषदमनायां भवतोऽनुरागः किं कौशिकेन ज्ञातः ।

उत्तालः—बाढं । तेन विदितमासीत् । वधूप्रार्थनासमये आवाभ्यां सकुट्टनी पदे निवेशितः । तच्छ्रुत्वा अयागश्श्रुतदारुणवृत्तात इव भ्रुकुटीमाबध्नन् "अपि सत्यम्" इत्याचक्रंद । कौशिकेन सह संलपंतीं दोषदमनां दृष्ट्वा अयागेनोक्तानि वचनानीदानीमुत्तालस्य स्मृतिपथमवतेरुः । एतेषु वचनेष्वस्ति कश्चिदर्थविशेष इत्यभ्यौहत । यतस्स उत्तालोऽयागं धार्मिक इति मेने । मायिना वंचकेन तेनोक्तं सर्वं तथ्यमित्युत्तालो विशश्वास "अयाग! त्वया विदितं सर्वं निश्शंकं सविस्तरमभिधीयतामि"ति तमुत्तालोऽन्वयुंक्त । "एवंविधेषु दुष्टाभिप्रायेषु ममापि हृदयं प्रविष्टेषु तरेषां हृदयं प्रविशंतीति किं वक्तव्यम् । असमग्रज्ञातवृत्तांतनिवेदनेनोत्तालस्य मनसि पीडा जायते चेत्ततः कष्टो भवेत् । ततो ममाशयनिवेदनमुत्तालस्य न क्षेमकृत् । एतादृशक्षुद्रशंकाभिर्मनुष्याणा प्रशस्तिर्नोन्मूलनीया ।" इत्ययागे संकीर्णोपक्षेपकवचनैर्भाषमाणे उत्तालस्य जिज्ञासा क्रमशो विवृद्धिं नीता । अयागोऽप्युत्तालस्य चित्तस्वास्थ्यं माभंगमाप्नुयादिति जागरूकतया "माभ्यसूयापरो भवेति"

प्रार्थितवान् । प्रमत्तस्योत्तालस्य मनस्येष खलोऽतिनिपुणतया शंकां ससर्ज ।

उत्तालः—"अयाग ! मम जाया रूपवती । जनसंवासप्रिया । उत्सवेषु कृतादरा । स्वैरभाषिणी । गानविद्याविशारदा । खेलनरता । नर्तनचतुरा । अहं जाने । यत्र सद्वृत्तिस्सदाचारस्तत्रैते गुणा भवंति । तस्याः कौटिल्यविषये प्रमाणमपेक्षितं । " इत्यवदद्दुत्तालः । ततोऽयागस्स्वजायाया मार्गप्रच्युतिं शनैः प्रत्येति " इति संतुष्टः पर्याप्तं प्रमाणं नास्तीत्यमाययाऽवदत् । कौशिकस्य सान्निध्ये तस्या वृत्तं निरूपय । यतः अहिस्थलीदेशस्त्रीणां स्वभावमुत्तालात्सुष्ठुतरं जानात्ययागः । विनिशानगरीस्त्रियस्स्वचेष्टाद्रष्टुमीश्वरमनुजानंति । न स्वभर्तॄन् । दोषदमना उत्तालस्य पाणिं गृहीतुं स्वपितरमवंचयदिति छेकोक्त्या ज्ञापयामास । तया माया प्रयुक्तेति मेने स वृद्धः । एतया युक्त्या उत्तालोऽधिकतरं हृदये स्पृष्टः पितृवंचनपरा सा भर्तारं किं न वंचयेत् " इति मन्वानोऽयागोक्तं सर्वं तथ्यमिति मेने ।

अयागः—स्वामिन् ! भवन्मनःक्षोभं जनितवानस्मि । मां क्षंतुमर्हसि ।

उत्तालो बहिरुदासीन इव लक्षितोऽप्ययागस्योपन्यासेनांतस्संतापमभजत् । तदुपर्युच्यतामिति तं प्रणुनोद । तत अया-

गोपि मित्रे कौशिके विरुद्धभाषणानि कर्तुमनिच्छन्निव बहूनि सांत्ववचनानि प्रयुंजानः "दोषदमना स्ववरणार्थमागतान्स्वदेशीयान् सजातीयान्सवर्णान्बहून्वरान्निरस्य कथमसवर्णं कालकायं यवनं धृतवती । तदस्या अस्वभावोचितं । सा भृशमनाश्रवेत्यनेनैव गम्यते । कालक्रमेण सा स्वबुद्ध्या विचार्योत्तालात्स्वदेशीयामनोज्ञरूपा इति निश्चिकाय" इति तस्या अभिप्रायः । कौशिकाय कालांतरे स्वपदं दापयितुं चिंतय । नेदानीं । अत्रांतरे दोषदमना कियताभिनिवेशेन कौशिकस्य कृते भवन्तमनुनेष्यती"ति जानीहि । इत्युपदिदेश । एतादृशदुष्टबुद्ध्या स खलग्रामणीर्निरागसं ता मुग्धा विनाशयितुं कपटोपायं रचितवान् । त्वां स्वपदे पुनस्स्थापयितुमुत्तालं बोधयेति दोषदमनां प्रार्थयस्वेति प्रथमं कौशिकं चोदयित्वा तेन सह भाषमाणां तामुत्तालाय दर्शयित्वा तदनु कपटोपायैर्घातयितुमयतत ।

निर्णायकदृढतरप्रमाणप्राप्तिपर्यंतं तां निर्दोषां गणयेत्युत्तालमुक्त्वायागो विरराम । उत्तालोपि कंचित्कालं प्रतीक्षे इत्यवदत् तत्क्षणात्प्रभृत्यात्मानं प्रतारितं मत्वा उत्तालो नष्टमनस्स्वास्थ्योऽभूत् । लोके यानि निद्रावहानि ओषधीरसानिऔषधानि तानि सर्वाणि आपूर्वेद्यु तेनानुभूतां मधुरां निद्रामाधातुं निर्वीर्याण्यासन् । स्वाधिकारसंबद्धो व्यापारोपि तस्मै नारोचत शस्त्रव्यापारेषु मंदादरोभूत् । ध्वजिनीध्वजसेनाव्यूहादीनां दर्शनेन

पूर्वमुत्तेजितं तस्य हृदयमिदानीं सुप्तप्रायमभूत्। संग्रामभेरीध्वनीना वा युद्धहयहेषारवस्य वा श्रवणेन यः पुरा ससम्भ्रमनृत्यं चकार स एव योधाग्रणीरिदानीं प्रलुप्तयोधधर्माभूत्। पुरातनसांग्रामिकोत्साहस्तं पर्यत्यक्षत्। कदाचित्स्वभार्या साध्वीति कदाचिदसाध्वीति कदाचिदयागस्सत्यवादीति अन्यदा स खल इति स्वप्रेयस्याः प्रेमास्पदात्कौशिकान्न निकृष्टतरोस्मीत्येवं विधाभिर्भावनाभिर्व्याकुलीकृतचित्तः कदाचिदयागस्य कण्ठं गृहीत्वा दोषदमनापराधे दृढतरं प्रमाणमुच्यता नोचेत्तस्यां मिथ्याभियोगात्त्वामद्यैव निहन्मीति तं वित्रासयामास। अयाग आत्मनस्सत्यवादित्वं दोषत्वेन परिणतमिति क्रोधं नाटयन्मल्लीकुसुमचित्रितकरवस्त्रं भवत्प्रियाया हस्ते किं न दृष्टं कदाचित्।

उत्तालः। बाढं जाने। मयातस्यै प्रथमदत्तं पारितोषिकं तदेव।

अयागः तेनैव करवस्त्रेण मुखं प्रमृजन्कौशिकोऽद्य मया दृष्टः।

उत्तालः—यदि त्वयोक्तं सत्यं तयोः पुष्कलं वैरनिर्यातनमकृत्वा न विरमामि। तर्हि यदि ते मयिदृढभक्तिरास्तिदिनत्रया भ्यन्तरे कौशिकं त्वंढि। तस्यास्तु विषये क्षिप्रहननोपायं चिंतयिष्यामि वायुवल्लघिष्ठास्तुच्छविषयामत्सरिणा गुर्वाज्ञा पत्रिकेव दुर्लंघ्या भवंति। कौशिकस्य हस्ते दृष्टं दोषदमनायाः करवस्त्रमुत्तालस्य तयोरुभयोर्वधहेतुरासीत्। कर्णेजपस्या यागस्य कपटवचनोपन्यासेन भ्रान्तिं प्राप्तेन।

उत्तालेन "तत्करवस्त्रं कौशिकेन कथमधिगतमि" ति बुद्ध्या न विचारितम्। दोषदमनाकौशिकाय तन्न कदाचित्पारितोषिकं ददौ। भर्त्रा दत्तं वस्तु परस्मै दातुं साध्वीनामधर्म्यमिति सा सम्यग्जानाति। कौशिकदोषदमनाभ्यामुत्तालस्य लेशतोपि नापराद्धम्। तौ निर्दोषौ अपितु नृशंसोऽयागः कपटप्रबंधनिर्माणे निरंतर जागरूकस्तत्सदृशान्यकरवस्त्रनिर्माणव्याजेन तत्करवसनं चोरयित्वा कौशिकस्य मार्गे प्राक्षिपत्। स तद्दृष्ट्वा गृह्णीयादिति। इदमयागोक्तसूचनाया उपष्टंभकमभूत्।

अथोत्तालोभार्यामाहूय। प्रिये! शिरश्शूलेनपीडितोस्मि। तत्करवस्त्रमानयकटावाच्छादयामि। सा तथेति करवस्त्रमदात्।

उत्तालः—नेदं यन्मया तुभ्यं दत्तं तदानय। तद्दोषदमनानिकटेनास्ति। अयागस्यभार्यया तदपहृतमिति पूर्वमेवोक्तं।

उत्तालः—किं प्रमुषितं। नूनमयमपराधः। तत्करवस्त्रमजगुप्तदेशीयया स्त्रिया मम मात्रे दत्तं। सा मायाविनी। अन्येषां मनोगतं वेत्ति। "तत्त्वया यावंतं कालं तिष्ठति तावंतं कालं भवतीं प्रियदर्शनां करोति। भर्तृवाल्लभ्यमपि संपादयति" यदि दैवाच्चोरितं वान्येभ्यो दत्तं वा भवति तदा तव भर्तुर्मतिर्व्यत्येति। भवतीं जुगुप्सते" इत्युवाच सा। विवाहसमये

तव भार्यायै देहीत्यादिश्य निर्याणे मम माता मह्यमदात् । मया तदैवाचरितं । तस्मिन् जागरूका भव । त्वन्नेत्रमिव तन्महार्घं प्रीत्यास्पदं चेति तदा मयोक्तं ।

दोषदमना—भीता सती । किं तत्सत्यम् ।

उत्तालः—तत्सत्यम् । तदैंद्रजालिककरवस्त्रम् । अस्मिन् लोके वत्सरशतकद्वयपरिमितायुः काचित्सिद्धा भाविसूचनोग्रतावेशेनेदं निर्ममे । येषां तंतुभिरिदं निर्मितं ते कोशकाराः । क्रिमयो मंत्रपूताः । रक्षितमृतस्त्रीहृदयरक्तेन रंजितं ।

दोषदमना—तत्करवस्त्रस्याद्भुतगुणान् श्रुत्वा तस्य नाशाद्भीता मर्तुं सज्जा अभूत् । तच्चोरितमिति सा दृढं जज्ञौ । वल्लभोपि स्वस्मिन्नपरक्तो भवेदिति बिभाय । तत उत्तालस्सहसोद्विग्नः किंचिद्दारुणकृत्यमनुष्ठास्यन्निव ददृशे । करवस्त्रं पुनः पुनरपृच्छत् । यदा सा तद्दातुं नाशकत् तदा ता क्रोधाभिनिवेशादाक्षेप्तुमयतत ।

दोषदमना—करवस्त्रनाशात्क्रुद्धस्य तव भाषितानि कौशिकस्य विषये मत्कृतां प्रार्थनां व्याक्षेप्तुमुपयुक्तानीति मे मतिः ।

ततस्सा कौशिकं प्रशंसितुमारभत । तदोत्तालस्तदपवरकात्सहसा निर्जगाम । ततो दोषदमना तु स्वभर्ता साभ्यसूय इत्यशंकिष्ट । सा भर्तुश्चित्तविक्षेपस्य हेतुं दीर्घं चिंतयंत्यपि न

न्यभावयत् । किं विनिशानगरात्काचिदशुभवार्ता संप्राप्ता वा आहोस्विद्याः काश्चन राज्यबाधा वा उद्भूता इति वितर्कडोलामध्यास्त । प्रायशो मनुष्याणां विवाहसमये यादृशी प्रीतिर्विद्यते तादृशी कियत्यपि कालेऽतिक्रांते न स्यात् । धिङ्मां स दयाशून्य इति तं निर्दयं निंदितवत्यस्मि ।

अथोत्तालो दोषदमना च पुनस्संगतौ । त्वं स्वैरिणीति तां निनिंद । उत्तालो रुरोद ।

दोषदमना—कि रोदिष्यार्यपुत्र ।

उत्तालः—दारिद्र्यरोगविकारादिजनितं दुःखं मया धैर्येण सोढं । तवाभक्तिस्तु मम हृदयं व्यदारयत् । त्वं तावत्तृणस्तंबमिव रमणीया सुगंधिः । तवाजन्मापि वरमिति मन्ये । अथ ता तत्रैव परित्यज्य तस्मिन्गते निर्दुष्टेयं स्वस्मिन्भर्तुर्मिथ्याशंकया कलुषितस्वांता गरिष्ठनिद्रावशं जगाम । शय्या रचायितुं तदुपरि विवाहवसनान्यास्तरीतुं किंकरानादिशंती इत्थमाह । कृतापराधेषु बालकेषु पितरौ सांत्ववचनैस्तान्बोधयंति उत्तालोपि मां तथैव बोधयेद्यदि तदा शोभनं भवेदिति । यतस्तर्जनविषये भक्तिमती सा शिशुसदृशी ;" इत्येव तस्याः परिदेवनं ।

अथ दोषदमना भर्त्रा साकं निद्रितुकामा तस्यागमनं निरीक्षमाणा शय्यां प्राप्य गाढनिद्रामवाप । तदा उत्तालो

यथासंकल्पितं स्वभार्यां निषूदितुं तच्छयनागारं प्राविक्षत् । निद्रितां तां दृष्ट्वा तदा तस्या रक्तं क्षारयितुं वा चंद्रकांतादपि मसृणतरे तदंगे क्षतचिह्नं कर्तुं वा नोचितमिति मेने । तथापि सा अवश्यं निहंतव्येति निश्चिकाय । नोचेन्मामिव सा अन्यानपि प्रतारयेदित्याह । ततस्तां चुचुंब ।

अथ सा तच्चुंबनैः प्रबुद्धा दष्टाधरोष्टं घूर्णमाननेत्रमुत्तालस्य मुखं ददर्श । स यदा यदा दारुणं कर्म चिकीर्षुस्तदा तदेदृशमाकारमुद्वहतीति सा सम्यग्विवेद । तत उत्तालः "वासु ! मरणाय सन्नद्धा भव । त्वरयति भवतीं कृतांतः । ईश्वरं प्रार्थयस्व" इति तामादिशत् । यतस्तस्या आत्मानं हंतुं नैच्छत् । तत्कृपायत्तजीविता एषा अनपराधिनी "नाथ ! मयि दयां कुरु । को वा ममापराध" इत्यभ्यर्थयत तं । ततः कौशिकाय त्वया करवस्त्रं दत्तमित्युत्ताल आह । निरागा इयं तपस्विनी स्वनिर्दोषत्वं विवरीतुमुद्यता । तद्वचनमनाकर्ण्य शयनवासोभिरुद्धध्य श्वासनिरोधेनताममारयत् । अत्रांतरे अयागप्रणुन्नेन मनुष्येण क्षतगात्रस्स्रवद्रुधिरः कौशिक आपतितः स घातुकः कौशिकवधे विफलप्रयत्नस्स्वापराधप्रकाशनभिया । अयागेनैव निषूदितः । यतस्तस्य कंचुककोशे केचन लेखा लक्षिताः तैर्लेखैरयागः पापी अपराधी । कौशिको निर्दोष इति निस्संशयं । प्रकटीकृतं अथ कौशिक उत्तालं समासाद्य "प्रभो

कमपराधं मयि दृष्ट्वा मां व्यापादयितुमयागं प्राचोदयः । अद्यापि मां क्षमस्व" इति सपादपतनमभ्यर्थयत ।

एतत्सर्वमयागस्य दौर्जन्येन कृतमिति ज्ञात्वा उत्तालोऽशनिपातविद्ध इवाभूत् । आत्मानं वधकारिण ममन्यत । स्वभार्या साध्वीत्याजानात् । स्वाविमृश्यकारिताफलेन दुर्भरमनस्संतापेनप्राणान् धारयितुमसहः स्वशरीरं निस्त्रिंशेन संछिद्य निहत भार्याशरीरे पतित्वा प्राणान् जहौ ।

एतानि साहसकृत्यानि प्रेक्षकाणा चेतस्सु भयमाश्चर्यं च जनयामासुः । यत उत्तालो विमलयशाः स्वजायायामत्यंतानुरक्तः । किंत्वतिनृशंसस्यायागस्य कपटवागुरासु पतितः कलुषीकृतमानसोऽभूत् । उदारचेतस्कतया शंकाया नावकाशं ददौ । स्वापराधज्ञानसमये तस्य नेत्रे यवनदेशीयवृक्षनिर्यासमिवाश्रूणि व्यमुंचताम् । तस्मिन्मृते सति तस्य गुणान्पराक्रमचेष्टितानि जना न विसस्मरुः । अयागश्चित्रवधेन मारितःउत्तालस्यानतरोद्योगिनः कर्तुं न किमप्यवशिष्टम् । प्रख्यातस्य सेनापतेरुत्तालस्य शोचनीया मरणवार्ता विनिशाराज्यपालकाय प्रेषिता॥

॥ उत्तालचरित्रं समाप्तम् ॥

---

## 18 Romeo and Juliet —वासन्तीमकरन्दम्



Dramatis Personæ

1 Romeo = मकरंदः—कथानायकः.

2 Juliet = वासंती—तस्य भार्या.

3 Capulets = कपर्दिनः.

4. Montagues = मतंगाः.

5 Verona = विरोचननगरी.

6 Benvolio = भानुबलः—मकरंदस्य मित्रं.

7 Mercutio = मृगेशः.

8 Laurence = सुविद्यनामा कश्चित्सन्यासी.

9 Count Paris = परेशप्रभुः यस्मै वासंती पित्रा दित्सिता

10 Tybalt = दायबलः, वासंत्याः प्रियबन्धुः.

11 Rosaline = ललिता.

12 Mantua = मंचनगरीं.

# ॥ वासन्तीमकरन्दम् ॥

## (ROMEO AND JULIET)



आस्तां पुरा विरोचननगर्यां प्रधानौ द्वावाढ्यवंशौ। ययोश्चिरकालात्प्रभृत्यविषह्य परस्परवैरं प्रववृते। अतिक्रान्तेपि बहुतिथेपि काले तद्वंशयोरन्योन्यद्वेषो नोपशशाम। यदा कश्चिन्मतंगवंश्योदृष्टश्चेत्कपर्दिवंश्येन वीथ्यां तदा न केवलं परुषोक्तिव्यतीहारः कदाचिच्छस्त्राशस्त्रिप्रपंचस्समजनि। एषामुभयवंश्यानां रथ्यासु याद‍ृच्छिकसमोवेशेनोद्भूतैर्दारुणकलहैः पुरविशिखा स्वास्थ्यं बभंजे।

अथ कदाचित्कपर्दिवंशजातानां प्रभुः कस्मिंश्चिदुत्सवे पुरे निवसतो बहून्कुलपुत्रकान्बह्वीः कुलपालिकाश्च भोजनार्थं निमन्त्रायामास। तन्नगरवास्तव्या वर्णनीयलावण्याः काश्चन मत्तकाशिन्यश्च संनिदधुः। मतंगवंशजेभ्योऽन्येपि तत्रागतास्स्वागतेनाभिनन्दिताः। अस्मिन्कपर्दिनामुत्सवे मतंगवंशजप्रभुपुत्रः मकरन्दाभिधो वासन्तीरूपगुणाकृष्टचित्तस्तां द्रष्टुं तत्रागतः एतस्मिन् सघे मतंगवंशप्रसूतस्य दर्शनमपायकरमिति मत्वामकरंदस्य मित्रं भानुबलनामा कश्चिद्युवा इत्थमुवाच "सखे मकरंद! त्वं तावद्विदूषकवेषांतरितो भूत्वा आगच्छसि

चेच्छोभनं भवेत् । वामंत्यपि ते दृष्टिपथे पतिष्यति । तां दृष्ट्वा तत्र समवेतानामितरासां सुंदरीणां त्वत्प्रियायाश्च तारतम्यज्ञानेन हंसीसदृशानां तासां पुरतस्त्वत्प्रेयसी वायसी तुल्येति ज्ञास्यसी " त्यकथयत् । तथापि भानुबलस्य वचसि मकरंदस्य विश्वासो नासीत् । वासंतीगतानुरागस्तत्र गंतुं तमचोदयत् । सदा तद्गतमानसो रात्रिषु निद्रामपि न लेभे । स जनसंसदः प्रतिनिवृत्य एकाकी विविक्तसेवी भवितुमैच्छत् । वासंती तु एतादृशानुरागयुक्ते मकरंदेऽल्पामपि प्रीतिं लेशमपि सौजन्यमप्रदर्शयती अननुरक्तेव तमवजज्ञे । भानुबलस्स्त्रीणां दुस्स्वभावं चंचलचित्ततामस्थिरस्नेहं च वर्णयित्वा स्वमित्रं मकरंदं स्त्रीप्रसंगान्निवर्तयितुमयतत ।

अथ मकरंदो भानुबलस्तयोर्मित्रं मृगांकश्च वेषांतरनिगूढाः कपर्दिनामेतदुत्सवसमाजं जग्मुः । वृद्धः कपर्दी तेभ्यस्स्वागतं व्याहृत्य किणरहितपादागुष्ठाः प्रमदा यूष्माभिस्सह नृत्यंतीत्यवदत् । स वृद्धो लघुचेताः प्रहृष्टचित्तस्सोपि बाल्ये छद्ममुखं धृतवान् । कस्याश्चित्सुंदर्याश्श्रवणे कथामुपांशु कथयामास । ते सर्वे नर्तितुमारभत । तत्र नृत्यंतीनां वरवर्णिनीनां मध्येऽप्रतिमसौंदर्येण रतेरपि ह्रियमादधानां सदसि प्रज्वलंतीनां दीपशिखानां समितिं स्वकांत्या पूरयंतीं कांचिद्वरारोहां वीक्ष्य मकरंद आश्चर्यविद्धोऽभूत् । तद्योषित्परिषन्मध्ये

नीलदेहेन पुरुषेण धारितमनर्घरत्नमिव तद्रूपमाबभौ । "तद्रूपमुपभोगेन व्यत्येतीति मेभीः । सर्वासा मत्तकाशिनीनां मध्ये सा काकाना मध्ये हंसीव प्रचकाशे ।" इति ता वर्णयतो मकरंदस्य वाचः कपर्दिवंशप्रभोर्भागिनेयेन श्रुताः । कंठरवेण मकरंद इति सप्रत्यभिजज्ञे । सोऽतीव क्रोधनः । वेषान्तरनिगूढस्यापि मतंगवंशजस्य तत्रागमनममृष्यमाणः क्रोधोद्दीपितमानसो मकरंदं हंतुमभ्यद्रवत् । तदा तस्य पितृव्यो वृद्धः कपर्दिप्रभुर्भोजनार्थमागतानामतिथीना विषये तादृशीदारुणवृत्तिर्नोचितेति तं न्यवारयत् । विरोचननगरीस्थितास्सर्वे "मकरंदस्सत्कुलप्रसूतो वृद्धसम्मतो गुणवानिति" तं तुष्टुवुः । धामबलस्त्वनिच्छन्नपि क्षंतुं बलात्कृतः "यद्यसौ मतंगवंश्योऽननुज्ञातः पुनरस्मत्संघं प्रविशतिचेत्तदा तं यमक्षयं नेष्यामी"ति प्रत्यश्रुणोत् ।

अथ नृत्येऽवसिते निगूढवेषांतरिततया क्षंतव्यो मकरंदस्तस्यास्सविधं गत्वा मृदुवचोभिः "इदं देवसदनम्" इति व्यपदिशन् तस्याः करमगृह्णात् । यद्यसौ मत्स्पर्शदूषितस्तदा तत्प्रायश्चित्तार्थं तं चुंबामीत्यवदत् । वासंती । आर्य ! तव भक्तिस्ससौजन्या । सदाचारविशिष्टा । ऋषयोपि हस्तवंतः । तेषां हस्तावितरसंस्पर्शमर्हतः । अपितु परिचुंबनं न स्यात् ।

मकरंदः—किं ऋषीणां तीर्थसेविनामोष्ठौन स्तः ।

वासंती—बाढं स्तः । किंतु तावीश्वरस्तोत्रे विनियुज्येते ।

मकरंदः—मत्प्रियर्षे ! मत्प्रार्थनां शृणु । तां सफलय । नोचेदहं निराशो भवामि ।

एवं तयोस्सरसालापगोष्ठीव्यग्रयोस्सतोस्सामात्रागृहगमनाय समाहूता । का तस्य मातेति मकरंदस्तत्र स्थितं जनमपृच्छत् । सा मतंगवंशजानां प्रभोर्जाया । तस्या दुहितेयं वासंतीनाम्नीति कथितं श्रुत्वा मकरंदः "अहो धिङ्मां । कथं शत्रुकन्यासंक्रांतहृदयोस्मी"ति व्यथितमना भूत्वापि तस्या मनो निवर्तयितुं न शशाक । साप्येन सह इयंतं कालं संलपंती आसीत्सयुवा मकरंद इत्यज्ञासीत् । यथा स तस्यां दर्शनमात्रेण हठादनुरक्तस्तथा सापि तस्मिन्नासक्ता । तस्याः प्रेमसर्वस्वं तस्मिन्निबद्धं । शत्रुरपि स एव मे दयित इति चिरंतनवैरं न मे गणनीयमिति निश्चिकाय ।

अर्धरात्रसमयत्वान्मकरंदो मित्रगणेन सह तस्मात्प्रदेशादुच्चचाल। यत्र सनिजमनस्तत्याज तद्गृहं हातुमशक्नुवन्वासंतीगृहस्य पश्चाद्भागास्थिताया वृक्षवाटिकायाः प्राकारभित्तिमुत्प्लुत्य सा पुनर्दृश्येतेत्याशया तत्सौधसविधमुपससर्प। अथहर्म्यवातायनस्थितायास्तस्या मुखं राकाचंद्रइव . ददृशे । तन्मुखकान्त्या विजितश्चंद्रो मंन्दकांतिरुद्याने दृष्टः। हस्तांबुजनिहितकपोलां तां

दृष्ट्वा मकरंदस्तस्याः करच्छदं मानुरागं ययाचे यथा तत्कपोल-संस्पर्शलाभ आत्मनो भवेत् । सा त्वेतावतीं वेळामेकाकिनी स्थिता किमपि मनसि ध्यायन्ती दीर्घमुष्णं निःश्वस्य अहो ! मकरन्द " इत्युच्चैर्जुघोष । ततो मकरन्दस्तस्याः कल-भाषित श्रुत्वा आनंदभरितहृदयस्तया अनाकर्णितं शनैरिदमूचे "कलभाषिणि अमर्त्यवनिता सौंदर्यविराजिते ! पुनर्व्याहर। परे शृणुयुरिति संकोचमपि विहाय सा तदुत्सवनिशोत्पादितानु-रागपूर्णा । तत्र स नास्तीति मत्वा "मकरंद ! मकरंद ! कुत्रासि " इति दयितस्य नामोच्चारणपूर्वकं आजुहाव। "मत्कृते त्वत्पितरं विमुंच । त्वन्नाम दूरीकुरु । नाहमितःपरं कपर्दिवंश-सबद्धेति व्यपदेश्या इत्युदीरयामास । मकरंद एतैर्वासंती-व्याहृतैः प्रोत्साहित इतोऽधिकतरं श्रोतुमियेष । मतंगवंशसं-बन्धस्य मकरंद इत्याख्यायाश्चात्यागात् मकरंदमात्मगतं निदन्ती रुष्टा बभूव। मकरंदस्स्वमनो निवर्तयितुमशक्नुवन्नेतेषा प्रीतिवचनानामात्मानमेव लक्ष्मीकृत्य नेदं भावनामात्रमिति नि-श्चित्य "प्रिये ! मकरंद इति मन्नाम यदि ते न रोचते तर्हि मां दयितेति वा नामांतरेण वा संबोधय । नाहमितः परं मकरंदनामव्यपदेश्यः । " इति जगाद । उद्याने मनुष्यवाच-श्श्रुत्वा भीता वासंती प्रथमं प्रभाषितारं नाजानात् । नैशान्ध-काराघृतदिङ्मुखत्वात्स्वरहस्योद्भेदो भवेदित्यकंपत । किन्तु

तस्य पुनस्संभाषणे तद्वक्त्रविनिस्सृतवागमृतस्रोतसश्शतविप्रुषोप्यनास्वाद्य तत्क्षणमेव स मकरंद इति ज्ञात्वा वृक्षवाटिकाप्राकारोल्लंघने तस्यापतिष्यद्भयं व्यवृणोत्। यतस्तस्य मतंगवंशजत्वाद्यः कोपि तद्बंधुः पश्यति चेत्सवध्य इति । ”

मकरंदः—तेषां त्रिशद्भ्यो निस्त्रिंशेभ्यो दारुणतरः तव दृष्टिपातः । प्रिये मयि सदयां दृष्टिं प्रसारय। तेषां शात्रवेणाहमभेद्योस्मि । तेषां विद्वेषान्मे मृतिरपि वरं । न तु भवत्याः प्रीतिं विना वत्सरशतायुः ।

वासंती—कथमागतोस्यत्र । केनादिष्टः ।

मकरंदः—मनसिजेनादिष्टोत्रागतोस्मि । नाहं कर्णधारः । अकूपारस्यापरपार इव मम त्वं दविष्ठासि । क्रेयवस्तूनि संपादयितुं धृष्णोमि । एतद्वचश्श्रुत्वा वासंत्या मुखे व्रीडापुरस्कृतारुणिमादृश्यत । नैशांधकारे मकरंदेन न लक्षितः । अंतस्तस्मिन्ननुरागमुद्वहंत्यपि आकारगोपनं कुर्वाणा प्रियस्य स्वमनो न ददौ । प्रार्थयितॄणां प्रत्याख्यानं तेषु विप्रतीपवर्तनं । भ्रुकुटीभंगः औदासीन्यप्रदर्शनमित्येतदुत्कटानुरागमुद्वहंतीनां विचक्षणानां प्रमदानामाचारः । तादृशाचाराणां मध्ये वासंत्या न कोप्यासीत् । “अहं त्वयि भृशमनुरक्तास्मी” त्यक्षराणि वासंतीमुखत एव मकरंदश्शुश्राव । “मनसो लघिष्ठतया वा लोलतया वा अहं ते वशीकृतेति मा मन्यस्व । किंतु तस्यां

रात्रौ प्रमादान्मयोक्तानि वचांसि भवता श्रुतानि । तस्मात्तव विधेयास्मी''ति वासंती मकरंदमब्रवीत् ।

एवं तयोर्मधुरं भाषमाणयोरागत्य धात्री "वत्से प्रभातप्राया शर्वरी । अद्यापि न निद्रासि । शयनागारमागच्छ " इति वासंतीमाजुहाव । अथ सा सत्वरं गमनोन्मुखी मकरंदाभिमुखी भूत्वा "आर्य ! मकरंद ! यदि मयि त्वदनुरागश्श्लाघनीयः मामुपयंतुं यदीच्छसि तदा विवाहशुभलग्नं निर्देष्टुं श्वः प्रभाते भवन्निकटमेकं वार्ताहरं प्रेषयामि । अस्मद्विवाहसमनंतरमेव मम सर्वस्वं भवत्पादयोरर्पयामि । यावज्जीवं भवदनुव्रता भवामि" इत्याह— एवं विवाहनिश्चयं कुर्वतोस्तयोर्धात्र्या मुहुराकारिता गृहाभ्यंतरं प्रविशन्ती प्रियविरहमसहमाना पुनर्बहिरागच्छंती वासन्ती मध्ये पट्टसूत्रेण बद्धः पुर उड्डयमानः पोषकेण पुनः पश्चादाकृष्यमाणः पक्षीव विरराज । मकरंदोपि तां हातुं न शशाक । यतस्समानुरागयोः परस्परसरसालापगोष्ठीतो नान्यन्मधुरतरं । तन्निशाया मधुरनिद्रासुखं परस्परमभिलषन्तौ तावंते व्ययुंक्ताम् ।

अथ प्रभाता निशा । मकरंदो दयितामेव विचिन्तयंस्तद्भावसंभृताशयः गृहमगत्वा सुविद्यनामानं कंचिद्योगिनं द्रष्टुं प्रत्यासन्नं विहारमगच्छत्। सकर्मन्दी स्वकर्मानुष्ठानं निर्वर्तयन्प्रातरेवागतं मकरन्दं दृष्ट्वा केनचिद्युवजनोचितचापल्येन प्रेरितस्सर्वां

शर्वरीमय्यंजजागारेत्यभ्यौहिष्ट । ललितायामसावनुरक्त इति सन्यासी मेने। किंतु मकरंदो "वासंत्यामनुरक्तोस्मि। तामद्य विवोढुं मया निश्चितं । अस्मिन्कार्ये भवता सहायः कर्तव्य" इति तं प्रार्थितवान् । एतच्छ्रुत्वा स परिव्राजकोऽस्य चित्तास्थैर्यमालोक्य साश्चर्यं नेत्रहस्तमुद्धृतवान् । यूनामनुरागश्चक्षुष्येव न तन्मनस्सु । सपरिव्राड्वासंती मकरंदयोर्विवाहः परस्परसौख्यावहः । कपर्दिमतंगयोश्चिरंतनवैरमितः परं शाम्येदित्याशशंस । अयमुभयोः पक्षयोर्मित्रं । तयोस्संधिं कर्तुं बहुवारमयतत । मकरंदेन वासंत्याः पाणिं ग्राहयितुमवश्यं सहाय करिष्यामीति प्रतिजज्ञे ।

अभूदिदानीं मकरंदस्सुखी । यथाप्रतिज्ञातं प्रहितेन स्वदूतेन मकरंदस्याशयं ज्ञात्वा वासंती तेनसह सन्यासिनो मठं प्रययौ । तयोस्तत्र विवाहस्समजनि ।

"इतः परमनेन विवाहेनैतावुभौ वंशौ प्राचीनवैरं परित्यज्य संजातपरस्परमैत्रीकावभिवर्धेतामिति"। सन्यासी ईश्वरं प्रार्थयां चक्रे ।

परिसमाप्ते विवाहकर्मणि वासन्ती निजगृहं गत्वा निशासमयं प्रतिपालयंती तस्थौ।पूर्वस्यां निशियस्मिन्नुद्यानेतावुभौ सगतौ तमेवोद्यानमागच्छामीति मकरंदः प्रतिशुश्राव । प्रातः प्रवर्त्स्यमानोत्सवदिवसस्य पूर्वनिशावासोलंकारादिभिरात्मानं

मंडयितुकामाया बालिकाया यथा युगायते तथा वासंत्या अपि तद्दिवसः प्रचचाल ।

तस्मिन्नेव दिने मध्याह्नसमये मकरंदो मित्राभ्यां भानुबलमृगेशाभ्यामन्वितो विरोचननगरीरथ्यास्वाहिण्डमानस्सहजकोपनेन दायबलेन सनाथं कपर्दिवंशयवर्गं ददर्श । वृद्धकपर्दिप्रभुदत्तपंक्तिभोजनदिने मकरंदेन कृतकलहः क्रोधनो दायबलोऽयमेव मतगवंशजेन मकरंदेन संगत इति मृगेशं परुषमध्याक्षिपत् । तत्तुल्यकोपो यौवनमदोद्रिक्तो मृगेशोपि परुषतरमुत्तरं ददौ।तयोः कोपं प्रशमयितुं भानुबलेसांत्ववाग्भिः प्रयतमानेपि कलहः प्रारभ्यत । तदा समकरंदमपि "धिक्त्वां खलम्" इति निनिंद । मकरंदस्तु स्वप्रियाया वासंत्याः दायबलस्सन्निहितवंधुः प्रीतिपात्रमित्यालोच्य तेन सह कलहं परिजिहीर्षुरासीत् । असौ मकरंदस्स्वभावतस्सावुस्सहनशीलो विवेकी । ततः कुटुंबकलहेनकदाचित्प्रविष्टः । स्वप्रियायाः कपर्दिवंशजातत्वात्कपर्दीति नामैव तस्य हृदयाह्लादकरमभूत् । तस्मान्मकरंदस्तं दायबलं "साधो ! कपर्दिवंशज !" इत्येव संबोधयन् मृदुमधुराणि वचांसि बभाषे । तथापि खलाग्रणीः दायबलस्सर्वेषु मतंगजेषु द्वेषबुद्धिं दर्शयंस्तन्मृदुभाषितान्यनादृत्य कोशात्खड्गमाचकर्ष । अथ मृगेशो दायबलेन संधिच्छोर्मकरंदस्याशयमजानानः क्षांतिगुणेन तस्मिन्नशक्तता-

मारोपयन् बहुभिर्दूषणवाक्यैर्मकरंदेन सहोत्पन्नं प्रथमकलहं संवर्धयितुं दायबलं प्रेरयामास । दायबलमृगेशयोऽशस्त्राशस्त्रि प्रवघृते । मृगेशो खड्गाहतो धरण्यां निपपात । अथ पंचता गमितं मृगेशं दृष्ट्वा मकरंदः क्रोधमूर्छितः "अरे ! नृशंस ! इत्याक्रुश्य मंडलाग्रेण दायबलस्य शिरश्चकर्त । इयं कलहवार्ता जनसंबाधासु नगरीवीधीषु सर्वतः प्रससार । बहवः पुरजनास्त्वरमागत्य ददृशुः । एतद्वैशसं द्रष्टुं वृद्धकपर्दिमातंगवंशप्रभूसभार्यौ तत्र संनिदधतुः।दायबलनिहतस्य मृगेशस्य सन्निहितबंधुर्विरोचननगराधीशस्तत्र समाययौ । मतंगकपर्दिवंशजानां परस्परकलहैस्स्वराज्यपालनस्वास्थ्यं मुहुर्विहन्यत इत्यालोच्य सापराधान्सम्यक् ज्ञात्वा तीक्ष्णदंडेन योजयितुं निरचैषीत् । तत्कलहस्य साक्षितया स्थितो भानुबलः कलहकारणं यथातत्त्वमाख्यातुंराज्ञा समादिष्टः । भानुबलस्तु कलहे भागभाजामपराधं मृदूक्तिभिरपह्नुवानो निजमित्रस्य मकरंदस्य हानिं परिहरन् यथाशक्ति सत्यमाचख्यौ । स्वबंधोर्दायबलस्य वधेन भृशदुःखिता काचित्कपर्दिवंशोद्भूतांगना मकरंदे वैरनिर्यातनाय बलवदभिनिविष्टा मकरंदस्य मित्रेण मतंगवंशजातेन भानुबलेनोक्तं सर्वं पक्षपातोपहतत्वान्न श्रद्धेयं । तस्माद्वधकारिणि तीक्ष्णदंडो विधेय इति राजानं निरबध्नात् । मकरंदो वासंत्याभर्ता स्वजामातेति सा न विवेद । मतंगवंशजाऽपरा न मक-

रंदोर्हतिवधदंडमिति तत्पक्षमवलंब्य विवदितुमारभत । राजा-त्वनयोर्योषितोराक्रोशाननाकर्ण्य न्यायान्यायौ सम्यक्परीक्ष्य मकरंद विरोचननगरीतः प्राव्राजयत् । कतिपयघटिकाएव वधू-त्वेन विराजिता वासंती एतद्दुःखवार्तां शुश्राव । अनेन राजदंडेन सा भर्त्रा अपुनर्दर्शनं परित्यक्ता । प्रीत्यास्पदं मातृष्वसुः पुत्रं निषूदितवानिति सा मकरंदायाकुप्यत् । सुदरः क्रूरः । देवसदृशः पिशाचः । कपोतरूपी कंकः । वृकवृत्तिरजा-शिशुः । रम्यमुखस्सर्पहृदयः । इत्यादिभिः कोपप्रतिपादकैर्वि-रुद्धवचोभिस्तं निनिंद । अते प्रीतिरेव कोपमजयत् । मकरंद-स्स्वबंधुं दायबलं जघानेति दुःखेन निर्गतास्तस्या अश्रुबिंदवः दायबलेन न निहतः । जीवतीत्यानंदबाष्परूपेण परिणताः । अथ पुनर्मकरंदस्य निष्कासनवार्ता श्रवणेन दुःखाश्रुबिंदुसंतति-र्निष्पपात । दायबलविनाशजनितसंतापान्मकरंदस्य निष्कास-नेन शतगुणित संतापमभजद्वासंती । कलहानंतरं मकरन्दस्स-न्यासिनस्सुविद्यस्य मठे निगूढ तस्थौ । राज्ञादेशान्निरस्त इति वार्ता तत्रैव तेन श्रुता । मरणादधिकतरं भयमजनयत् । “विरोचननगरी प्राकाराद्बहिर्जगन्नास्तीति वासंतीं विहाय क्षणमपि न जीवेय यत्र वासंती न्यवसत्तत्रैव त्रिदिवं । तद्बहि-र्भूतं सर्वं मारात्मकोनिरयः” इति स मेने । तत्त्वविदग्रेस-रोऽसौ योगीदुःखोपशामकैस्तत्त्वावेदकैर्वचोभिस्तस्य मनः-

कालुष्यं चिकित्स्येदेव । यद्ययमुन्मत्तो युवा तस्योपदेशं शृणोति चेत् । उन्मत्त इव केशानुल्लुलुंछ । आत्मनो निखननगर्तं परिमामीति निश्चेष्टो भूमावशेत । एतत्समये प्रियया प्रेषितेन संदेशेन किंचिल्लब्धधैर्योऽजनि । सपरिव्राजकोमकरंदस्य चित्तस्वास्थ्येनामनस्विजनोचितं तद्दैन्यं निवारयितुं लब्धावकाशोऽभूत् । स दायबलं हतवान् । आत्मानमपि हन्यात् । अनुव्रतां प्रियामपि हन्यात् पुरुषस्याकृतिर्धैर्येणैव सौष्ठवमवलंबते । धैर्याभावे मधूच्छिष्टमयविग्रह इव विस्रसति ।"वधस्थाने तव लघुर्दंडो विहितः राज्ञा । अयं सुखहेतुरेव भवतः । जीवति वासंती । सा तव प्रिया संवृत्ता । तया संगतस्सुखी भवान्"। "इत्येतानि योगिनस्सर्वाणि सांत्ववचनानि मकरंदस्य न सुखकराण्यासन् । एवमुक्त्वा स पुनरुवाच । "मकरंद ! निराशः पुरुषः कष्टप्रायां मृतिमियादिति जानीहि । एतन्निशाया प्रियासविधं गत्वा रहसि तामापृच्छ्य मंचनगरं गच्छ । यावदहं युष्मद्विवाहवार्तां प्रकटयितुमुचितसमयं जानामि तावत्त्वं तत्रैव वस । युष्मद्विवाहवार्ताश्रवणेनोभयोः कुटुंबयोस्सख्यं भविष्यति । राजापि त्वां क्षमते । इदानीं दुःखेन प्रोषितस्त्वं विंशतिगुणितेनानदेन स्वदेशं प्रति निवर्तसे इति "।

अथैवं प्रायैः परिव्राजकस्योपदेशैर्मकरंदो निरस्तमनःकालुष्यस्सुविद्यस्यानुज्ञामवाप्य प्रियावसथं गत्वा तन्निशायां

तत्रैव सुष्वाप। प्रातरुत्थाय मंचनगरं प्रतस्थे। स्वदेशवृत्तांतनिवेदकान् लेखान्मुहुर्विसर्जयामीति परिव्राट् प्रतिशुश्राव। तच्छर्वर्यां मकरंदो वृक्षवाटिकाद्वारेण प्रविश्य न केनाप्यलक्षितो वासतीशयनागारं प्रविश्य सुखं सुष्वाप। तस्य तन्निशा परमानददायिन्यभूत्। तदा तयोः परस्परसमागमजनितो निष्कळक आनंदो वियोगदुःखसंभिन्नोऽभूत्। वियोगदुःखप्रदः प्रभातकालः क्षिप्रमागतः। भरद्वाज पक्षिणः प्रातस्तनगीति श्रुत्वा पिकरुतमिति मेने। प्रातः प्रबुद्धविहंगमकलकलः दुश्श्रवमासीन्। प्राच्यां दिश्यरुणोदयरेखा अनयोर्दम्पत्योर्वियोगसमयं सूचया चक्रुः। प्रतिदिन लेखं प्रेषयामीति प्रियायै प्रतिजानन्मकरंदो दुस्सहवियोगदुःखभरविक्लबहृदयस्तामापृच्छ्य तस्यास्सौधापवरकवातायनाच्छनैरवतीर्य यदा धरण्यां स्थितस्तदा आगामिनि विपदावेदकमनस्थितौ स्थितया तया मृतो निखननगर्ते निहित इव ददृशे। तस्या हृदयमपि व्यथितमासीत्।

इदानीं स सत्वरं प्रिया परित्यज्य गंतुं बलात्कृतः। यतः प्रभातसमये यदि स विरोचननगरीप्राकाराभ्यंतरे दृष्टस्तर्हि तस्य वधएवभवेत्। इयमेतयोर्वधूवरयोर्दुःखनाटकस्य प्रस्तावना। मकरंदस्य स्वदेशपरित्यागानंतरमेव वासत्या जनयिता स्थविरः कपर्दिवंश्यप्रमुरितः पूर्वमेवोदूढा वासंतीति स्वप्ने

प्यजानन् तां कस्मैचिद्वीराय दातुमैच्छत् । स वरः परेशनामा रमणीयदर्शनस्सुशीलस्सभ्याचारविशिष्टो युवा । तया मकरंदो न लब्धश्चेत्सएव तस्याः अनुरूपो वरस्स्यात् ।

पिता आत्मानमन्यस्मै कस्मैचिद्दित्सतीति श्रुत्वा वासन्ती भयव्याकुलहृदया "प्रियबन्धोर्दायबलस्याचिरसंवृत्तमरणेन निरानन्दाया मम भर्तृसमागमस्य नायमुचितः कालः । निहतस्यास्मत्सन्निहितबन्धोर्दायबलस्यौर्ध्वदैहिकक्रियाकलापः कथं कथमपीदानीमेव समाप्तः। एतस्मिन्समये कपर्दिवंश्येषु परिणयोत्सवप्रकटनमत्यंतमनुचितमिवाभाती" त्यनेकोपपत्तिपूर्वकं स्वविवाहं प्रतिषेधंत्यामपि वासंत्यां धृद्धस्तत्पिता तद्वचांस्यनादृत्य "आगामिभृगुवासरे तवोद्वाहो भविष्यति त्वां परेशाय दास्यामि, सिद्धा भव । श्रीमान् युवा उदारो वरस्त्वदर्थे मया महता यत्नेन सम्पादितः । तादृशवरलाभेन संहृष्टा तेन सह सुखं जीव । मया त्वदाज्ञा नोल्लंघनीया" इति तत्पिता तामादिदेश ।

एतस्यां दुरवस्थाया तपस्विनी वासंती किंकर्तव्यतामूढा दुर्जातबन्धवे परिव्राजकाय पितुः परिच्छेदं निवेदयामास । तदुपरि सः "मयोपदिश्यमानां साहसप्रतिक्रियां कर्तुं यद्यंगीकरोषि तदा सर्वं ते श्रेयो भविष्यती" त्यवोचत् ।

वासंती—मद्भाग्यवशाल्लब्धेऽनुरूपे भर्तरि जीवति वरांतरस्य परेशस्य पाणिग्रहणान्मे मृत्युरपि स्पृहणीयतरः ।

सन्यासी—इदानीं गृहं गच्छ । बहिस्सोल्लासेवात्मानं दर्शय । पित्राज्ञानुरोधेन परेशमुद्वोढुमंगीकुरु । विवाहदिनस्य पूर्वरात्रौ मया दीयमानमेतत्काचघटीस्थितमौषधं पिब । तत्पानानंतरं ते शरीरं दिनद्वयं शीतलं चैतन्यशून्यमिव भवति । प्रातःकाले नूतनवर आगत्य मृतामिव स्थितां भवतीं पश्यति । तद्देशाचारानुसारेण गृहसंबद्धोद्याने निखनितुमनाच्छादित-शरीरा त्वां नेष्यंति । स्त्रीजनसुलभा भीरुता निरस्य एतद्भयं-करपरीक्षाया स्थिरा भव । एतदौषधरसपानानंतरं यामपंचके समतिक्रान्ते सुप्तोत्थितेव प्रबुद्धा भविष्यसि । प्रबोधात्प्रागस्मदु-पायकल्पनं तव भर्त्रे वार्ताहरेण निवेदयामि अनंतरं स्वस्थां भवतीं निशायामागत्य सत्वां मंचनगरीं नेष्यति । मकरन्दे विद्यमानो दृढानुरागः परेशविवाहजनिता भीतिश्च वासंत्या ईदृशसाहसकृत्यमनुष्ठातुं बलं ददतुः । भवता यथोपदिष्टं तथैव करिष्यामीति सा प्रतिजानंती तमौषधरसं परिव्राजका-दगृह्णात् ।

अस्य मठात्प्रतिनिवर्तमाना वासंती मार्गमध्ये परेश-प्रभुं दृष्ट्वाऽवश्यं तव पाणिगृहीती भविष्यामीति सप्रश्रयमु-वाच । कपर्दिप्रभोस्तज्जायायाश्चैषा हर्षप्रदा वार्ताभूत् । वृद्धो वासंत्याः पिता स्वदुहितुराश्रवत्वेन प्रहृष्टः पुनर्युवेवाभूत् । परेशमुद्वोढुं नाहमिच्छामीति मुहुः प्रत्याख्यानात्पितुरनभिमता

वासंती इदानीं तस्य प्रेमास्पदं सजाता। सर्वो गृहजनो वासंती-परिणयसंभारसंपादनव्यग्र आसीत्। विवाहमहोत्सवमधिकतरवैभवेन कर्तुं धनव्ययो न गणितः।

अथ विवाहस्य पूर्वरात्रावेव वासन्ती तमौषधं पपौ। "वासंतीमकरदयोर्विवाहस्यायमेव हेतुभूत इति स्वस्मिन्निपतितां निन्दां परिहर्तुं सन्यासी मह्यं विषमदादिति" वासन्ती मनसि संशयालुरासीत्। अपितु स परोपकारतत्परो विमलाशयो निष्पाप इति विश्रुतः। मकरंदस्यागमनात्पूर्वमेव तया प्रबुद्धया भवितव्यं। कपर्दिवंशजानामस्थिभिः पूर्णं भूमिगृहमेकमस्ति। यस्मिन् दायबलस्य कळेबरं शववासोभिः प्रच्छन्नं विशीर्णीभवत्पूतिगंध्यभूत्। तदपि तस्या मनोवित्रासनाय नालं बभूव। श्मशाने संचरतां पिशाचानां श्रुतपूर्वाः कथास्सापुनश्चिन्तयामास। मकरंदेऽनुरागः परेशे वैमुख्यमित्युभाभ्यां बलवत्प्रेरिता तमौषधं पीत्वा विसंज्ञा पपात।

अथ महति प्रत्यूषे परेशो विवाहौत्सुक्यान्वितो मंगळतूर्यनादैर्वधूं प्रबोधयितुमागत्य जीवत्या वासंत्याः स्थाने तस्या-मृतकळेबरं ददर्श। "हंत! कथमियमकाडे पंचत्वमुपगता। अहो विधिवक्रता। अहो कियानुद्वेगो गृहजनस्य। विवाहात्प्रागेव परित्यक्ता निष्करुणेन मृत्युना हठादाकृष्टां प्रियां पश्यन् सोरस्ताडं विललाप। ततोऽधिकतरं विलेपतुस्तत्पितरौ कपर्दिवंश्य-

प्रभुस्तज्जाया च तयोरियमेका दुहिता। अकालमृत्युना आच्छिन्ना। अनुरूपवरसमागमेन सर्वसंपत्समृद्धां सुखमेधमानां पश्यंतौ प्रहृष्याव इति महत्या आशया स्थितौ। इदानीं विवाहमहोत्सवार्थं संपादितास्सर्वे सभारा और्ध्वदैहिककर्मणि विनियुक्ताः। विवाहमंत्राणां स्थानं प्रेतकर्ममंत्रैराक्रांतं। मृदंगपणवगोमुखानकादिमंगळतूर्यनादाः प्रेतघंटानिनादैरंतरिताः। कबरीधारणयोग्यानि कुसुमदामानि शवालंकरणाय विनियुक्तानि। परिणयायाहूतः पूरोधाः प्रेतकर्म कारयिता संवृत्तः। सौभाग्याभिवृद्ध्यर्थं देवतामर्चयितुं गौरीनिलय न नीता। अपितु भूमौ निखातानां शवानां संख्यां पूरयितु पितृकाननं नीता।

शुभवार्तायाः द्रुततरं प्रसरति दुर्वार्ता। "वासंती विषयेऽत्र निर्वर्तितोऽपरकर्मकलापस्सर्वः परिहासार्थः न वास्तवः। इदं मरणस्यानुकरणमात्रं। परमार्थ इति भवता न ग्राह्यम्। तव प्रेयस्यल्पकालमेव भूगर्ते स्थास्यति। एतस्माद्भूयं करनिकेतनादल्पेनैवानेहसा समुत्तिष्ठति। भवदागमनं प्रतिपालयती"ति वार्ता सन्यासी दूतद्वारा मकरंदाय प्राहिणोत्। अस्य प्रणिधेर्मंचनगरप्राप्तेः पूर्वमेव वासन्तीमरणवार्ता मकरन्दस्य कर्णपथं गता। एतदुदन्ताकर्णनात्पूर्वं मकरंदो हृष्टचित्तेन स्थितः। तस्यां रात्रौ "अहं मृतोऽभवम्। तदा वासंती आगत्य चुंबनैर्मां समजीवयत्। अहं चक्रवर्ती संजा-

तोस्मि ।" इत्येकं विचित्रं स्वप्नं स ददर्श । विरोचनपुरीतस्समायातं वार्ताहरं दृष्ट्वा "स्वदृष्टस्वप्नसूचनानुसारेण नूनं कांचिच्छुभवार्तां श्रोष्यामीति । मकरंदो निश्चितवान्" किं तु तद्विपरीतं संवृत्तम् । वासंती मृतेति वार्ताहरो कथयामास । तच्छ्रुत्वा मकरंद उद्वेलदुःखसागराप्लुतस्तस्मिन्नेव क्षणेऽश्वं परिणद्धपल्याणं कुर्विति स्वभृत्यमादिक्षत् । नैराश्योद्विग्नबुद्धीनामनर्थचिंता क्षिप्रं जायते । यतस्स मंचनगरे केनचिद्दरिद्रभिषजा परिचितः । तस्य भेषजापणं समयागच्छन्नंतः प्रविश्य मूल्येन विषमक्रीणात् । मदेभतुल्यबलोप्यस्य विषस्य पातानिमेषमात्रेण गतासुर्भवेदिति भिषगाह ।

अथ मकरंदो भूमिगृहाभ्यंतरे स्थितां दयितां विलोक्य पीत्वेमं विषं तस्याः पार्श्वगर्ते निखातो भूयासमित्याशंसयाविषमादायविरोचननगरीं प्रतस्थे । निशीथे स तत्पुरं प्राविशत् । वृक्षवाटिकां प्रविश्य तन्मध्ये स्थितं कपर्दिवंशजानां प्राचीनां परेतभूमिं लक्षितवान् । तत्र खनित्रेणेतरखननसाधनैश्च तत्स्मारकचिह्नं भेत्तुमारभमाणः "अरे ! चोर ! नीच ! मतंगवंशजापशद ! एतद्दुष्टकर्मणो विरम विरम ।" इति निवारणवाचः अश्रुणोत् अर्धरात्रे प्रेयस्याः श्मशानं पुष्पैरवकरीतुमागतस्य परेशप्रभोर्वाणीसा मृतायां तस्यां मकरंदस्य कियाननुराग आसीत् परेशो नाज्ञासीत्। अपितु सर्वेषां कपर्दिवंश्यानां परम-

शत्रुर्मतंगवंश्यो मकरंद इत्येव जानन् संस्थितायाः प्रियायाश्श-रीरे यत्किंचित्कुत्सितं कर्म कुर्यादित्यालोच्य कोपोद्दीपितकं-ठस्वरेण तत्कर्मणो विरंतुमुज्जुघोष । विरोचननगरीप्राकारमध्ये स लक्षितश्चेद्राजशासनेन वध्य इति तं ज्ञातवान् । मकरं-दोपि "अरे परेश । दूरमपसरास्मात्प्रदेशात् मा मा सन्नि-धत्स्व । " अत्रैव निखातस्य दायबलस्य गति मानुसर त्वद्व-धेनान्यमनुष्यवधपातकभारं मच्छिरसि मा निधेहि " इत्यव-दत् । तथापि परेशः कलहकुतुकी तन्निवारणमनादृत्य जिघां-सुरिव स्वहस्तयुगळं तस्मिन् न्यधात् । मकरंदोपि तं निवार-यंस्तेन सह युद्ध्वा पशुमारममारयत् । ततो मकरंदो दीपकांति-सहायेनात्मना निपूदितस्स को वा भवेदिति जिज्ञासुस्तत्सविधं गत्वा तं परेश इति बुबोध । तस्मायेव पित्रा वासंती दित्सि-तेति मंचनगरादागच्छन्मध्येमार्गं शुश्राव । निहतं तं हस्तेना-कृष्य "इदानीं मया विधृते वासंत्याश्श्वभ्रे त्वामपि निधा-स्यामी" त्यब्रवीत् । निरुपमानलावण्यायास्तस्या अवयवसौष्ठ-वेशरीरलावण्ये च नाल्पामपि विकृतिं जनयितुं शशाक तदौ-षधरसपानजनितदीर्घनिद्रा । सा तत्र निद्राणेवालक्ष्यत । विषपानात्पूर्वं यथा तन्मुखलक्षणमद्यापि तथैवादृश्यत । अथ मकरंदस्तत्कपोले परिचुंब्य तद्भिषजादत्तं विषं पपौ । ममार च । तथैव वासंती "मकरंदो युक्तकालेनात्रागत इति वा स्वप्रबोधात्पूर्वमेवागत इति वा तं विनिदितुं संप्रबुद्धा ।

परिव्राजकोक्तप्रकारेण वासंती निद्रायास्समुत्तस्थौ। दूतद्वारा मंचनगरं प्रेषिता लेखा मकरंदंकाले न प्रापुः। ततस्स सन्यासी स्वयमेव दीपिका खननसाधनानि च गृहीत्वा वासन्तीं गर्तात्समुद्धर्तुं स्वयमेवात्राजगाम। अत्रांतरे कपर्दिवंशजश्मशाने दीपप्रकाशं रक्तसिक्ते खड्गे। मृतौ परेशमकरंदौ वीक्ष्य-आश्चर्यविद्धोऽभूत्।

अथ कथमेवं संवृत्तमिति निमित्तपरीक्षाव्यग्रबुद्धौ सन्यासिनि वासन्ती मूर्छाया उदतिष्ठत्। समीपे तं दृष्ट्वा आत्मनः स्थितिं सस्मार। मकरंदः कुत्रेति तं पप्रच्छ। तस्मा-द्गर्ताद्बहिरागंतुं तामादिशत्। अथात्रागच्छतां जनानां कल-कलध्वनिं श्रुत्वा भीतस्सन्यासी जंघाबलमेव शरणं प्रत्यपद्यत। अथ वासन्ती दयितस्य पार्श्वे विषपात्रमवलोक्य विषं पीत्वा स मृत इत्यभ्यौहिष्ट। विषशेषस्तत्र भवेदितीतस्ततोऽन्विष्यन्ती प्रियस्य विषलिप्तावोष्ठौ लिलेह। तत्रागच्छतां जनानां कंठध्वनिं श्रुत्वा कोशाच्छुरिकामादाय हृदये प्रविध्यन्ती जीवितं तत्याज।

अत्रान्तरे नगररक्षिगणस्तत्रायातः। परेशस्य किंकरः कश्चि-त्स्वस्वामिनो मकरंदस्य च युद्धसाक्षी भयेनाचक्रन्द। तदाक्रन्द-ध्वनिं श्रुत्वा पौरा आगत्य दृष्ट्वा "हाप्रिय मकरंद! वासंति! हामित्र वत्सल! मकरंद! हा अभ्युदयकाङ्क्षिन् परेश! कथं

पर्यवसितासि'' इति पर्यदीव्यन्। तत्तुमुलध्वनिं श्रुत्वा मतंगवंश्यप्रमुः कपर्दिवंश्यप्रमुश्चोभौ तत्पुरीपालकेन सह तत्राजग्मुः। परिव्राजकः कंपमानगात्रो रुदन्विनिश्वसन कतिचिद्भीरक्षिपुरुषैस्संशयजनकतया दृष्टइति राजसन्निधौ निवेदितः। कपर्दिवंश्यानां श्मशाने महान्प्रेक्षकजनसंघस्समवेत आसीत् । एतद्घोरकर्मणो हेतुं यथातत्वमाख्यातुं सन्यासी राज्ञा समादिष्टः ।

अथ स कपर्दिमातंगकुलवृद्धयोः पुरतः यथातत्त्वं यथाज्ञातमित्थमाचचक्षे । "दैवान्मकरंदवासंत्योरनुराग उदभूत्। उभयोः कुटुंबयोश्चिरकालादनुवर्तमानं शात्रवमनेन कर्मणा शांतिमियादित्याशंसयाऽस्मन्मठेऽनयोर्विवाहो मयैव निर्वर्तितः। मृतो मकरदो वासंत्याः प्रियो भर्ता। मृता वासंती मकरंदस्यानुव्रता भार्या। रहसि कृतं विवाहमजानन तत्पिता अन्यस्मै वराय परेशाख्याय वासंतीं दातुं निरचिनोत् । सा तद्विवाहमनिच्छन्ती मन्निकटमागत्याकथयत् । अहं तद्विवाहभंगाय दिनद्वयमात्रं मृतिकल्पमूर्छाप्रदं विषरसं दत्वा तत्पानाय तामचोदयम् । विवाहस्य पूर्वरात्रावेव सा तद्विषं पीत्वा मृतकल्पाऽभूत् । गृहजनेन मृतेति निश्चित्य श्मशानं नीता निखाता च। दूतकृतविलंबेन मद्विसृष्टो लेखः मंचनगरीस्थितं मकरंदं न प्राप।" इत्येतावत्कथयित्वा नेतः परं जाने इति विरराम। मृत्युस्थानाद्वासंतीमुद्धर्तुमहमत्रागत्य मृतौ परेशमकरंदावद्राक्षम् । ततः

कथाशेषः परेशमकरंदयोर्युद्धमध्यक्षीकृतवता परेशभृत्येन मंचनगर्या मकरंदेन साकमागतेन तत्किंकरेण चाख्यातः। स्वमरणसमये मकरंदः पित्रे लेखमेकं लिखित्वा मंचनगर्या आगतेन विस्रंभपात्रेण भृत्येन प्रेषयामास। यस्मिन् लेखे स इत्थं लिखितवान्। "युष्माभिरननुज्ञातोहं वासंतीमुद्वहम्। क्षंतव्योस्मि। दरिद्राद्भिषजो विषं क्रीत्वाऽपिबम्। मृतो वासंत्याः पार्श्वे शेतुं श्मशानं प्रति ममागमनप्रयोजनमिति"। सन्यासिनो वचनोपन्यासस्सर्वैः प्रमाणीकृतः।

ततो राजा मतंगकपर्दिवंशाधिपती स्वसविधमाहूय परुषवचोभिस्तावित्थं जगर्हे। "आर्यौ! युष्मत्कुटुंबयोरेतादृशपशुतुल्यवैरेण घोरकृत्यानि कृतानि। ईश्वरोप्युभयवंशयोः परस्परविद्वेषमसहमानः अन्योन्यानुरक्तान् स्त्रीपुरुषानपि घातयामास। एवं तौ राज्ञा निष्ठुरं गर्हितौ। ततः प्रभृति प्राचीनवैरमुत्सृज्य मित्री भूत्वा अन्योन्यमालिलिंगतुः। मतंगप्रभुर्वासंत्यास्स्मारकचिह्नत्वेनैका स्वर्णमयसालभंजिकामतिरमणीयां शिल्पिभिः कारयित्वा स्थापयितुं प्रतिजज्ञे। तदुपरि कपर्दिवंशप्रभुरपि मकरंदस्याप्येकां तत्तुल्यां प्रतिमां निर्मातुं निश्चिकाय। तत आरभ्यैतौ वंशौ संजातपरस्परमैत्रिकौ सुखेन कालं निन्यतुः।

समाप्तं वासंतीमकरंदम

---

## 19 King Lear—धर्मवर्मचरितम्.



Dramatis Personæ

1 King Lear = धर्मवर्मा, सिन्धुदेशाधिपतिः.

2 Goneril = गुणरिक्ता—तस्यज्येष्ठपुत्री श्रावस्तीश्वरस्य भार्या.

3 Regan = रागिणी—धर्मवर्मणो द्वितीयपुत्री । मधुरानाथस्यमहिषी

4. Earl of Kent = कान्तप्रभुः राजवल्लभः.

5 Duke of Albany = श्रावस्तीश्वरः

6 Duke of Cornwall = मधुरानगरीपतिः.

7. King of France = कुलूताधिपतिः.

8 Duke of Burgundy = मलयनरपतिः.

9. Earl of Gloucester = ग्लौचत्वरमण्डलेशः.

10 Edmund = यादोमदः.

11 Cains = वीरकः—कान्तप्रभोरपरनाम.

12 Cordelia = सरळा—धर्मवर्मणः कनिष्ठपुत्री.

# ॥ धर्मवर्मचरितम् ॥

## ( KING LEAR )



आसीत्पुरा धर्मवर्मा नाम कश्चिन्महाराजस्सिंधुदेशस्य पालकः। तस्यासंस्तिस्रः पुत्रिकाः तासा गुणरिक्ताभिधा ज्येष्ठा श्रावस्तीश्वरस्य महिषी। द्वितीया रागिण्याख्या। मधुरेशस्य धर्मदाराः। तृतीया सरळाह्वया कनिष्ठा। तत्कालेऽनूढा। यस्याः पाणिं जिघृक्षू कुलूताधिपो मलयनरपतिश्च राज्ञआस्थानीमध्यूषतुः। जराभाराक्रान्तोऽशीतिवर्षवयाश्शरीरपाटवशून्यस्स राजा चिरं प्रजापालनकर्मणा निर्विण्णो राज्यधुरं दक्षेषु युवसु निधायासीत् मृत्योरभिमुखीभवितुं सन्नद्धो बभूव। तासां तिसृणां तनूजाना मध्ये कस्याः कियती प्रीतिस्स्वस्मिन्विद्यते तत्तासा मुखेभ्य एव स्वयं विज्ञाय तदानुगुण्येन ताभ्यस्स्वराज्यं विभज्य दातुं तास्तिसृस्स्वसन्निधिमागंतुमन्वयुंक्त।

अथ तासां मध्ये ज्येष्ठा गुणरिक्ता प्रथममागत्य पितरमित्थमुवाच। "तात! त्वयि मम विद्यमानमुत्कटप्रेम वर्णयितु नालं वाग्विस्तरः। मम प्राणेभ्योपि त्वं गरीयान्। मम चक्षुषोः प्रकाशादपि त्वमभिमततरः" इति। एतत्सर्वं तस्याः कृत्रिमप्रेमैव। तस्या मनसि न किमप्यासीत्। अथ स स्थविरो

राजा तत्कपटवचनानि श्रुत्वा तत्प्रेम वास्तवमिति दृढप्रत्ययस्त-स्यै तद्भर्त्रे च स्वराज्यस्य तृतीयं भागं ददौ ।

अथ राजा द्वितीयामात्मजां रागिणीमाहूय किं वाते विवक्षितमिति पप्रच्छ । एषापि ज्येष्ठभगिनीतोप्यधिकतरकप-टमानसा जनकमेवमवदत् । "तात ! तस्यास्त्वयि प्रीतिर्म-त्प्रीत्यपेक्षया का मात्रा । मम तावदितरानंदद्वाराणि सर्वाणि पिहितानि । त्वदेकायत्तजीवितास्मीति विश्वसिहीति । " तच्छ्रुत्वा स राजा दैवकृपया तादृगपत्यानि मया लब्धानीति पर प्रहृष्टहृदयो ज्येष्ठपुत्रिकायै दत्तस्य राज्यभागस्य तुल्यभागं तस्यैतद्भर्त्रे चायच्छत् ।

अथ महीपतिः प्रथमतनूजाद्वयमिव सापि स्वश्रोत्रघूर्त्ति मधुस्यंदिनीभिर्वाग्भिरानंदयेदथवा ततोऽधिकतरप्रेमगर्भितानि दृढप्रत्ययजनकानि वचांसि ब्रूयादिति मन्वानस्सरळानाम्नीं तृती-यपुत्रिकां स्वसविधमानाययामास । तां स नृपस्तच्छैशवा-त्प्रभृति "मदानंदहेतु" रिति व्यवहार्षीत् । सरळा तु सोदर्यो-र्हृदयं तद्वाग्भ्यो दविष्ठमित्यवयन्ती तयोर्मिथ्यावाचो द्विषंती भर्तृभ्यां सह भोगानुभवाय वृद्धाद्राज्यभागमपाकृष्टुमेव तादृशीं वाग्भणितिमुदाजह्रतुरिति निश्चित्य पितरमिदमाह । " महाराज! जनयितरि बीजप्रदे दुहितुर्यावत्या भक्त्या भवितव्यं तादृशीं भक्तिमन्यूनाधिकां त्वय्यहमुद्वहामीत्येतावदेवोक्त्वा तूष्णीं बभूव ।

अथ राजा प्राणसमायाः पुत्रिकाया मुखात्तथाविधाः अकृतज्ञतापादकान्यौदासीन्यगर्भितानि वचनान्याकर्ण्य प्रकंपितहृदयो "जाते ! नार्हस्येवं भाषितुं । सम्यगालोच्य वद ।मृदू कुरुते वचांसि । नोचेद्भाग्यहानिर्भविष्यती"त्यवोचत् ।

सरळा—तात ! भवान्मे रेतोधाः पिता । अहं त्वया स्वपोषं पुष्टा । त्वमपि मयि प्रीयसेऽधिकं । अहमपि त्वय्यविचालितभक्तिः । त्वदाज्ञानुवर्तिनी । अपितु त्वय्येव मे प्रेमसर्वस्वं । नास्ति लोके त्वत्तः श्रेष्ठं वस्त्विति मत्सोदर्याविव मृषोद्यान्यमनस्कानि मुखप्रीतिकराणि वचांसि वक्तुं न प्रवर्तते मे जिह्वा यदि तयोः पितैव परमप्रेमास्पदं तर्हि ताभ्या भर्तारौ किमर्थमूढौ । यदि कदाचिदहं भर्तारमुद्वहामि तदा स ममार्धप्रेम । ममार्धश्रद्धां चार्हति । ममभगिन्याविव पितृमात्रप्रावण्याभवितुं नेच्छामि ।

स्वस्रोः कृत्रिमं प्रेम यावत्तावत्सहजं प्रेम सरळायाः पितर्यासीत् । तनूजोचितैः प्रीतिवचनैर्यदा कदावा पितरमेवं ब्रूयादेव । कपटवचनैः पितरं प्रत्याय्य पारितोषिकादानात्पितरि यथार्हप्रेमवृत्तिस्तूष्णींभावश्च वरीयान्पंथा इति मेने । तस्या इदं ऋजुत्वं प्रीत्यभिनयेन धनाकर्षणवैमुख्यं व्यक्तीचकार । तस्याः प्रतिज्ञादंभवर्जिता सत्या निर्व्याजा ।

गर्वोक्तय इति मतास्तस्या वाचो वृद्धस्य राज्ञो मन्युमुद्दीपयन् । स यौवनदशायामपि क्रोधशीलोऽविमृश्यकारी बभूव । वार्धकस्य सहकारितस्य बालिश्यं "इमा असत्या वाचः इमास्सूनृतोक्तय" इति विवेक्तु शक्तिममुष्णात् । ततो राजा कोपोद्रेकात्सराळायै इति निर्दिष्टमवशिष्टं राज्यभागं सभर्तृकयोस्तत्सोदर्योस्समं व्यभजत् ।सर्वेषा राजवल्लभाना पुरतस्स्वकिरीटमुभयधार्यमित्यनुशास्य जामातृभ्या प्रददौ । राज्याधिकारं कोश दंडं चोभयोस्साधारणमकरोत् । राजेति व्यवहारं तु स्वस्मिन्न्यवेशयत् । सर्वमितरप्रभुत्वमत्याक्षीत् । वीरभटशतपरिवारस्स राजा पर्यायेणैकैकंमासमेकैकस्या दुहितुर्गृहेपोषयितव्य इति समयश्चक्रे ।

राज्ञस्तादृशासंगतेन राज्यविभागेन विवेकशून्यत्वेन तथाविधेन क्रोधेन च सर्वे राजवल्लभा विस्मिता दुःखिताश्चाभवन् । महाराज ! नेदृशी प्रवृत्तिरुचिता तवेति वक्तुं तत्त्वत्याना मध्ये एकोपि न दधर्ष विहाय कांतप्रभुनामानं कंचिद्राजवल्लभं स तपस्विन्यास्सरळाया विषयेऽनुकूलमेकं वचो निगदितुमुद्यतः क्रुद्धेन राज्ञा "पिधेहि ते मुखं" इत्याज्ञप्तः । अपितु सज्जनाग्रणीर्विवेकी सप्रभुस्तथा न प्रत्यादेष्टव्यः । स सर्वदा राज्ञि अनुरक्तः । स तं दैवमिव पूजयामास । पितरीव पिप्रिये । प्रभुमिवानुववृते । राजशत्रुभिस्समुपास्थितेषु

संग्रामेषु जरत्तृणवत्स्वजीवितं हातुमसकृदुद्युक्तः। राज्ञः प्राणात्यये संप्राप्ते स्वप्राणव्ययेन तमभिरक्षितुमयतत। इदानीमपि राजा न तस्य शत्रुः। न वा कृतज्ञोयं राजभृत्यस्तत्याज प्राचीनसद्वृत्ति। कितून्मत्तोऽसौ एवमविनयरीत्यैव गर्हयितव्य इति मत्वा तस्यैव श्रेयसे प्रत्यवतस्थे। पुरा स राज्ञो विश्वसनीयधीसचिवश्चिरमासीत्। मत्कृतोपदेश आदरणीयः भवदिदानींतनासमीक्ष्यकारित्वं हातव्यमिति राजानं प्रार्थयाचक्रे। कपटहृदये तवेतरे पुत्रिकेऽधिकतरभक्तिमत्यौ। सरळा भक्तिहीनेति मंतुं नोचितमिति विज्ञापयामिः भवंतं यथाशक्ति मृषास्तुतिलोला तथा सम्मानः आर्जवमनुबध्नाति। तस्य जीविते तदायत्ते राज्ञो बिभीषिका कि कर्तुं शक्नुयात्।

अथ कांतप्रभोरनेनोपदेशेन राज्ञः कोपो वृद्धिं गतः। प्रियव्याधिर्भिषग्वैरी उन्मत्तो रोगीव आप्तं सचिवं तं देशान्निर्वासयामास। तस्य प्रयाणसज्जीकरणाय पंच दिनानि राज्ञा निर्दिष्टानि। स षष्ठेऽह्नि स्वराष्ट्रे यत्रकुत्रचिद्दृष्टश्चेत्तस्य वधदंडो विधास्यत इति राजा समाज्ञापयत्। अथ कांतप्रभू राजानमामंत्र्य "यतोभवानेवंभूतस्संवृत्तस्ततोऽत्र मेऽवस्थानात्प्रवासएव वरमिति मन्ये" इत्यवदत्। सस्वदेशत्यागात्पूर्वमीश्वरस्य रक्षणे न्यधात्सरळां या समीक्ष्यकारिणी सरळस्वभावा च। तत्सोदर्योः प्रगल्भा वाचः सहजप्रीत्यनुसृतक्रियानुबद्धा भवेयुरित्याशशं-

स। स विदेशेपि प्राचीनमार्गमेवानुसरिष्यामीति निश्चित्य जगाम। कनिष्ठपुत्रिकाविषये आत्मनश्चिकीर्षितं श्रावयितुं राजा मलयनरपतिं कुलूताधिपं च स्वनिकटमाजुहाव। सरळा पाणिग्रहणे तयोर्निश्चयं पप्रच्छ। "तस्या निस्स्वतया पितुर्निग्रहपात्रतया च तामुद्वोढुं नोत्सहे" इति मलयनरपतिः प्रत्यवदत्। कुलूताधिपतिस्तु तस्या निर्दोषत्वं तस्यां पितुर्विरागकारणं भगिन्याविव मृषास्तुतीर्विरचयितुं वैमुख्यं सम्यग्जानंस्तां गृहीत्वा हस्तेन "सरळे! अहं ते पाणिं ग्रहीष्यामि। त्वत्सुगुणसंपत्तिरेव मम राज्यादधिकतरं यौतकं। क्रुद्धं पितरं भगिन्यौ चामंत्रय मया सहागच्छ। कुलूताधिपतेर्ममाग्रमहिषी भव। भगिनीभ्यां पृथुलतरराज्यस्येशित्री चिरमेधि" इत्युवाच। अथ समलयनरपतिमुद्दिश्य "भवान् जलवल्लघुः। सरळायां भवदनुराग एकस्मिन् क्षणे जलवत्प्रसुस्राव।" इति सासूयमाह।

ततस्सरळा उदश्रुलोचना भगिन्या वा पृच्छ्य स्वकृतप्रतिज्ञानुरोधेन पितरि वर्तेतामित्याह। ते तु "आवामपि धर्मं जानीवहे। त्वं तावत्तव भर्तारं शुश्रूषस्व" इति प्रत्यूचुः। सरळा शोकगुरुणा हृदयेन भर्त्रा सह निष्क्रांता।

अथ सरळाया निर्गमनानंतरं तस्या भगिन्यो रतिदुष्टस्वभावस्स्वरूपेण ददृशे। कृतसमयानुगुण्येन गुणरिक्ता

गृहेराज्ञा यापयितव्ये प्रथमे मासि नातिक्रांते स्थविरो दुहितृकृत-
प्रतिज्ञानांतन्निर्वहणाना च वैषम्यं लक्षितुमारेभे । इयं वराकी
गुणरिक्ता किरीटप्रभृति सर्वस्वं तस्माद्पाच्छिद्यस्व प्रभुत्वानुवृत्तये
स्वतृप्त्यै स्वस्मिन् स्थापितानि राजचिह्नानि कतिचिद्वशिष्टानीति
चुकोप । वीरभटशतानुयातं नृपति द्रष्टुमपि न सेहे । यदा
यदा स दृष्टिपथं गतः तदा तदा कोपोपरक्तमुखी आबद्धभ्रु-
कुटी बभूव । राजनि तां द्रष्टुं तया सह भाषितुमभिलषति सा
शरीरास्वास्थ्यं व्यपदिश्य तस्य दर्शनं परिजहार । स आत्मनो
भारभूत इति मेने । वीरभटपोषणमसद्व्यय इति निश्चिकाय ।
न केवलं सा । अपितु तस्या दुरुपदेशैस्तद्भृत्या अपि तस्य
परिचर्यामुपेक्ष्य तमवज्ञातुं प्रचक्रमिरे । तस्याज्ञामुल्लंघ्य तस्मिन्
जुगुप्सा दर्शयामासुः । राजा ज्येष्ठपुत्रिकायाः प्रवृत्तौ व्यत्यासं
बुबुधे । तथापि यावत्सोढुमशकत्तावच्चक्षुषी निमील्य तूष्णीमा-
सीत् । यतो मनुष्याः प्रायशो लोके स्वापराधजनितानर्थेष्व-
विश्वासा भवेयुः । इदं कातप्रभूदाहरणे स्पष्टं दृष्टं । यो राज्ञा-
देशान्निष्कासितो राष्ट्रे यत्र कुत्रापि दृष्टश्चेद्वध्यो भवेदित्यादि-
ष्टोपि स्वप्रभुं सेवितुं यावदवकाशो लभ्यते तावत्तत्रैव प्रच्छन्न-
वेषेण स्थातुं तत्फलमनुभवितुं निरचैषीत् । राजभक्तिर्नीच-
कृत्यानि कर्तुं नीचवेष धारयितुं मनुष्यं कथं बलात्कुरुते पश्य-
त । तथापि यत्रोपकार्योपकारकसम्बन्धो विद्यते तत्र सेवावृ-
त्तिर्नीचतां नापादयति । स्वगौरवं च न भनक्ति ।

तथा कान्तप्रभुस्स्वगौरवं स्वविभवं पृष्ठतः कृत्य किंकरवेषप्रच्छन्नो राजानं सिषेवे। सोऽप्ययं मत्प्राचीनमित्रं कांतप्रभुरित्यजानंस्तस्य निष्कापट्येन निर्व्याजभक्त्या च भृशं संतुष्टः। पुरायं मम मित्रं स एवासौ कान्तप्रभुरिति तं प्रत्यभिज्ञातुं न शशाक।

अयं वीरकापरनामा कान्तप्रभूराजन्यत्यंतभक्तिविश्वासं दर्शयितुमुपायं क्षिप्रमलक्षयत्। यतस्तस्मिन्नेव दिने गुणरिक्तायाः किंकराध्यक्षः कश्चित्पुरुषभाषणैराजानमधिक्षिप्यावज्ञातवान्। स्वामिन्या प्रणुन्नेन तेन किंकरेण कृतं प्रत्यक्षावमानममृष्यमाणो वीरकस्तत् क्षणमेवाश्रमेण तस्य पार्ष्णि स्खलनेन भूमौ पातयित्वा भषकगृहे निरास्थत्। एतादृशप्रीतिपूर्वकसेवया राजा तस्मिन्नधिकतरं प्रीतिमानभूत्। न केवलमयमेव राज्ञो मित्रम्। अपित्वपरः कश्चित्तपस्वी वैहासिकः राज्ञः प्राचीनऋद्धौ बभूव। तत्काले राजानः प्रभवश्च राज्यतंत्रावेक्षणजनितबुद्धिक्लेशापनोदनाय चित्तरंजनाय चैकं विदूषकं स्वनिकटे स्थापयामासुः। अयं दरिद्रो विदूषको राज्याधिपत्यत्यागानंतरं राजन्यानुबन्धवानासीत्। प्रभुत्वपरित्यागे दुहितृभ्यां कृत्स्नराज्यप्रदाने तस्याविवेकं तस्य बोधयित्वा कदाचित्तं परिहसतिस्म। नर्मोलापैर्गीतिभिश्च चित्ताकर्षकोयमकुटिलबुद्धिर्विदूषको निंदागर्भितैः परुषवचनैर्गुणरिक्ताया दुश्शीलं तस्यास्समक्षमेव व्यवीवृतत्।

कोकिलशिशून् शैशवात्प्रभृति स्वयं परिपोष्य क्रमेण वृद्धिं गमितैस्तैरेव शिरस्यवताडितेन काकेन राजानमुपमिमे। अश्वेनोह्यमानं शकटं पश्चादश्वः पुरतो गच्छतीति गर्दभोपि जानाति। अस्य वाक्यास्यायमाशयः। पश्चात्कर्तव्ये राज्ञः पुत्रिके इदानीं राजानं पश्चात्कृत्य तत उच्चतरपदवीमास्थिते इत्यर्थः। अयं राजा पूर्वव्यक्तिर्न। इदानीं तस्य छायैवावशिष्टा। एवं विधैस्स्वैरालापैर्विदूषकेनावमानितो राजा परिकुपितः कशया तं ताडयामीत्यभाययत्।

प्रेमान्ध्येन मूढोयं राजा अनार्यायाः ज्येष्ठदुहितुर्गुणरिक्ताया न केवलमपरागमपि त्वनादरणमप्यलक्षयत्। "वीरभटशतपरिवारेण मम मंदिरे तवावस्थानं मम क्लेशं ददाति। अयं भटसंघो निरुपयोगो बहुधनव्ययस्य हेतुः। एते अश्नीत पिबतीयंतः कोलाहलकारिणो मम मंदिरमाक्रामंति। तेषां संख्या न्यूनीकुरु। भवतस्सवयस्कान्वर्जयित्वा इतरान्गृहं प्रेषय।" इति पितरं गुणरिक्ता निर्बबंध। स्वस्मादागृहीतराज्यैकभागा एवं निर्दयं भाषमाणा स्वसुता गुणरिक्तेति राजा न प्रत्येयाय। आत्मनोऽभ्यर्थनां मानयितुं सा पुनः पितरं निरबध्नात्। तदुपरि राजा नितांतमभिक्रुद्धः "धिक्त्वां कुलपांसनीम्" इति तां निनिंद। शतं वीरभटास्सद्वृत्तयस्स्वनियोगनिरताः स्वस्वकर्मण्यभियुक्ताः सभ्याश्च। अथ राजा वीरभट-

शतसहितो द्वितीयपुत्रिकाया रागिण्या गृहं जिगमिषुर्वा-जिनस्सपळ्याणान्कर्तुं भृत्यानादिदेश । तां गुणरिक्तां कृतघ्नेति राक्षसीति दृषन्मयहृदयेति दुश्श्रवैर्वचनैः कुत्सयांचक्रे। "एषा अपुत्रा भवतु । अथवा पुत्रिणी चेत्सोपि पुत्रस्संवृद्धो यथेयं मांद्वेष्टि तथेमां स द्वेष्टु" इति ता शशाप । कृतघ्नः पुत्र-स्सर्पदंष्ट्राया अपि क्रूरतरः । इति जानातु" इत्यवदत् ।

अथ गुणरिक्तायाः पतिश्श्रावस्तीश्वरो राज्ञस्सन्निधि-मागत्य "महाराज! शृणु मे विज्ञापनम् । मम भार्यया सहा-हमपि भवंतमवज्ञातवान्" इति मा संभावय। भवतोऽवमा-नेनाहमंशभाक् । ततोऽहं क्षंतव्यः" इति प्रार्थितवान् । राजा तु तद्वचनमनादृत्य क्रुद्धो नोत्तरं प्रत्यपद्यत । अथ रागिण्या गृहं गंतुं कृतसन्नाहोऽभूत् । गुणरिक्तापराधापेक्षया सरळाया अपराधोऽणुरपि न भवेदिति मनस्यालोच्य रुरोद । मम दुःखदायास्तादृश्या नीचायास्तावतोऽधिकारस्य दानं ममा-नुचितमिति भृशं पश्चात्तप्तोऽभूत् ।

रागिणी तद्भर्ता च स्वभवनेऽधिकविभवेनास्थानीमध्य-तिष्ठताम् । राजा स्वागमनं सूचयन् स्वाराधनाय सज्जीभवितुं स्वभृत्यं वीरकनामानं प्रथमं तत्र प्राहिणोत् । तदनु सपरि-वारो जगाम । गुणरिक्ता त्वतः पूर्वमेव "अस्मत्पिता दुष्प्र-कृतिरविधेयः । महतानुयायिसंघेन युष्मत्सदनमागच्छति ।

ततस्तं माद्रियस्व" इत्युपदिशंती स्वलेखं प्रजिघाय। असौ लेखहारको राजभृत्यो वीरकश्च युगपदेव तत्र जग्मतुः। उभावत्र संगतौ। एष एव वीरकस्य प्राचीनवैरी। यं वीरको राजविषये कृतापराधं तं स्खलितपार्ष्णिं कृत्वाऽधः पातयामास। वीरकस्तस्य दर्शनं परिहरंस्तदागमनं परिशंकमानस्तं नियुद्धायाह्वयत। स प्रत्याचख्यौ। वीरकस्तु कोपसंरक्तलोचनस्तं लगुडमादाय दृढं प्रजहार। तादृशदुष्कर्मकारिणो दुष्टवार्ताहराश्च ताडनमर्हन्ति। रागिणी तद्वल्लभश्च बहिरागत्य दृष्ट्वा मान्यं पितुस्संदेशहारिणं वीरकं हडिबद्धं कारयामासतुः। राजा दुहितृमंदिरं प्रविशन्नेव प्रतिहारभूमौ तथाविधदंडमनुभवंतं भक्तं शक्तं स्वभृत्यमद्राक्षीत्। द्वितीयपुत्रिकाया गृहे राज्ञाऽपेक्षितस्यादरस्येदमेकमपशकुनं। इतोऽधिकतरमन्यदापपात। "दुहिता जामाता च कुत्रासाते। ताभ्यां निवेदनीयं ममागमनम्" इति राजनि वार्तां प्रेपितवति "तावध्वखेदाखिन्नौ। तयो रात्रौ निद्रा नासीत्। इदानीं तौ गाढनिद्रानिमग्नौ। बोधितुं न युज्यते। ततो भवंतं द्रष्टुं न शक्नुयाताम्" इति कश्चित्प्रत्युत्तरं ददौ। तदुपरि "तावुभाववश्यं मया द्रष्टव्याविति" राज्ञि साग्रहं निर्बध्नति सति स्वागतवचनेन वृद्धमभिनंदितुं तौ जायापती बहिराजग्मतुः कनिष्ठभगिन्या मनसि पितर्यपरागमुत्पादयितुं स्ववृत्तांतं तस्यै निवेदयितुं तत्रागतां गुण-

रिक्तामपि तयोर्दंपत्योर्मध्ये वीक्ष्य चकंपे राज्ञो हृदयम् । रागिणीं हस्तेन गृहीत्वा गृहाद्बहिरागता तामवलोक्य पलितशिरसं जराजीर्णांगं पितरंमामनादृत्य लोकनिंदापात्रं भूत्वा किं न जिह्रेषीति " गुणरिक्तामपृच्छत् । अनुचरान्सत्यज्य गुणरिक्ता गृहं गत्वा तया परिचर्यमाणस्तया सह सुखमास्व ममापराधान् क्षमस्व " इति सानुनयं रागिणीपितरमशिक्षयत् । यतो जरातिभारप्रमुषितविवेकोयं विचक्षणैश्शासनीयो रक्षितव्य इति तस्या अभिप्रायः । जराग्रस्तो महीपालः पद्भ्यां गत्वा स्वदुहितरं मम ग्रास वाससी देहीति याचना कथमसंगता प्रतिभाति पश्येति राजा रागिणीमवोचत् । "तस्माद्गुणरिक्ताया गृहं गंतुं नेच्छामि । तामाश्रित्य मम जीवनं नोचितं । वीरभटानां शतेन सहितोत्वैव निवसामि । एष मे निश्चयः । मयादत्तेन राज्यार्धभागेन सा मयि कृतज्ञतां वहति । गुणरिक्ताया दृष्टिरिव रागिण्या दृष्टिर्न क्रूरा । अपितु शाता कृपाभरिता च । " इति मे मतिरासीत् । तदिदानीं विपरीतं सवृत्तं । अर्धच्छिन्नेन परिवारेण गुणरिक्ताया गृहेऽवस्थानात् शुल्कमगृहीत्वा मत्कनिष्ठपुत्रीमुदूढवंतं मत्तृतीय जामातरं कुल्लूतदेशाधीश्वरं गत्वा कुत्सितमासभृतियाचनं वरमिति मन्ये गुणरिक्ताया रागिणी स्वस्मिन्नधिकतरादरा भविष्यतीति राजा भ्रांतिमियाय । पितृभक्तिशून्यतायां ज्येष्ठसोदरीमतिशयाना रागिणी तमन्वासितुं पंचा-

शद्वीरभटानापेक्ष्याः । पंचविंशतिरेव पर्याप्तमिति मे मतिरित्यवदत् । ततो राजा तच्छ्रुत्वा गुणरिक्ताभिमुखो भूत्वा "पंचाशद्वीरभटैरेवालमिति त्वयोक्तत्वात्तव गृहे निवसामि । रागिण्यनुरागात्तवानुरागो द्विगुणितः । " इति राजा जगाद । अथ गुणरिक्ता क्षंतुं पितरं प्रार्थयमाना "तात सेवकानां पंचाशता वा पंचविंशत्यां वा पंचकेन वा किं प्रयोजनं । त्वा परिचरितुं मदीयाः किंकरास्संत्येव" इत्यब्रवीत् ।

एवमेते क्रूरात्मानौ भगिन्यौ रागिणी गुणरिक्ते वृद्धे वात्सल्यभरिते जनके क्रौर्यप्रदर्शनाय परस्परस्पर्धावत्याविव शनैश्शनैस्तस्य परिवारं भूतपूर्वराजत्वावेदकसम्मानं ह्रासयितु प्रायस्यताम् । न बहुपरिवारस्सौख्यदायी । अपितु पुरा सकल महीमंडलाधिपस्सर्वसंपत्समृद्ध इदानीं भिक्षाचरः पूर्वं भटसहस्रसेव्यमानः इदानीमेकाकी इत्येतादृशो दशापरिवर्नस्तस्य हृदयं व्यदारयत् । भाव्यनर्थमपरिज्ञायाविमृश्यकारितया आत्मजाभ्यां राज्यदानात्तदनादरजनितमनोव्यथया स राजा नष्टबुद्धिरितिकर्तव्यतामूढोऽजनि । घोरनिशाचरीकल्पयोरेतयोर्वैरनिर्यातनं कर्तुं सशपथमकरोत् । लोके भयहेतुत्वेन ते स्थापयितुं निश्चिकाय ।

एवं तस्मिन् राज्ञि निजतनये संत्रासयति सति निशोपगता । पयोधरभीषणगर्जारवमुखरितदिङ्मंडला समा-

रुता चंडवृष्टिरापपात । "परिवारो मास्तु ते" इति तौ दुहितरौ तं निर्बबंधतुः । एतयोरकृतज्ञयोर्दुहित्रोर्गृहे निवाससौख्यात्सर्वतो व्याप्तप्रचंडतरजंझामारुताभिघात एव वरमित्यमंस्त । अविवेकिनां स्वयं बुद्धिपूर्वकोत्पादिताः क्लेशा एव तेषां तीव्रदंडो भवतीति वदंत्यौ ते भगिन्यौ एवं भूतदारुणसमये पितुरपक्रमणमनुमेनाते ।

अथ जंझावातः क्रमेण घोरतरोऽभवत् । वृष्टिस्त्वविषह्यं ववृधे । तदा राजा दुहित्रोर्निर्दयत्वादपि निशाततरैर्वाय्वादिभूतैर्युध्यमानो निर्जगाम । द्राघीयस्यध्वनि प्रगतेप्येकः कुंजोपि नादृश्यत । अंधकारावृतनिशायां गम्यमानाध्वा प्रबलतरवातागम्यो मरुधन्वेव । मारुतं मेघगर्जनमशनिपातांश्च तृणीकृत्य राजा प्रचक्राम । सर्वां भूमिं कबळयितुं समुद्रतरंगानादिदेश । अस्मिन्समये वैहासिकं विहाय न कोप्यासीत्तस्यानुयायी । राजा यथा स्वदुर्दशां न स्मरति तथा तं परिहासवचनैः प्रहर्षयन्नेक एवानुययौ । "इयं दुष्टरात्रिर्यापयितुमशक्या । राजा सुखेन गत्वा दुहितुरुपकांति याचितुमयं साधीयानवसर इति परिहासवचास्यवोचत् । राज्ञा अज्ञातेन भृत्यवेषधारिणा वीरकापरनाम्ना कांतप्रभुणा राजा सदाऽन्वयायि । राजा तमवलोक्य इदमाह । आर्य ! हन्त त्वमप्यत्रास्से । क्षपाचरा जंतवोपीदृशीं शर्वरीं सोढुं न शक्नुवंति । अरण्य-

मृगा अपि वायुप्राचंड्यनिरस्ता निगूढं स्वनिलयेषु तिष्ठन्ति । मनुष्यस्वभावो दुःखं वा भयं वासोढुं न क्षमः । इतोऽधिकतरविपत्सूपस्थितासु एतेऽल्पानर्था अनुभवपदवींनारोहंति । मनसि स्वस्थे शरीरं मार्दवं भजति । हृदयमर्मच्छेदकदुःखानुभवं वर्जयित्वा ममेतरेंद्रियज्ञानमपाहरच्चंडवातः । ततस्स्वदुहित्रोरविश्वासमुद्दिश्य भाषमाणः पुनरुवाच । इदं सर्वं तयोर्दुष्प्रवृत्तिः । अन्नकबळदानेनात्मान पुष्यंतं हस्तं मुखं छिनत्तीतिवच्छिशूना पोषकयोः पित्रोरविश्वासप्रवृत्ति रिति"

अथ वीरको मारुताघातदुर्भरे जांगले भवता न स्थातव्य । तत्र दृश्यमाना कुटी प्रवेष्टव्येति राजानं प्रेरयतिस्म । तत्रप्रथमं विदूषकः प्रविश्यावलोक्य "हंहोत्रदारुणः पिशाच इति संत्रस्तस्ससंभ्रमं पश्चादधावीत् । ततो वीरकेण सम्यङ्निरूपितेतत्र स्थितः कश्चिद्दरिद्रो भिक्षुर्वाताघातासहिष्णुरात्मानं रक्षितुं तत्र प्रविष्ट इति स्पष्टीकृतः । पिशाचप्रस्तावनया भीतो विदूषक इदमवादीत् । "केचिदुन्मत्तावा उन्मादं व्यपदिशंतोवाग्रामवाटिकास्वटंतोऽयश्शंकुभिश्छुरिकाभिः कंटकैश्च शरीरे क्षतं कृत्वा रुधिरोद्गारेण जानपदान्भीषयन्तो भिक्षंते" । इति राकवमात्रपरिच्छदं दुर्गतमेन दृष्ट्वा राजा मनसीत्थमचिंतयत् । "नूनमसावपि स्वदुहितृभ्यस्सर्वस्व दत्वा निस्स्वीभूतोऽहमिव

ईदृशीमवस्थां गमितः कश्चित्पितेति मन्ये । दुष्टकन्यापितृत्वं वर्जयित्वा लोके मनुष्यस्य नान्यो दुर्दशाहेतुः ।

अथैवंविधैर्वचनैरन्यैरुन्मत्तप्रलापैश्चायं नरपतिर्लुप्तमनःस्वास्थ्य इति दुहित्रोरनादरएवास्य वैमनस्यस्य हेतुरिति वीरको निश्चिकाय । राजनि दृढभक्तिरसौ वीरक इतः पूर्वं कृतेभ्य उपचारेभ्योऽधिकतरानुपचारान्कर्तुमवकाशमलभत । यतः केषांचिद्राजानुचराणा सहायेन प्रातः काले महाराजं द्वारदुर्गं नाम दुर्गं प्रापयत् । यत्र वीरकस्य प्रभुतामित्राणि चासन् । अधुना सः स्वयं कुलूतदेशं गत्वा सत्वरं सरळामंदिरं प्राप्य तस्या हृदयं यथा शोकेन द्रवीभवति तथा पितुर्दुर्दशां वर्णयामास । तच्छ्रुत्वा सदयान्तःकरणा सरळा साश्रुलोचना सती भर्त्रनुज्ञामवाप्य तद्दत्तेन महता सैन्येन सभर्तृके सोदर्यौ प्रमाथितुं तं देशं जगाम ।

अथ राजा स्वरक्षणार्थं कांतप्रभुणा स्थापितं रक्षिपुरुषवर्गं वंचयित्वा बहिः प्रचलितः । द्वारदुर्गस्य प्रत्यासन्नेषु क्षेत्रेषूच्चैर्गीतानि गायंस्तत्र लब्धैस्तृणैर्विरचितं मकुटं धारयन्नितस्ततस्संचरन्सरळाभृत्यैर्दृष्टः । एतदवस्थं पितरं द्रष्टुमत्यर्थमुत्कंठितापि गाढनिद्रया औषधैश्च न यावदधिकतरमनःप्रसादमधिगच्छति तावत्तं द्रष्टुं नोचितमिति भिषजामुपदेशेन सरळापितृदर्शनाद्व्यरमत् ।

रुग्णं पितरमुल्लाघीकर्तुं सरला आत्मनस्सर्वाणि स्वर्णाभरणानि भिषग्भ्यो दातुं प्रत्यश्रृणोत् । भिषजामुपक्रमचातुरीवशाद्राजा द्रुतं दुहितरं द्रष्टुं शशाक । पितृदुहित्रोस्समागमं द्रष्टॄणामाह्लादकरोऽभूत् । प्रियतनूजापुनस्संदर्शनसंजातहर्षस्य राज्यभागमदत्वा निरस्तायास्तस्या दर्शनादुत्पन्नलज्जायाश्च राज्ञो मनसि महान्विवाद उदपद्यत । एताभ्या द्वाभ्यां मनोविकृतिभ्या हर्षलज्जाभ्यां व्याधिशेषोऽव्यवादीत् । एतस्यामवस्थायां स यत्र स्थितस्तं प्रदेशं विसस्मार। दयया भाषमाणां सरळा प्रत्यभिज्ञातुं नाशक्नोत् । "एषा मम पुत्रिकेति मेमतिः । यद्यत्रमे भ्रांतिस्तदा मां मोपहसत । " इति स वृद्धः पार्श्वचरानुवाच । मा क्षमस्वेति तस्याः पादयोरपतत् । सा साध्वी सरळा पितुः पादयोः पतित्वा "तात नेदमुचितं तव वृद्धस्य शिशोर्मे पादयोः पतनं । शीतबाधया स्वगृहेऽग्निपार्श्वे निषण्णं शत्रोः कुक्कुरमपि यस्या निशायां बहिर्नापसारयेत्तस्यां निशायां जरातुरं नष्टमनस्स्वास्थ्यं पितरं "नेतःपरमस्मद्गृहे स्थातव्यम् । इष्टदेशं गच्छ" इति निर्दयमुक्त्वा बहिर्निष्कासनं किं न तयोर्लज्जामुदपादयत् ? तात ! तव सहायार्थं सैन्यमानेतुं कुलूतदेशमगच्छम् । " इत्यब्रवीत्सरळा । राजा । वत्से ! जराग्रस्ततया बालिश्येन च त्वयि यन्मया कृतं तत् क्षमस्व । मा

मनसि कृथाः । मय्यपरक्ता भवितुं तव प्रबलकारणमस्ति -। तयोर्न किमपि ।

एवममुं वृद्धं राजानं भक्तिमत्या गुणवत्या सरळायारक्षणे निधायोपरि गच्छामः । ज्येष्ठपुत्रिकयोः क्रौर्येण बलवद्व्याकुलीकृतानि तस्येंद्रियाणि निद्रया औषधबलेन च सरळा भिषजश्च समाधातुं शेकुः । क्रूरात्मानौ तद्दुहितरावुद्दिश्य किंचिद्ब्रूमः ।

पितरि विमुक्तागपाटवे गाढविद्वेषे एते राक्षस्यौ भर्त्रोरधिकतरदुष्प्रवृत्ती अभूताम् । "आवयोः प्रीतिर्नास्ति युवयोः । आवां परस्मिन्पुरुषेऽनुरक्ते" इति स्पष्टमवादिष्टाम् उभयोरप्यनुरागभूमिरेक एव । सः ग्लौचत्वरमंडलस्येशितुरनौरसः पुत्रः । योऽसत्यसंधो विश्वासघातुको ऋजुशीलं निरागसं सुमित्रनामानं स्वभ्रातरं पितृरिक्थेऽनधिकारिणं कृत्वा तद्राज्यं बलात्कारेणाक्रंस्त । दुरात्मनो रागिणीगुणरिक्तयोरनुरूपोयं कामुकः । एतस्मिन्नंतरे मधुराधिनाथो देवभूयं गतः । रागिणी भर्तृमरणसमनंतरमेव ग्लौचत्वरमंडलाधिपतिं यादोमदमुद्वोढुं स्वाभिलाषं प्रकटीचकार । पुरा कदाचिदयं खलोमंडलाधिपतिः "युवयोरुभयोर्भगिन्योरहमनुरक्त इति प्रतिज्ञातवान् । ततो गुणरिक्ता स्वसोदर्यां संजातसपत्नीमात्सर्या विषदानेन रागिणीममारयत् । एतत्क्रूरकर्माचरंती

सा स्वभर्त्रा संलक्षिता निगळितहस्तपादा चारके निक्षिप्ता। सा तत्रात्महत्यामकरोत्। एवमंते सेवश्वरस्यन्यायोधर्मवर्मणो राज्ञः पुत्रिकाद्वयमंतं नीतवान्।

"अहो ईश्वरस्य महिमा अन्यादृशः" इति प्रशंसमानानां सर्वेषां जनानां दृष्टावेतद्वृत्तांतदर्शनोन्मुख्यां यापरमसाध्वी स्वसत्कर्मभिर्मंगळपर्यवसानमर्हति सैवशोचनीयमंतं प्रापितेतीश्वरसंकल्पो दुर्ज्ञेय इति प्रसंगेऽकस्माद्विनिवृत्ता।

धर्मनिष्ठानिर्दोषत्वं चेत्युभयमपि न जातु विजयं प्राप्नोति। रागिणी गुणरिक्ताभ्या प्रहितानि बलानि लब्धविजयान्यभूवन। आत्मनो राज्यप्राप्तये सरळा प्रतिबंधकीभूतेति मत्वा दुष्टो मंडलेश्वरस्ता बंधनागारे व्यापादयामास। निरागा एषा पितृभक्तेरुदाहरणभूतेति लोकस्य प्रदर्श्य सति दीर्घकाले जीवितुं बाल्यएवकालरूपीभगवान् जग्रास तां वृद्धो धर्मवर्मा च तस्या अनंतरमचिरादेव यशश्शेषोऽभूत्। तस्मिन् जीवति सति श्लाघनीयचरितः कातप्रभुः दुहित्रनादरणकालमारभ्य तस्य शोचनीयां चरमदशा यावत्तमुपसेवमानस्तस्थौ। वीरकापरनाम्ना इयंतं कालं भवंतं परिचरं स्थितोहं कांतप्रभुरस्मि" इति तेन बोधितोपि राजा चिंताविलुप्तमेधाशक्तिः "कथं वीरकः कातप्रभुर्भवेदिति शंकमानो ज्ञातु न शशाक। कातः पुरा वृत्तबोधनैस्तं बाधितुमस्या-

मवस्थायामनुचितमित्यमन्यत । राज्ञस्स्वर्गमनानंतरमेवासौ कांतः प्रभुः प्रभुवियोगव्यथितमनास्तस्य पदवीमेवान्वगात् । लोकेऽभिव्यक्तद्रोहकृत्यो ग्लौचत्वरमंडलेश्वर ईश्वरसंकल्पेन कथमाच्छिन्नः भ्रात्रा सह द्वंद्वयुद्धे कथमवसादितः । गुणरिक्ताया भर्ताश्रावस्तीश्वरो मान्यगुणो निर्दोषस्सरळावधानिमित्तो राज्ञोनंतरं तद्राज्यमधिजगाम । इत्येतत्कथाप्रवचनं निष्प्रयोजनम् । राज्ञो धर्मवर्मणस्तिसृणां तद्दुहितॄणां च वृत्तांत एवास्मत्कथाविषयः ।

समाप्तं धर्मवर्मचरितम् ॥

---

PRINTED BY V RAMASWAMY SASTRULU & SONS,
AT THE 'VAVILLA PRESS,' MADRAS—1933